**छुरिका ।** स्त्री । धन्यायाम् गवि । पालङ्कशाके । भा. । अस्त्रभेदे । छूरि । तत्पर्य्यायः,—असी, असिपुत्री, असिधेनुका (अ.), छुरी (भ.), खुरी, कुरी, कृपानिका, धेनुपुत्री (हे.), छुरिका (शब्दर.) ।

**छुरिकापत्री ।** स्त्री । श्वेतानामक्षुपे । रा. नि. व. ५ ।

**छुरिपत्रिका ।** स्त्री । वृश्चिकालीलतायाम् ।

**छुरी ।** स्त्री । छुरिकास्त्रे । हे. । छूरी ।

**छेकः ।** पुं । गृहासक्तपक्षिणि । मृगे । मे. ।

**छेदः ।** पुं । खण्डे । निका. । व्रणादिच्छेदने । स चतुर्व्विधः गोतीर्थकः सर्व्वतोभद्रः दललाङ्गलकः लाङ्गलकाख्यश्च । "पार्श्वं गतेन शस्त्रेण छेदो गोतीर्थको मतः । सर्व्वतः सर्व्वतोभद्रः पार्श्वच्छेदोऽर्द्धलाङ्गलः । पार्श्वद्वये लाङ्गलकः ॥" तत्र गोतीर्थकः काव्यगत-गोमूत्रिकाकारः । सर्व्वतोभद्रः भद्रकाद्याकारः । य एकस्मिन् पार्श्वे छेदः दललाङ्गलकः । कुटासहितहलाकारः पार्श्वद्वये यश्छेदः स लाङ्गलकाख्यः सम्पूर्णहलाकारः । वा. उ. २८ अ. अरुणः ।

**छेदकम् ।** क्ली । कान्तलौहे । रा. नि. व. १३ ।

**छेदनम् ।** क्ली । द्विधाकरणे, कर्त्तने । वायुजन्यव्रणवेदनायाम् । सु. सू. २२ अ. । कफादिनाशकौषधवर्गे । यथा त्रिकटु ।

**छेदनीयः ।** पुं । कतकवृक्षे । निर्म्मली । रा. नि. व. ११ ।

**छेदारः ।** पुं । शल्लकी-नाम जन्तुभेदे । शब्दर. । सजारु ।

**छेदी ।** त्रि । विश्लेषकरे । वा. सू. टी. हेमा. । पुं । कतकवृक्षे । दे. निघ. ।

**छेद्यः ।** त्रि । निःशेषं छेदार्हे । ते च भगन्दरादयो रोगाः । सु. सू. ५ अ. । पुं । कपोतपक्षिणि । र. ।

**छेद्यकण्ठः ।** पुं । पारावते । रभ. ।

**छेलिका ।** स्त्री । छाग्याम् । भा. ।

**छेलुः ।** पुं । सोमराज्याम् । श. च. ।

**छोटिका ।** स्त्री । अङ्गुलिध्वनौ । তুড়ি । हिं चुट्की । भा. ।

**छोदः ।** पुं । चूर्णे । सि. यो. दाह. चि. । "चन्दनक्षोदवारिणा ।"

**छोलङ्गः ।** पुं । मातुलुङ्गवृक्षे । টাবা নেবু । प. मु. ।

**छोहारा ।** स्त्री । शुष्कमहाखर्ज्जूरे । खर्ज्जूरी गोस्तनाकारा परद्वीपादिहागता । जायते पश्चिमे देशे सा छोहारेति कीर्त्त्यते ॥" भा. । See खर्ज्जूरी ।

## ज ।

**जः ।** पुं । मृत्युञ्जये । मे. । विष्णौ । तेजसि । श. र. ।

**जकुटम् ।** क्ली । वार्त्ताकुपुष्पे । বেগুনফুল । अचि. २ स्थान. ५६ अ. । पुं । कुक्कुरे । मे. ।

**जकूटः ।** पुं । मलयपर्व्वते । कुक्कुरे । मे. ।

**जगच्चक्षुः (स्) ।** पुं । सूर्य्ये । हे. ।

**जगत् ।** क्ली । सौराष्ट्रमृत्तिकायाम् । পঙ্কপর্পটী । भैष. ज्व. चि. प्राणेश्वररसे । पृथिव्याम् ।

**जगत्प्राणः ।** पुं । वायौ । अ. ।

**जगत्साक्षी (न्) ।** पुं । सूर्य्ये ।

**जगती ।** स्त्री । पृथिव्याम् । मे. । गवि । के. ।

**जगतीरुहः ।** पुं । वृक्षे ।

**जगदुन्मादका ।** स्त्री । सुरायाम् । वै. निघ. ।

**जगन्नुः ।** पुं । अग्नौ । कीटभेदे । विश्व. । श. र. ।

**जगलः ।** पुं । कादम्बर्य्याः सुराया घनतरभागे । ভেতো বা পাঁচী মদ । शाङ्ग. । गुणाः—पाचनो ग्राही रुक्षः भेदःकृत् विष्टम्भी दीपपाचनश्च । वा. टी. हेमा. । सुराकल्के । মদের গেতা । तत्पर्य्यायः,—मेदकः (अ.), मद्यपङ्कः (टी.) । गुणाः—"ग्राह्युष्णो जगलः शोफी दृष्णातृट्कफ-

शोफहृत् ॥" सु. सू. ४६ अ.। मदनवृक्षे। मयना गाछ्। पिष्टकसुरायाम्। मे.। क्ली। गोमये। र. मा.।

**जग्धम्।** त्रि.। भुक्ते। अ.।

**जग्धिः।** स्त्री। भोजने। रा. नि. व. २०।

**जग्मिः।** स्त्री। वायौ। के.।

**जघनः।** पुं। शरीरावयवे, कटिप्रदेशे। नितम्ब-स्तनं शोषः स्त्रीणां जघनमग्रतः।" रा. नि. व. १८। कट्यधःस्थाने। वै. निघ.।

**जघनकूपकौ।** पुं। सन्धिखल्लद्वये। हला.।

**जघनेफला।** स्त्री। काकोदुम्बरिकायाम्। काकडूमुर। अम.। ज. द. ११ अ.।

**जघन्यम्।** क्ली। शिश्ने। मे.।

**जङ्गमकुटी।** स्त्री। तृणादिच्छत्रे। त्रिका.।

**जङ्गमविषम्।** क्ली। सर्पादिविषे। तच्चाश्रय-भेदेन षोडशधा। ते चाश्रयाः दृष्टिनिःश्वासदंष्ट्रा-नखमूत्रपुरीषशुक्र-लालार्त्तव-मुखसन्दंशविशर्द्धित-गुदास्थिपित्तशूकशवादयः। तत्र दृष्टिनिःश्वास-विषाः दिव्याः सर्पाः, भौमा दंष्ट्राविषाः, मार्ज्जारश्व-वानरादयो दंष्ट्रानखविषाः, चिपिटादयो मूत्रविषाः, मूषिकाः शुक्रविषाः, लूताश्च लालामूत्रपुरीष-शुक्रार्त्तवादिविषाः, वृश्चिकादय आलविषाः, विष-हतास्थिसर्पकण्टकवरटामत्स्यास्थीनि चेति अस्थि-विषाणि, शकुलीमत्स्यादयः पित्तविषाः। सु. कल्प. ३ अ.।

**जङ्गलम्।** क्ली। मांसे। निर्ज्जनदेशे। त्रिका।

**जङ्गालम्।** क्ली। रञ्जनद्रव्यभेदे। आशाल इः। अर्क. चि. ८ शतकं। केदारे। तत्पर्य्यायः,— आलिः, सेतुः (श.)।

**जङ्गुलम्।** क्ली। विषे। त्रिका.। जालिनीफले। श. र.।

**जङ्घा।** स्त्री। गुल्फोर्द्ध्वजान्वधोभागे। जाङ। रा. नि. व. १८। तत्पर्य्यायः,— प्रसृता (श.), टङ्का, टङ्कं, टङ्किका (शब्दर.)।

**जङ्घापर्व्व।** क्ली। ऊरुमध्यस्थपर्व्वणि। वै. निघ.।

**जङ्घापिण्डिका।** स्त्री। जङ्घाद्वये। उभय-जङ्घा। च. शा. ७ अ.। इन्द्रवल्ली। पायेर डिम्।

**जङ्घालः।** पुं। जाङ्गलमृगभेदे, एणहरिणर्ष्य-कुरङ्गकरालकृतमाल-शरभश्वदंष्ट्र पृषतचारुष्कारमृग-मातृकाप्रभृतिषु मृगेषु। तन्मांसञ्च कषाय मधुरं लघु वातपित्तघ्नं तीक्ष्णं हृद्यं वस्तिशोधनञ्च। सु. सू. ४६ अ.।

**जङ्घालवर्गः।** पुं। जङ्घालजातीय मृगसमूहे। हरिणैणकुरङ्गर्ष्य-वातायुमृगमातृकाः। राजीवः पृषतश्चैव जङ्घालाः शरभादयः॥" भा.।

**जङ्घाशूलम्।** क्ली। वातव्याधिभेदे। नि.।

**जङ्घास्थि।** क्ली। जङ्घागतकास्थिनि, ते च द्वे। जङ्घार नला। च. शा. ७ अ.।

**जटरः।** पुं। उदरे। द्वि. कोषः।

**जटा।** स्त्री। भूम्यामलकाम्। रा. नि. व. ५। रुद्रजटाख्यलतायाम्। रा. नि. व. ३। जटामांस्याम्। रा. नि. व. १२। शतावर्य्याम्। रा. नि. व. ४। वा. उ. ५ अ.। तरुमूले। वै. निघ। कपि-कच्छ्वाम्। र. मा.।

**जटाजूटः।** पुं। जटासमूहे।

**जटाज्वालः।** पुं। प्रदीपे। हा.।

**जटान्ता।** स्त्री। जटामांस्यां। भूम्यामलक्यां। वै. निघ.।

**जटामांसी।** स्त्री। (Valeriana jatámámsi.) स्वनामख्यातगन्धद्रव्यविशेषे। जटा-मांसी। तत्पर्य्यायः,— नलदं, वक्रिनी, पेषी, मांसी, कृष्णजटा, जटी, किराविनी, जटिला, लोमशा, तपस्विनी (र.), मिषिका (अ. टी.), भूतजटा, (भा.), क्रव्यादी, पिशिता, पिशी, पेशी, पेशिनी, जटा, हिंस्रा, मांसिनी, जटाला, नलदा, मेषी, तामसी, चक्रवर्त्तिनी, माता, अमृतजटा, जननी, जटावती, मृगभक्षा (रा.), जड़ामांसी, सिंहिः, निसिः, मिसी, मिसिका, निषिः (शब्दर.)। सा त्रिधा— साधारणजटामांसी सुगन्धजटामांसी सूक्ष्मजटामांसी चेति। विशेषाः पर्य्याये सन्याः। सा. गुणाः— सुरभिः कषाया कटुः शीतला कफ-हृत् भूतघ्नी दाहघ्नी पित्तघ्नी च। रा. नि. व. १२। तदनुलेपनं ज्वरघ्नं रुचताप्रद। राज.। तिक्ता कषाया मेध्या कान्तिदा बल्या स्वादुर्हिमा त्रिदोषरक्तदाहवीसर्पकुष्ठघ्नी च। भा.। रूपं यथा

"समूलकेसरा ज़िग्धा मांसी पिङ्गजटाकृतिः।"
शेष.।

**जटामांस्यादिः**। पुं। कफरोगे तदादिसुरभिद्रव्यगणे। जटामांसी नखी-पत्री-लवङ्ग तगर-शिलारस-गन्धपाषाणेषु। रा. नि. व.।

**जटामूला**। स्त्री। शतमूल्याम्। शतमूली। रा. नि. व. ४।

**जटायुः**। पुं। गुग्गुलौ। গুগ্গুল। प. मु.।

**जटारुद्रा**। स्त्री। रुद्रजटायाम्। रा. नि. व. ३। सुगन्धजटामांस्याम्। गन्धमांसी। रा. नि. व. १२।

**जटालः**। पुं। कर्पूरे। गुग्गुलौ। रा. नि. व. १२। मुष्ककवृक्षे। घण्टापारुल। वटवृक्षे। रा. नि. व. ११।

**जटाला**। स्त्री। जटामांस्याम्, गन्धमांस्याम्। सुगन्ध जटामांसी। रा. नि. व. १२।

**जटावती**। स्त्री। जटामांस्याम्। रा.नि.व. १२।

**जटावल्ली**। स्त्री। रुद्रजटायाम्। गन्धमांस्याम्। रा. नि. व. ३।

**जटिः (टी) (इन्))**। स्त्री, पुं। प्लक्षद्रुमे। পাকুড় গাছ। श.र.। प्रसुदरचिविशेषे। जटायु। च. सू. २०अ.। स्त्री। जटामांस्याम्। प. मु.।

**जटिका**। स्त्री। गुञ्जालतायाम्। वै. निघ.।

**जटिलः**। पुं। वटवृक्षे। प्लक्षवृक्षे। गुग्गुलौ। वै. निघ.। कर्पूरे। रा. नि. व. ६। दमनकक्षुपे। रा. नि. व. १०। तिले। रा. नि. व १६। सिंहे। श. च.। स्त्री। पिप्पल्याम्। मे.। उच्चटायाम्। र. मा.। गुल्कषायाम्। वचायाम्। रा. नि. व. ६। श्वेतपुनर्नवायाम्। सुगन्धजटामांस्याम्। वै. निघ.। जटामांस्याम्। रा. नि. व. १२। वा. उ. ६अ. महापैशाचघृते। च. सू. ४अ.।

**जटु(डु)लः**। पुं। पिप्लौ। जड़ुल। अम. टी.। See जतुमणिः।

**जठरः**। पुं, क्ली। कुक्षौ, उदरे। रा. नि. व. १८। कर्कटे। मे.। उदररोगे। वि। वृद्धे। मे.।

**जठरघ्नः**। पुं। जलोदरे। रा. नि. व. २०।

**जठरज्वाला**। स्त्री। उदरशूले। পেটজ্বালা। वै. निघ.।

**जठरनुत्**। पुं। आरग्वधवृक्षे। শোন্দাল গাছ। श. च.।

**जठरयन्त्रणा**। स्त्री। गर्भयातनायाम्।

**जठरव्यथा**। स्त्री। उदरशूले। উদরবেদনা। वै. निघ.।

**जठरानलः**। पुं। कोष्ठाग्नौ।

**जठरामयः**। पुं। जलोदररोगे, उदररोगे। জল-উদরী, উদরী। रा. नि. व. २०।

**जठ(ड़)री**। स्त्री। गर्कोटिकाहये। तृण-विशेष। रा. नि. व. ८।

**जड़म्**। क्ली। शीषके। रा. नि. व. १३। जले। अ. टी. रा.। पुं। शरदि। वै. निघ.।

**जड़ता**। स्त्री। जाड्ये। रा. नि. व. २०।

**जड़सम्भवम्**। क्ली। शीतवल्ले। वै. निघ.।

**जड़ा**। स्त्री। शुकशिम्ब्याम्। আলকুশী। प. मु.। भूम्यामलक्याम्। र. मा.।

**जतु(क)म्**। क्ली। जतुके। জৌ। लाक्षायाम्। লাহা। मे.। वै. निघ. २भ, चय.चि. लक्ष्मीविलासतैले। शिलाजतुनि (कम्) हिङ्गुनि। हिং। भा.।

**जतुका**। स्त्री। लाक्षायाम्। हारा.। वासूकि। वै. निघ.। चर्मचव्याम्। চামচিকী। श. र.। च. द. अपस्मा. चि.। जनीनामगन्धद्रव्ये। अ. टी.। पर्पटीनामगन्धद्रव्ये। भा.। मालवे प्रसिद्धलताविशेषे। रा. नि. व. ३। See जतुका।

**जतुकाजननी**। स्त्री। मक्षिकाविशेषे। वै. निघ.।

**जतुकारी**। स्त्री। जतुकालतायाम्। रा. नि. व. ३। अलक्तके। আলতা। वै. निघ.।

**जतुकाश्मीरम्**। क्ली। कुङ्कुमे। वै. निघ.।

**जतुकाह्वा**। स्त्री। लाक्षायाम्। वै. निघ.।

**जतु(न्तु)कृत्**। स्त्री। जनीनामगन्धद्रव्ये। अम.। लाक्षायाम्। वै. निघ.।

**जतुकृष्णा**। स्त्री। पर्पटीनामगन्धद्रव्ये, जतुकालतायाम्। भा.।

**जतुनी**। स्त्री। चर्मचटिकायाम्। त्रिका.।

**जतुपत्रिका**। स्त्री। चाङ्गेर्याम्। क्षुद्रपाषाणभेदे। वै. निघ.।

**जतु(न्तु)मणिः ।** पुं । क्षुद्ररोगविशेषे । जतुक, जड़ुल । लक्षणं यथा—"नीरुजं सममुत्पन्नं मण्डलं कफरक्तजम् । सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं विदुः ॥" सु. नि. १३ अ. ।

**जतुमुखः ।** पुं । रक्तमुखशालिधान्यविशेषे । लक्षणं यथा—"लाक्षावर्णं मुखं यस्य ज्ञेयो जतुमुखस्तु सः ।" भा. पू. १भ. धान्यव. । अथ व्रीहेर्हीनगुणः ।

**जतुरसः ।** पुं । अलक्तके । आल्ता । रा. नि. व. ६ ।

**जतुशिला ।** स्त्री । शिलाजतुनि । वै. निघ. २भ. क्रमि. चि. विड़ङ्गादितैले ।

**जतूकर्णः ।** पुं । तन्त्रकारभेदे ।

**जतूका ।** स्त्री । अजिनपत्रायाम् । चामचिका पाखी । अ. र. । जनीवृक्षे । अम. । वास्तूकभेदे । वै. निघ. ।

**जत्रु(क)म् ।** क्ली । स्कन्धकक्षयोः सन्धौ । पाखुरा । रा. नि. व. १८ ।

**जत्र्वस्थि ।** क्ली । स्कन्धकक्षासन्ध्यस्थनि । पाखुरार हाड़ । ते च द्वे । च. शा. ७अ. ।

**जत्वश्मक(ज)म् ।** क्ली । शिलाजतुनि । रा. नि. व. १३ । मनःशिलायाम् । वै. निघ. ।

**जनः ।** पुं । लोके । मनुष्ये । अम. ।

**जनकम् ।** क्ली । पत्राङ्गचन्दने । वकमभेद । रा. नि. व. १२ ।

**जनकारी** (इन्) । पुं । अलक्तके । रा. नि. व. ६ ।

**जनता ।** स्त्री । जने । वै. निघ. ।

**जननम् ।** क्ली । जन्मनि, उत्पत्तौ । मे. ।

**जननिः (नी) ।** स्त्री । मञ्जिष्ठायाम् । कटुकायाम् । अलक्तके । रा. नि. व. ६ । जटामांस्याम् । रा. नि. व. १२ । जन्तुकालतायाम् । रा. नि. व. ३ । जनीनामकगन्धद्रव्ये, पर्पटीनामकगन्धद्रव्ये, पपरीति उत्तरदेशे । जटा. । अ. र. । चर्मचटयाम् । चामचिका । विका. । वास्तूके । मल्लिकायाम् । वै. निघ. । यूथिकायाम् । यूँइ फुलेर गाछ । श. च. ।

**जनप्रियः ।** पुं । शोभाञ्जनवृक्षे । सजिना गाछ । रा. नि. व. ७ । गोधूमे । नागरङ्गवृक्षे । नारङ्गा लेबू । वै. निघ. । धान्यके । धने' । रा. नि. व. ६ ।

**जनप्रिया ।** स्त्री । कुस्तुम्बुर्व्याम् । काँचा धने' । हिं कोथम्बीर । रा. नि. व. २३ । हिमलोचिकायाम् ।

**जनरञ्जकः ।** पुं । वनवास्तूके । वै. निघ. ।

**जनरञ्जनी ।** स्त्री । जन्तुकालतायाम् । जनीनामसुगन्धद्रव्ये । वै. निघ. ।

**जनवल्लभः ।** पुं । श्वेतरोहितकवृक्षे । श्वेत रोड़ा । रा. नि. व. ८ ।

**जनाशनः ।** पुं । ईहामृगे, वृके । रा.नि.व. १९ ।

**जनाश्रयः ।** पुं । गृहे ।

**जनिः (नी) ।** स्त्री । वास्तूके । वेतो । वै. निघ. । उत्पत्तौ । अम. । स्वनामख्यातगन्धद्रव्ये । अ.टी.रा. । जन्तुकायाम् । कटुकायाम् । कटूकी । रा. नि. व ६ । (नी) सातलायाम् । वै. निघ. ।

**जनिनीलिका ।** स्त्री । महानील्याम् । वड़ नील । रा. नि. व. ४ ।

**जनिष्ठा (नेष्टा) ।** स्त्री । हरिद्रायाम् । रा. नि. व. । ६ । जातीपुष्पवृक्षे । रा. नि. व. १० । जटौ । रा. नि. व. ५ । जन्तुकालतायाम् । रा. नि. व. ३ ।

**जनेष्टः ।** पुं । गन्धराजपुष्पवृक्षे । गन्धराज फुलेर गाछ । रा. नि. व. १० ।

**जनोत्तमः ।** पुं । शाकवृक्षे । सेगुन । प. मु. ।

**जन्तवम् ।** क्ली । विड़ङ्गे । वै. निघ. २भ. अर्शः-चि. ।

**जन्तुः ।** पुं । बाह्याभ्यन्तरक्रिमौ । वा. टी. हेमा. । प्राणिमात्रे । अम. ।

**जन्तुकः ।** पुं । हिङ्गौ । ज. द. १२अ. । जन्तुकायाम् । वै. निघ. ।

**जन्तुकम्बुः (कः) ।** पुं । क्रमिशङ्खे । रा. नि. व. १९ ।

**जन्तुका ।** स्त्री । लाक्षायाम् । रा. नि. व. ६ । मालवदेशप्रसिद्धस्वनामख्यातलतायाम् । हिं पापड़ी । तत्पर्य्यायः,—जतुकारी, जननी, चक्रवर्त्तिनी, तिर्य्यक्फला, निशान्धा, सुपर्णिका, बहुपत्री,

राजवृक्षा, जनेष्टा, कपिकच्छूफलोपमा, रञ्जनी, सूक्ष्मवल्ली, भ्रमरी, क्षणवल्लिका, विज्जुलिका, क्षणरुहा, ग्रन्थिपर्णा, सुवर्चिका, तरुवल्ली, दीर्घफला। गुणाः—शिशिरा तिक्ता रक्तपित्तकफघ्नी दाहतृष्णावमिहरा रुचिकृत् दीपनी च। रा. नि. व. ३। नाडीहिङ्गी। पवदावग्राम्। भ्रमर्याम्। त्वचि। रा. नि. व. २३।

**जन्तुकारी।** स्त्री। जन्तुकालतायाम्। रा. नि. व. ३। नाडीहिङ्गी। अलक्तके। रा. नि. व. ६।

**जन्तुघ्नम्।** क्ली। हिङ्गुनि। विडङ्गे। प. सु.। पुं। बीजपूरवृक्षे। टाबा गाछ। रा. नि. व. ११। (घ्नी) स्त्री। विडङ्गायाम्। रा. नि. व. ६। जन्तुकालतायाम्। वै. निघ.।

**जन्तुजित्।** पुं। जम्बीरवृक्षे। जामीर गाछ। रा. नि. व. ११।

**जन्तुतन्तुः।** पुं। शणबीजे। वै. निघ.।

**जन्तुनाशनम्।** क्ली। हिङ्गुनि। हिं। रा. नि. व. ६। पुं। विडङ्गे। पारसीकयमान्याम्। वै. निघ.।

**जन्तुपादपः।** पुं। कोषाम्रवृक्षे। जलपाइ। रा. नि. व. ११।

**जन्तुफलः।** पुं। उदुम्बरवृक्षे। यज्ञडुमुर। रा. नि. व. ११। क्ली। उदुम्बरफले। चि. क्र. क. प्रदरावभेद. चि.।

**जन्तुमत्फलः।** पुं। उदुम्बरवृक्षे। यज्ञडुमुर। वै. निघ.।

**जन्तुमाता।** स्त्री। लाक्षायाम्। वै. निघ.। रक्तजकृमिभेदे। च. वि. ७अ.।

**जन्तुमारी।** स्त्री। निम्बुकवृक्षे। गोँड़ालेबु गाछ। रा. नि. व. ११।

**जन्तुरसः।** पुं। अलक्तके। आलता। रा. नि. व. ६।

**जन्तुला।** स्त्री। जन्तुकालतायाम्। जनीलता। वै. निघ.। काशतृणे। त्रिका.।

**जन्तुवृक्षः।** पुं। कोषाम्रवृक्षे। जलपाइ। उदुम्बरवृक्षे। वै. निघ.।

**जन्तुशत्रुः।** पुं। विडङ्गे। चि. क्र. क. केशरञ्जने।

**जन्तुहनन(रण)म्।** क्ली। विडङ्गे। वै. निघ.।

**जन्तुहन्त्री।** स्त्री। विडङ्गायाम्। रा. नि. व. ६।

**जन्मबलप्रवृत्तः।** पुं। असौ रोगविशेषो यो मातुरपचारात्पङ्गु-जात्यन्ध-बधिर-मूकमिन्मिणवामनप्रभृतयो जायन्ते। स पुनर्द्विविधो रसकृतो दौहृदापचारकृतश्चेति। सु. सू. २४ अ.। एष आध्यात्मिकः।

**जन्मवर्त्म।** क्ली। भगे। त्रिका.।

**जन्युः।** पुं। जीवे। अग्नौ। मे.।

**जपा (व्या)।** स्त्री। ओड्रपुष्पवृक्षे। जबाफुलेर गाछ। तत्पर्य्यायः,—जवा (के.), ओड्रपुष्पं, त्रिसन्ध्या। सा द्विधा श्वेतरक्तभेदेन। गुणाः—कटूष्णा इन्द्रलुप्तघ्नी कृमिच्छर्दिकारी च। रा. नि. व. १०।

**जपाकुसुमसन्निभम्।** क्ली। हिङ्गुले। वै. निघ.।

**जपापुष्प(प्रसून)म्।** क्ली। जवायाम्। जबा फुल। तच्च अगर्भसम्पादनगुणं। चि. क्र. क. गर्भ. चि.।

**जपारक्तम्।** क्ली। जवापुष्पे। पुं। जपावृक्ष।

**जमनम्।** क्ली। भोजने। भ. टी. भ.।

**जम्बः।** पुं। जम्बीरवृक्षे। जामीर गाछ। र. जा. सं.।

**जम्बा।** स्त्री। जम्बूफले। जाम। अम.।

**जम्बालः।** पुं। केतकवृक्षे। श. र.। शैवाले। पङ्के। त्रिका.। हारा.। क्ली। सुगन्धतृणे। वै. निघ.।

**जम्बालिनी।** स्त्री। पद्मिन्याम्। शब्दर.। नद्याम्। हे.।

**जम्बि(म्भी, म्मी)रः (कः)।** पुं। (Citrus medica. Citrus acida.) स्वनामख्यातफलवृक्षे। गोँड़ालेबु गाछ, जामीर। हिं जम्बीरी, निम्बू। मं इड़। कं कंचिल्लि। तें निम्मचेट्टु। मद. व. ६। तत्पर्य्यायः,—दन्तशठः, जम्भः, जम्भीरः, जम्भलः (अ.), जम्भकः, जम्भरः (श.), दन्तहर्षणः, दन्तकर्षणः, गम्भीरः, जम्भिरः (शब्दर.), रेवतः, वक्त्रशोधी, दन्तहर्षकः (ज.), जम्भी, रोचनकः, मुखशोधी, नाड्यारिः। स

द्विविधः जम्बीरस्वल्पजम्बीरभेदेन । गुणाः—
"जम्बीरः पाचनस्तीक्ष्णः कृमिवातकफापहः । सुरभि-
र्दीपनी रुच्यः मुखवैशद्यकारकः । कफानिलविष
श्वासकासदौर्गन्ध्यनाशनः । पित्तकृत् पार्श्वशूलघ्नः
सुरसः समुदाहृतः ॥" सु. सू. ४६ अ. । "स्वल्प-
जम्बीरिका तद्वत् तृष्णाच्छर्द्दिनिवारणी ।" भा. ।
तत्फलमम्लमधुरं वातघ्नं पित्तकृत् पथ्यं पाचन
रोचनं बल्यमाग्नेयं । पक्वं तत् मधुरं कफदमनं
पित्तरक्तदोषघ्नं वर्ण्यं वीर्य्यवर्द्धनं रुचिकृत् पुष्टिकृत्
तर्पणञ्च । रा. नि. व. ११ । अत्यम्लं गुरु सुगन्धि
दुर्जरञ्च । राज. । मरुवकवृक्षे । গন্ধ তুলসী,
নাগদনা । अर्ज्जकवृक्षे । ক্ষুদ্র তুলসী ।
सितार्ज्जके । শ্বেতপত্র ক্ষুদ্র তুলসী । रा. नि.
व. २० । च. द. वात. चि. ।

**जम्बीरिका** । स्त्री । जम्बीरभेदे । भा. ।

**जम्बुः** । पुं, स्त्री । जम्बूवृक्षे । জাম গাছ ।
क्षुद्रजम्बूवृक्षे । বন জাম গাছ । र. मा. सं. ।
नागदमन्याम् । 'গোলাপজাম' इति ख्याते वृक्षे ।
वै. निघ. । क्ली । जम्बूफले । জাম । अम. ।
तत्पर्य्यायः,—जम्बू:, जाम्बवम् । अ. ।

**जम्बुकः** । पुं । 'গোলাপজাম' इति ख्याते वृक्षे ।
श. र. । केतकवृक्षे । पं. सु. । शृगाले । रा. नि.
व. १९ । श्योणाकभेदे । रा. नि. व. ९ ।

**जम्बुकटणम्** । क्ली । गन्धतृणे । भा. ।

**जम्बुड़िका** । स्त्री । खिन्नमादे । रावणकुमार-
तन्त्रे ।

**जम्बु(म्बू)लः** । पुं । केतकवृक्षे । কেয়া গাছ ।
र. मा. । जम्बूवृक्षे । জামরুল । मे. । कर्णपाली-
गतरोगविशेषे । सु. सू. १६ अ. ।

**जम्बुवनजम्** । क्ली । श्वेतजवापुष्पे ।

**जम्बूः** । पुं, स्त्री । (Ugenia jambolana,
Syn. Syzigium jambolanum.)
स्वनामख्यातमहातरौ । জাম গাছ । हिं जामूं ।
म. जाम्भुळ । क. नेरिलुश । ते. नेरड़चेट्टु । तत्-
पर्य्यायः,—जम्बुः (अ. टी. भ.), जम्बूलः (मे.),
सुरभिपत्रा, नीलफला, श्यामला, महास्कन्धा,
राजार्हा, राजफला, शुकप्रिया, मेदमादिनी
(रा.) । राजजम्बू-काकजम्बू-भूमिजम्बू-भेदेन
त्रिधा । तासां विशेषास्तत्पर्य्याये द्रष्टव्याः ।
सा. गुणाः—कषायमधुरा श्रमपित्तदाहकण्ठशोषघ्नी
कृमिघ्नी श्वासातिसार-कफकासघ्नी विष्टम्भिनी
पाचनी च । रा. नि. व. ११ । तत्फलगुणाः—
"अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ।"
सु. सू. ४६ अ. । गुरु स्वादु शीतलम् अग्निदुष्टि-
करं रुच्यं वातलञ्च । राज. । "जम्बूर्ग्राही
मधुरकफहा रोचनी वातहारी ।" अत्रि.
१७ अ. । च. द. ज्वरातीसा. चि. कलिङ्गाद्य गु.
जम्बुस्थिमत्स्ये । पृथुशिम्बश्योणाकवृक्षे । বড়
শোণা গাছ । रा. नि. व. १० । नागदमन्याम् ।
रा. नि. व. ५ ।

**जम्बूकः** । पुं । शृगाले । ब्राह्म्यां । ব্রহ্মী শাক ।
नलशाख्यां । वाराहीकन्दे । रा. नि. व. २३ ।
पीतशीर्षे । वै. निघ. । (का) स्त्री । कपिल-
द्राक्षायाम् । रा. नि. व. ११ ।

**जम्बूद्वयम्** । क्ली । महाजम्बूः राजजम्बूश्चेति-
द्वये । अरुणस्तु एका जम्बूर्बृहत्फला अन्या
ह्रस्वफला काकजम्बूश्च । "जम्बूद्वयार्ज्जुन-
कपीतनसोमवल्का: ।" वा. सू. १५ अ. । सु. सू.
३८ अ. । न्यग्रोधादिः ।

**जम्बूराजः** । पुं । बृहत्फलजम्बूभेदे ।

**जम्बूलः** । पुं । जम्बूवृक्षे । केतकपुष्पवृक्षे । मे. ।

**जम्भः (कः)** । पुं । जम्बीरवृक्षे । জামীর গাছ ।
रा. नि. व. ११ । श. च. । वै. निघ. कास त्रि-
लोकनाथपोट्टलीरसे । शक्रस्य रिपौ । दनुदैत्ये ।
हे. च. । दन्ते । त्वचा । मे. । क्ली । अन्न ।
पुं (कः) पातञ्जोष्ठ । व. नि । तूणे ।

**जम्भका** । स्त्री । जृम्भायाम् । হাই তোলা ।
रा. नि. व. २० ।

**जम्भनः (लः)** । पुं । अर्कवृक्षे । আকন্দ গাছ ।
रा. नि. व. १० । मरुवकवृक्षे । তুলসীভেদ ।
वै. निघ. । क्ली । मैथुने । (लः) जम्बीरवृक्षविशेषे ।
प. मु. निका. । मद. । रा. नि. व. ११ ।

**जम्भरः** । पुं । जम्बीरे । श. ।

**जम्भला** । स्त्री । सुखप्रसवस्मरणराक्षसीविशेषे ।
यथा—"समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी ।
तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत् ॥"
राजमार्त्तण्डः । तूलके । তূলা । वै. निघ. ।

**जम्भा** । स्त्री । जृम्भायाम् । হাই তোলা ।
कश्चित् । रा. नि. व. ११ ।

**जम्भारिः** । पुं । अग्नौ । वज्रे ।

**जम्भी (म्भिन्)** । पुं । जम्बीरवृक्षे । श. च. ।

**जयः** । पुं । अभिमन्युनृपे । -गणिरी । भा. । पीतमुद्गे । सोणा मुग । वै. निघ. ।

**जयकारिका** । स्त्री । लज्जालुकायाम् । लज्जावती लता । वै. निघ. ।

**जयतरुः** । पुं । नन्दीवृक्षे । वै. निघ. ।

**जयदेवः** । पुं । रसामृतसंग्रहकारे ।

**जयद्रुमः** । पुं । वन्दायाम् । बान्दड़ा । वै. निघ. ।

**जयनालः** । पुं । यावनाले । जनार । वै. निघ. ।

**जयन्तः** । पुं । चन्द्रे । वि. ।

**जयन्तिका** । स्त्री । हरिद्रायाम् । रा. नि. व. ६ ।

**जयन्ती** । स्त्री । (Eachynomene sesban or Sesbania aculeatia.) स्वनामख्याततिक्तशाकौषधिनृपे । जयन्तिर गाछ, धन्चे गाछ । मं कं सोरेरि, तीगरसे । तत्पर्य्यायः,—जया, तर्कारी, नादेयी, वैजयन्तिका (अ.), जैत्री (शब्दर.), बला, मोटा, हरिता, विजया, सूक्ष्ममूला, विक्रान्ता, अपराजिता । गुणाः—गलगण्डानिलभूतघ्नी तिक्ता कटुः उष्णा च । रा. नि. व. ४ । तत्पत्रं गरदोषघ्नं चक्षुष्यं मधुरं हिमञ्च । राज. ३५. । See बलमोटा । (कन्दर्पसारतैले, महाभवद्याम्) । स. कौ. । कपिकच्छौ । आलकुशी । रा. नि. व. ३ । हरिद्रायाम् । जयायाम् । विजयायाम् । रा. नि. व. २३ । अग्निमन्थे । आगुगछ । भा. । श्वेतरक्तकाञ्चनद्वये । वचायाम् । मञ्जिष्ठायाम् । काञ्जिके । हरीतक्यां । श्वेतनिर्गुण्ड्याम् । श्वेतजयन्तीमूलस्य शिरसि धारणात् सर्व्वज्वरनाशो भवति । च. द. ज्वर. चि. । "मूलं जयन्त्याः शिरसि धृतं सर्व्वज्वरापहम् ।"

**जयपालः** । पुं । स्वनामख्यातवृक्षे । जयपाल वृक्ष । जैपाल, जामालगोटा इति च भाषा । तत्पर्य्यायः,—जैपालः (द्विः), सारकः रेचकः, तिन्तिडीफलं, दन्तीवीजं, मलद्रावि, बीजरेचनं, कुम्भीवीजं, कुम्भिनीवीजं, घण्टावीजं, घण्टिनीवीजं, निकुम्भाख्यवीजं, शोधनीवीजं, चक्रदन्तीवीजं । वीजगुणाः—तीक्ष्णमुष्णं सारकम् उत्क्लेदकरम् । कटुरुष्णः कृमिघ्नः विरेचनः दीपनः कफवातघ्नः उदरामयघ्नश्च । रा. नि. व. ६ । "जयपालवीजशस्यं नस्यं छागगोमयभस्मरसे च । सन्तापितमुच्छूनं निर्यादनवद्यतां तदेवास्य ।" अनवद्यतां शुद्धत्वम्, उच्छूनं सिद्धमित्यर्थः । सा. कौ. । अपि च । "स्विन्नं गोमयतोये वा दुग्धे वा जयपालकं । खर्परे मृदु भृष्टं तत् निःस्नेहं शुद्धिमृच्छति ॥" अनि. । जयपालवीजं निस्तुषं द्विधाकृत्य वीजमध्यस्थपत्रञ्च परित्यज्य अष्टमांशटङ्कणचूर्णेन विमिश्र्य च केशयन्त्रेण दुग्धसंस्रुतं त्रिवारं भाव्यम् । तत्तैलं सार्षपादितैलवत् तैलपीड़नयन्त्रे निष्काश्यम् । गुणाः—अल्पशरेचकम् आनाहोदरघ्नं धनुस्तम्भसंन्यासशिरोरोगघ्नं ज्वरघ्नमुन्मादहरमामवातशोथमेकाङ्गरोगञ्च मर्दनात् हन्ति कासञ्च हरति । अनि. । एरण्डवृक्षे ।

**जयमङ्गलरसः** । पुं । विषमज्वरघ्ने औषधविशेषे । पाठः—हिङ्गुलसम्भवं सूतं गन्धकं टङ्कणं तथा । ताम्रं वङ्गं माक्षिकञ्च सैन्धवं मरिचं तथा । एतत्समांशमाहृत्य द्विगुणं स्वर्णभस्मकं । तदर्द्धं कान्तलौहञ्च रूप्यभस्म च तत्समं । एतत् सर्व्वं विचूर्णाय भावयेत् कनकद्रवैः । शेफालिकादलैर्वापि दशमूलरसेन च । किराततिक्तकैः क्वाथैस्त्रिवारं भावयेत् सुधीः । भावयित्वा ततः पश्चात् गुञ्जाद्वयवटीकृता । अनु. मधु जीरकचूर्णञ्च । सा. कौ. । अन्यः—हिङ्गुलोत्थपारदः गन्धकः टङ्कणक्षारः ताम्रं वङ्गं स्वर्णमाक्षिकं सैन्धवलवणं मरिचचूर्णं प्र. समं, स्वर्णभस्म एतत्सर्व्वद्विगुणं स्वर्णभस्मार्द्धं कान्तलौहं तदर्द्धं रौप्यञ्च । एकत्र धुस्तूरपत्ररसेन शेफालिकापत्ररसेन दशमूलक्वाथेन किराततिक्तकादिगणक्वाथेन च प्र. वारत्रयं भावयेत् । दशमूलं भाव्यद्रव्यपारदादिसमं वारि अष्टगुणम् अष्टमांशशिष्टं ग्राह्यम् । एवं किराततिक्तकादेरपि । अपरः—रससिन्दूरं अभ्रं रौप्यं मुण्डलौहं तीक्ष्णलौहं हरितालं स्वर्णमाक्षिकं चित्रकमूलं टङ्कणक्षारं त्रिकटुकं प्र. समभागं । पाठानिर्गुण्डीयष्टिमधुविल्वमूलकषायेण दिनं मर्दयित्वा मूषया भूधरे पुटे पचेत् । अनु. दशमूलक्वाथः । मस्ताञ्जनं गव्यमपि हितम् । र. चि. रस. कौ. ।

**जया** । स्त्री । विजयायाम् । सिद्धि । भा. नासारोगचि. जवापुष्पवृक्षे । भाङ्गा । महादन्तीवृक्षे । कपिकच्छ्वाम् । वै. निघ. । अग्निमन्थवृक्षे । रा. नि. व. ९ । भा. कर्णकज्ज. चि. । वा. उ. ६ष. । शमीवृक्षे । रा. नि. व. ८ । नीलदूर्व्वायाम् । जयन्तीवृक्षे । रा. नि. व. ४ । भैष. कुष्ठ. चि. कन्दर्पसारतैले । च. द. यक्ष्म. चि. रसेन्द्रगुड़ी । हरीत-

क्याम्। रा. नि. व. ११। वै. निघ. संग्रहणी.चि. तालीशचूर्णे। अपराजितायाम्। मद. व. १। शालालीवृक्षे। वै. निघ. २भ. चय. चि. कनकसिन्दूरे।

**जयाञ्जन(मल)म्।** क्ली। स्रोतोऽञ्जनविशेषे। जहरपाथर इति पश्चिमदेशे। "स्रोतोऽञ्जनं नदीजञ्च कृष्णस्रोतो जयाञ्जनम्।" प. मु.।

**जयाद्वयम्।** क्ली। तर्कारी हरीतकी चेति द्वये। वा. सू. १५ अ.।

**जयापुष्पम्।** क्ली। जपापुष्पे। वै. निघ.।

**जयावटी।** स्त्री। ज्वराधिकारे। "विषं त्रिकटुकं मुस्तं हरिद्रा निम्बपत्रकं। विडङ्गमष्टमं चूर्णं छागमूत्रैः समं समम्। चणकाभा वटी कार्य्या खाज्जया योगवाहिका॥" अत्र जयन्तीमूलचूर्णं तुल्यांशं देयं योगवाहिकत्वात्। र. सा. सं.।

**जयावहा।** स्त्री। नीलदूर्व्वायाम्। रा. नि. व. ८। भद्रदन्तीवृक्षे। दन्ती। रा. नि. व. ६।

**जयाश्रया।** स्त्री। गर्मूटिकातृणे। रा. नि. व. ८।

**जयाह्वा।** स्त्री। भद्रदन्तीवृक्षे। रा. नि. व. ६।

**जरकम्।** क्ली, पुं। हिङ्गुनि। वै. निघ.।

**जरठः।** त्रि। पाण्डौ। कठिने। मे.। जीर्णे। हे. च.।

**जरड़ी।** स्त्री। गर्मूटिकातृणे। धान्यविशेष। हिं जडुर्। तत्पर्य्यायः,—गर्मूटिका, गर्म्मोटिका, सुनाला, जयाश्रया। गुणाः,—मधुरत्वं शीतलत्वम् सारकत्वं रुचिकारत्वं रक्तदोषदाहनाशित्वं पशूनां दुग्धवर्द्धकत्वञ्च। रा. नि. व. ८।

**जरणः।** पुं, क्ली। स्थूलजीरके। बड़ जीरा। रा. नि. व. ६। च. द. वातश्लेष्म ज्व. चि.। कृष्णजीरके। कासमर्द्दे। कालकासन्दा। हिङ्गुनि। रा. नि. व. २३। सौवर्च्चललवणे। सचल लवण। श. र.। कुष्ठौषधौ। कुड़। र. मा.। पीतजीरके। च. द. ज्व. चि.। स्त्री। कृष्णजीरके। रा. नि. व. ६।

**जरणद्रुमः।** पुं। अश्वकर्णनामलताशाले। लता शाल। रा. नि. व. ९।

**जरती।** स्त्री। वृद्धायाम्। रा. नि. व. १८।

**जरत्पित्तशूलम्।** क्ली। परिणामशूले। "वान्तमात्रे जरत्पित्ते शूलमाशु प्रशाम्यति।" रस. र.।

**जरद्गदः।** पुं। गृध्रपक्षिविशेषे।

**जरद्गवः।** पुं। वृद्धवृषे।

**जरन्तः।** पुं। महिषे। त्रिका.।

**जरमानः।** पुं। मनुष्ये। उणा.।

**जरा।** स्त्री। वार्द्धक्ये। अम.। चौरिकावृक्षे। श.।

**जराक्लैब्यम्।** क्ली। जराजन्यक्लैब्यरोगविशेषे। तस्य निदानलक्षणं यथा—"अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणां। रसादीनां क्षयाच्चैव तथैवाहृष्यसेवनात्। वलवीर्य्येन्द्रियाणाञ्च क्रमशैव परिक्षयात्। परिचयादायुषश्चाप्यनाहाराच्छ्रमात् क्रमात्। जरासम्भवजं क्लैव्यमित्येतैर्हेतुभिर्नृणाम्। जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्ब्बलः। विवर्णो विह्वलो दीनः क्षिप्रं व्याधिमथाश्नुते॥" च.।

**जरायुः।** पुं। अग्निजारवृक्षे। रा. नि. व. ६। गर्भाशये। গর্ভথলি বা আঁওল। रा. नि. व. १८। स चर्म्माकारः सूक्ष्मश्च। तस्य स्थानञ्च गुदमूत्राशयमध्यभागः। यथा—"गुदमूत्राशयान्तःस्थो जरायुर्गर्भमन्दिरं। जरायुपार्श्वे नाड्यौ द्वे डिम्बनाड्यौ प्रकीर्त्तिते।" अवि.। "या तु चर्म्माकृतिः सूक्ष्मा जरायुः सा निगद्यते।" तन्त्रान्तरम्।

**जरायुजः।** त्रि। जरायुजाते प्राणिमात्रे, पशुमनुष्यव्यालादौ। अम.। "शुक्रशोणितयोर्योगस्मिन् सञ्जायते यतः। तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः॥" तन्त्रान्तरम्।

**जरायुदोषः।** पुं। गर्भजरोगभेदे। वै. निघ.।

**जरालक्ष्म।** क्ली। पलिते। रा. नि. व. १८।

**जराशोषः।** पुं। वार्द्धक्यजन्यक्षीणतारोगे। लक्षणं—"जराशोषी कृशो मन्दवीर्य्यबुद्धिवलेन्द्रियः। कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः। ष्ठीवति श्लेष्मणा हीनं गौरवारुचिपीड़ितः। सम्प्रसुतास्यनासाक्षः शुष्करूक्षमलच्छविः॥" मा. नि.।

**जरूथम्।** क्ली। मांसे। त्रिका.।

**जर्ज्झरः।** पुं। रक्तरसोने। मद. व. ७। क्ली। शैवाले। शैलजे। मे.। त्रि। वृद्धे। रा. नि. व. १८।

**जर्ज्झरीकः।** त्रि। बहुच्छिद्रद्रव्ये। ঝাঁঝরী। मे.।

**जर्णः।** त्रि। जीर्णे। हे. च.। पुं। वृक्षे। चन्द्रे। मे.।

**जर्त्तः (र्त्तुः)**। पुं। करिणि। योनौ। उणा.।

**जर्त्ति(र्त्ति)लः**। पुं। आरण्यतिलके। वुनो तिल। इ. भ.। रा. नि. व. २२।

**जलम्**। क्ली। बालके। दोला। च सू. २ अ.। भा. प्रात्यक्ष. चि.। ता. सू. १५ अ. एवादौ। जलवेतसे। उदके। इत्य। तत्पर्य्यायः,—मेघप्रसवः (रा.), आपः, वाः, वारि, सलिलं, कमलं, पयः, कीलालं, अमृतं, जीवनं, भुवनं, वनं, कवन्धं, उदकं, पाथः, पुष्करं, सर्व्वतोमुखं, अम्भः, अर्णः, तोयं, पानीयं, नीरं, क्षीरं, अम्बु, शम्बरं, मेघपुष्पं, घनरसः (अ.), प्रजाहितं (शब्दमा.), प्राणदं (हे.), आपम्, सरिलं, सलं, जडं, कं, अन्धं, कमन्धं, उदं, दक, नारं, शम्बरं, अभ्रपुष्पं, घनरसं, घृतं (भ), पाथं, कृतञ्च (मे.), पथ्यं, (वि.), पीथं, यादोनिवासः, जीवनीयं, कुलीनसं, कुलीनं (हे.), पिप्पलं, कुशं, विषं, काण्डं, सवरं, सरं, कपीटं, चन्द्रोरसं, सदनं, कर्व्वुरं, व्योम, सम्बं, सरः, इरा, वाजं, तामरं (ज), कम्बलं, स्यन्दनं, सम्बलं, जलपीथं, ऋतं, ऊर्जं, कोमलं, सोमं, नारा (शब्दर.), कृतुसं (के.), अर्णः, क्षोदः, नभतः, मधु, पुरीषं, रेतः, कशः, जन्म, वृबुकं, वुसं, तुग्रा, वर्व्वुरं, सुक्षेम, धरुणं, सुरा, अरविन्दानि, ध्वगम्भनु, जामि, आयुधानि, क्षपः, अहिः, अक्षरं, स्रोतः, तृप्तिः, रसः, रसः, भेषजं, सहः, शवः, यहः, ओजः, सुखं, क्षत्रं, आवयाः, शुभं, यादुः, भूतं, भविष्यत्, आपः, महत्, व्योम, यशः, महः, सर्णीकं, स्वृतीकं, सतीनं, गहनं, गभीरं, गम्भरं, ईं, अन्नं, हविः, सद्म, योनिः, ऋतस्ययोनिः, सत्यं, रियः, सत्, पूर्णं, सर्व्वं, अक्षितं, बर्हिः, नाम, सर्पिः, अपः, पवित्रं, इन्दुः, हेम, स्वः, सर्गाः, शम्बरं, अभ्वं, वपुः, अम्बु, तूयं, तोयं, शुक्रं, तेजः, स्वधा, दर्भं, जलाषं (वेदनि.)। जलस्य षड्दोषा भवन्ति—स्पर्श-रूप-रस-गन्ध-वीर्य्य-विपाकाख्याः। तत्र स्पर्शदोषे खरता पैच्छिल्यमुष्णता, रूपदोषे पङ्कसिकताशैवालबहुवर्णता च, रसदोषे व्यक्तरसता, गन्धदोषे अनिष्टगन्धता, वीर्य्यदोषे तृष्णादिकं सेवनात्, विपाकदोषे च विष्टम्भादिकं जनयति। जलस्य कलुषताप्रसाधनं चत्र—कतक-गोमेद-विसग्रन्थि-शैवालमूल-वस्त्र-मुक्ता-मणय इति। जलस्य निक्षेपणं पञ्च। फलादिशीतीकरणञ्च सप्त प्रवातस्थापनादि। सु. सू. ४५ अ.। सा. गुणाः—मधुरं शीतलं तृष्णाघ्नं शोषमोहभ्रान्तिघ्नं भुक्तान्नपाचकं निद्रालस्यहरं विषघ्नं श्रमहरं रुचिजनकं धीवलवीर्य्यतुष्टिपुष्टिकरञ्च। 'साधारणं जलं रुच्यं दीपनं पाचनं लघु। श्रमतृष्णापहं वातकफमेदघ्नपुष्टिदम्॥' पात्रदेशादिभेदेन जलगुणाः यथा—"जातं ताम्रघटस्थितं च सलिलं वातादिदोषप्रदं दृष्ट्याद्व्यवकरञ्च दुर्ज्जरतरं दोषावहं धूसरम्। वातघ्नन्तु शिलाशिलीत्थमकलं पथ्यं लघु स्वादु च श्रेष्ठं श्यामदलादिदोषशमनं सर्व्वामयघ्नं पयः।" रा. नि. व. १४। "तच्चादौ द्विविधमान्तरीक्षभौमभेदेन। तयोरान्तरीक्षं जलमनिर्द्देश्यरसम् एकान्ततः पथ्यतमञ्च। तदेवावनिपतितमन्यतमं रसमुपलभते स्थानविशेषान्नद्यादिष्ववस्थितमिति। तत्र च पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलरसः भवत्युत्कर्षापकर्षेण, तत्र स्वगुणभूयिष्ठायां भूमौ लवणमम्लञ्च भवति, अम्बुगुणभूयिष्ठायां मधुरं, तेजोगुणभूयिष्ठायां कटुकं तिक्तञ्च, वायुगुणभूयिष्ठायां कषायं, आकाशगुणभूयिष्ठायामव्यक्तरसञ्चेति।" सु. सू. ४५ अ.। अन्तरीक्षोद्भवं जलं पुनः धारं कारकं तौषारं हैममिति चतुर्धा। तत्र धारमष्टविधम्—"धारं पृथिव्यां पतितं पयस्तु तत्रैव जातं गुणभेदभिन्नं। नानाविधैर्भेदगुणैश्च सम्यक् जातं जलञ्चाष्टविधं वदन्ति। नद्यौद्भिदं प्रास्रवणञ्च चौण्ट्यं कौपं तडागं सरसीभवञ्च वाप्युद्भवं तत्प्रवदन्ति धीराः।" नदीजलम् औद्भिदादिकञ्च पर्य्याये द्रष्टव्यम्। तत्र कारं जलं यथा—"स्वर्ण्ड्याः शीतवातेन मेघविस्फूर्जकर्दुलम्। शीताम्बु कठिनं भूत्वा शिलं जातं हिमेन तु। पश्चात् सुमूर्य्यसन्तापात् किञ्चिद्वै द्रवते जलम्। वमन्ति मेघाः सलिलं शकलं शीतलं मतम्॥ गुणाः कारं शीतगुणैः श्रमोपशमनं शोषार्त्तिनिर्नाशनम् मूर्च्छामोहशिरोऽक्षिनाशनकरं हिक्कावमीवारणं। शोफानां क्षपिनान्तु दोषशमनं पित्तात्मिकानां हितं संमतन्तु प्रवरं गुणैः प्रतिदिनं तस्मान्न दूरे कृतम्॥" इति। "तौषारं लघु शीतलं श्रमहरं पित्तार्त्तिशान्तिप्रदं दोषाणां शमनं जलार्त्तिहननं सर्व्वामयघ्नं परं। कुष्ठश्लीपदचर्च्चिकाविषहरं पामाविसर्पापहं क्षीणानां घृतशोषिणां हितकरं संसेव्यते मानवैः॥" हैमजलगुणाः—"हैमं घनञ्च मधुरञ्च कफानकञ्च मूर्च्छार्त्तिसंशमनमानविनाशनञ्च। पित्तातुरः प्रशमनं रुधिरघ्नतञ्च शान्तङ्करोति हिमसम्भववारि सद्यः॥" भूमिविशेषे जलगुणाः—"भूमिः पञ्चविधा ज्ञेया कृष्णा रक्ता तथा सिता। पीता नीला भवेच्चान्या गुणा-

स्तासां प्रकीर्त्तिताः। सघनं मधुरं नीरं क्षणभूमि-परिप्लुतं। पीताश्चित्तदृपायच रक्तायाः क्षारमाधुरम्। सितायामाम्रमधुरं भूमिभागेन लक्षयेत्॥" गुणाः—"ताड़ागं वातलं स्वादु कषायं कटुपाकि च। पौष्कराचाम्रिकं दक्षं मधुरं कफकारकं। नैर्झरं लघुपाकञ्च दीपनं कफनाशनं। सारसं लघु वल्याम्लं वल्यं स्वादु कषायवत्। पाल्वलं गुर्व्वभिष्यन्दि विष्टम्भि दीपनं परं॥" इति। अथ स्वच्छजलगुणाः—लघु हृद्यं गुणवच्च। अथाविलजलगुणाः—पिच्छिलं क्रमिलं विवर्णं क्लिन्नं सान्द्रं विरसं दुर्गन्धं चाहितञ्च। अथ शरदादिजलगुणाः—शारदं लघु चानभिष्यन्दि च। हैमन्तं स्निग्धं हृष्यं बल्यं गुरु हितञ्च। शैशिरं वातकफघ्नं हैमन्तादीषल्लघु च। वासन्तं मधुरं कषायं बल्यं रूक्षञ्च। ग्रैष्मञ्च अनभिष्यन्दीति। सुगन्धजलगुणाः—हृद्यञ्च सुशीतलम् अव्यक्तरसञ्च। शीतलजलगुणाः—मदमूर्च्छाहरं छर्द्दिनाशनं पित्तज्वरश्रमभ्रमदाहदोषमदात्ययविषघ्नञ्च। सुशीतलजलगुणाः—त्रिदोषघ्नम्। सुवासितमथातप्तजलं रुचिकरं अजीर्णे औषधतुल्यं जीर्णे बलदं भोजनकाले आयुष्यम्। रात्रौ च भुक्तस्योपरि अहितम्। राज.। हेमन्तादौ जलपानविधिः—हेमन्ते तड़ागं सारसं वा हितं। इदमेव शिशिरे प्रशस्तम्। ग्रीष्मवसन्तयोः चाण्ड्यं वा कौपं वा नैर्झरं वा प्रशस्तम्, नादेयञ्च सामान्यतो वर्ज्यम्। प्रावृषि आन्तरीक्षं वा कौपं वा प्राहट्कालं। शरदि नादेयम् अंशूदकञ्च हितम्, तथागस्त्योदयात् स्वच्छं जलं प्रशस्तम्। "पौषे वारि सरो जातं माघे तत्तु तड़ागजं। फाल्गुने कूपसम्भूतं चैत्रे चौण्ड्यं हितं मतम्। वैशाखे नैर्झरं नीरं ज्यैष्ठे शस्तं तथौद्भिदं। आषाढ़े शस्यते कौपं श्रावणे दिव्यमेव च। भाद्रे कौपं पयः शस्तमाश्विने चौण्ड्यमेव च। कार्त्तिके मार्गशीर्षे च जलमात्रं प्रशस्यते॥" वारिपेयकालः—भोजनानन्तरं प्रायो यत्तदेवं प्रातरिष्यते। शीतत्वं निर्म्मलत्वञ्च जलस्यैषा महान् गुणः॥ इत्यसूयुतः। पुनश्च जलं चतुर्विधम्। पापोदकं रोगोदकम् अंशूदकम् आरोग्योदकञ्च। पापोदकं यथा—"पिटायुक्तं यच्च नीरं कृमिकीटसमाकुलम्। समलं नीलशैवालं पापन्तु नर्द्दितञ्च यत्। स्नाने पाने न तच्छस्तं नराणां वाहवेषु च। स्नानेन त्वग्भवान् रोगान् कण्डूकुष्ठविवर्द्धनम्। पानेन कफगुल्मानां क्रमीणां वर्द्धकं तथा। करोति विविधान् रोगान् तस्मात्तत्परिवर्ज्जयेत्॥" रोगोदकं—"बहुदुष्टलता-कुञ्जे कायकुष्ठैश्चया युतः। अन्यथोदपिण्डं च कृमिशैवालसंवृतम्। क्लिन्नं शुद्धिच्छिद्रदन्तं इव मृणालिरितं भवेत्। बहुदृष्टपर्णयुक्तं दुर्गन्धं मृतगन्धवत्। रोगोदकं विजानीयात्तद्रोगि विदधाम् गदान्। गुल्मदुष्टञ्च कण्डूञ्च सेवितेन करोति हि॥" अंशूदकं पर्य्याये द्रष्टव्यम्। आरोग्योदकं—"पादशिष्टन्तु क्वथितं तदारोग्यजलं विदुः। वातश्लेष्महरं पथ्यं मारुतचापकर्षति। सद्योज्वरं हरत्याशु समेदकफनाशनम्। प्रतिश्यायं पाचयति गुल्मगुल्मार्शनाशनम्। शोथमथ कुष्ठानां पाण्डुशोफोदरापहम्। अजीर्णञ्च जरत्याशु शीतमुष्णोदकं निशि॥" अग्नि, ०८.। गवोतमांसी। वै. निघ.।

**जलकङ्कः**। पुं। हस्तिनि। शब्दर.।

**जलकण्टकः**। पुं। शृङ्गाटके। पानिफल। प. सु.। कुम्भीरे। हारा.।

**जलकदली**। स्त्री। अनामख्यातजलकन्द-विशेषे। जलदमनी। प. सु.।

**जलकन्दः**। पुं। शृङ्गाटके। पानिफल। वै. निघ.। (न्दा) स्त्री। जलकदल्याम्। प. सु.।

**जलकपिः**। पुं। शिशुमारे। शुशुक। हारा.।

**जलकपोतः (कः)**। पुं। जलपक्षिविशेषे। छलपिपि। वै. निघ.।

**जलकरङ्कः**। पुं। नारिकेलफले। पद्मे। शङ्खे। शिफा.। हारा.। जलजलतायाम्। मे.।

**जलकर्णा**। स्त्री। कर्कोटायाम्। कांणछिड़ा, कान्ड़िया। प, द. यष्ट. चि. रसेन्द्रसं.।

**जलकल्कः**। पुं। जम्बाले। शेओला, दाँचि। हारा.। कर्दमे।

**जलकाकः**। पुं। जलचरपक्षिविशेषे। पानकौड़ी। तत्पर्य्यायः,—दात्यूहः, कालकण्ठकः। तन्मांसगुणाः—स्निग्धं गुरु हिमं वातहरम्। रा. नि. व. १०।

**जलकाङ्क्षः (ङ्क्षिः)**। पुं, स्त्री। हस्तिनि। हारा.।

**जलकामः**। पुं। जलवेतसे। श. द. २२५.।

**जलकामा**। स्त्री। अम्भाकुल्याम्। वै. निघ.।

**जलकामुकः**। पुं, स्त्री (का, की)। कटुत्रिमीनामसर्पे। रा. नि. व. ५।

**जलकिराटः**। पुं। नक्रे। शिशुमारे। हारा.।

जलकुक्कुटः। पुं। डहुके। डाक पाखी। कारण्डवे। वै. निघ.।

जलकुक्कुभः। पुं। जलकुक्कुटे। কোড়া পাখী। श. च.। तत्पर्य्यायः,—कोयष्टिः, शिखरी।

जलकुक्कुटी। स्त्री। गङ्गाचिल्लीपक्षिणि। গাংচীল। हारा.।

जलकुण्ड(न्त)लः। पुं। शैवाले। भूरिप्र.।

जलकुब्जका। स्त्री। शृङ्गाटके। পানিফল। कुम्भीरे। वै. निघ.। पुं। शैवाले।

जलकुम्भी। स्त्री। (कः) पुं। कुम्भिकायाम्। পানা। भे.। चक्र.।

जलकूपी। स्त्री। पुष्करिण्यां। हारा.। कूपे।

जलकूर्म्मः। पुं। शिशुमारे। শুশুক। त्रिका.।

जलकेशः। पुं। शैवाले। हारा.।

जलगण्डः। पुं। शङ्खे। के.।

जलगुल्मः। पुं। क्षुद्रसरोवरे। मे.। कच्छपे। हारा.।

जलगोजकम्। क्ली। पिण्ड प्रति खाद्यते कावेलईगजफले। वै. निघ.।

जलङ्गः। पुं। महाकाले। रा. नि. व.।

जलचत्वरः। पुं। तड़ागे। --

जलचरः (चारी (रिन्))। पुं। शङ्खे। मत्स्ये। श. च.। पुं, स्त्री। जलचरप्राणिमात्रे हंससारसकादम्बबकक्रौञ्चादौ। प. मु.। "कुरर बक-मकराः वाड चटक पिक भङ्ग-सारसाः। आड़ि दात्यूह-हंसा जलकरटि-कपिञ्जल-टिट्टिभाद्याश्च। जलेचरा विहङ्गाश्च॥" अग्नि. २० अ.। मांसगुणाः—गुरूष्णं स्निग्धं मधुरं वातघ्नं शुक्रलञ्च। रा. नि. व. १७।

जलजः। त्रि। जलवासिजन्तुमात्रे। पुं। हिज्जलवृक्षे। रा. नि. व. ८। मत्स्ये। श. च.। शैवाले। जलवेतसे। कुचेलके। काकतिन्दुके। जलमधूके। रा. नि. व. १३। क्ली। मौक्तिके चापे। लवणे। लवङ्गे। देवधान्ये। वै. निघ.। पद्मे। शङ्खे। नक्षत्रराजमृगाङ्के। वै. निघ २म. खण्ड. धि.।

जलजन्तुः। पुं। जलवासिप्राणिमात्रे। अम.।

जलजन्तुका। स्त्री। जलौकायाम्। भ.।

जलजन्म। क्ली। पद्मे। हे. च.।

जलजम्बूका। स्त्री। भूमिजम्बूवृक्षे। বনজাম। भा.। See क्षुद्रजम्बूः।

जलजसुमनाः। स्त्री। मल्लपुष्पां। वै. निघ.।

जलजा। स्त्री। जलीयष्टिमधुनि। रा. नि. व.६। सोमराज्याम्। वै. निघ.।

जलजातः। पुं। जलवेतसे। वै. निघ.।

जलजाता। स्त्री। कुङ्कुमशालौ। শালিধান্যবিশেষ। रा. नि. व. १६।

जलजिह्वः। पुं। शिशुमारे। कुम्भीरे। हारा.।

जलजीविनी। स्त्री। जलौकायाम्। জোঁক। वै. निघ.।

जलडिम्बः। पुं। शुक्तौ। ঝিনুক। शम्बूके। শামুক। हारा.।

जलतण्डुलीयम्। क्ली। कच्चटे। কাঁচড়াদাম। भा.।

जलतापिकः (तापी)। पुं। मत्स्यविशेषे। ইলিশ মাছ। कावकमत्स्ये। श. र.।

जलतालः। पुं। इल्लीशमत्स्ये। त्रिका.।

जलतिक्त(क्ति)का। स्त्री। शल्लकीवृक्षे। रा. नि. व. ११।

जलता। स्त्री। छत्रे। ছাতা। हारा.।

जलदः। पुं। मुस्तके। च. द. वा. व्या. चि, एलादितैले। पीतबालके। পীত বালা। कारस्करवृक्षे। কুচিলা গাছ। भा.।

जलदागमः। पुं। वर्षाकाले। रा. नि. व. २१।

जलदाशनः। पुं। शाके। शालवृक्षे। श. च.।

जलधरः। पुं। मुस्तायाम्। अम.। च. द. अतिसा. चि. कच्चटादिः। तिनिशवृक्षे। रा. नि. व.९।

जलधराधारः। पुं। पीतोशीरे। वै. निघ.।

जलधिः। पुं। समुद्रे। लीला.।

जलधिगा। स्त्री। नद्याम्। हे.।

जलनकुलः। पुं। जलमार्ज्जारे। উদ্বিড়াল। त्रिका.। तत्पर्य्यायः,—उद्रः, जलमार्ज्जारः, जलाखुः, जलप्लवः, (त्रि.), जलविड़ालः, नीराखुः (हा.), पानीयनकुलः, वसी (हे.), नीरजः, नकुलः (शब्दर.)।

जलनिधिः। पुं। समुद्रे। च.।

**जलनील:** । पुं । शैवाले । भ. ।

**जलनीलिका (ली)** । स्त्री । शैवाले । रा. नि. व. ८ । भा. इस. नाड़ीशाक ।

**जलनिम्ब:** । पुं । जलजम्बूके । वै. निघ. ।

**जलपटालिका** । स्त्री । जलौकायाम् । जोंक । शब्दर. ।

**जलपत्रिका** । स्त्री । पद्मिन्याम् । पद्मेर झाड़ । वै. निघ. ।

**जलपक्षी** । पुं । हंसादिजलचरपक्षिषु । तन्मांसं स्निग्धं हिमं गुरु वृष्यं वातहरञ्च । रा. नि. व. १० ।

**जलपाक:** । पुं । वारिपाके । निरुक्त । "काथे गृहीत्वा द्रव्यस्य जायते भाजिर्कोऽपि । चतुर्गुणं प्रयोक्तव्यं जलपाके त्वयं विधिः ।" वा. चि. २८. ।

**जलपादप:** । पुं । हंते । वै. निघ. ।

**जलपारावत:** । पुं । जलकपोते । रा. नि. व. १९ । तत्पर्यायः,—कोपो, जलकपोत ( भा. ) ।

**जलपिप्पली** । स्त्री । महाराष्ट्रीक्षुपे । काँचड़ा शाग । हिं पानिपिप्पल, जलपिपरी । रा. नि. व. ४ । तत्पर्याय,—महाराष्ट्रा, शारदी, तोयवल्लरी, मत्स्यादनी, मत्स्यगन्धा, लाङ्गली, शकुलादनी, अग्निज्वाला, चित्रपर्णी, प्राणदा, तृणशीता, बहुशिखा । गुणाः—जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः । संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा । कटुपाकरसा रुच्या कषाया वह्निवर्द्धिनी ॥" भा. पू. गुडूच. । कटुः तीक्ष्णा कषाया मदगुदहरी श्रमशोफादिदोषहरनदीपनी च । रा. नि. व. ४ ।

**जलपीयम्** । क्ली । जले । शब्दर. ।

**जलपुष्पम्** । क्ली । जलजातपुष्पे । यथा—"अष्टधा वामदानि स्युः उत्पलानि चतुर्विधा । जलजीवी च कुमुदा जलपुष्पचतुष्टयम् ॥" ध.नि. ।

**जलपृष्ठजा** । स्त्री । शैवाले । श. च. ।

**जलप्रद:** । पुं, क्ली । पीतवालके । वै. निघ. ।

**जलप्राणी** । पुं । जलजन्तौ । वै निघ. ।

**जलप्रिय:** । क्ली । धन्याके । रा. नि. व. ६ । चातकपक्षिणि । श. र. । मत्स्ये । श. च. । शोभाञ्जनवृक्षे । रा. । स्त्री । हिमशीषिकायाम् । शिशु । श. म. ।

**जलप्रायम्** । क्ली । अनूपदेशे । अमः ।

**जलप्लव:** । पुं । जलमार्जारे । उद्बिड़ाल । हारा. ।

**जलफलम्** । क्ली । शृङ्गाटके । पानिफल । भा. ।

**जलफेन:** । पुं । समुद्रफेने । वै. निघ. ।

**जलबन्ध: (बन्धु:)** । पुं । मत्स्ये । श. च. ।

**जलब्राह्मी** । स्त्री । ब्राह्म्याम् वोलशाक । वै. निघ. । हिमशीतिकायाम् । शिशु । चिका. । हारा. ।

**जलभू:** । पुं, स्त्री । कतके । काँचड़ा । श. च. ।

**जलमण्डूपिका (पी)** । स्त्री । शैवाले । वै. निघ. । वारिपर्ण्याम् । पाणा । रस. कौ. ज्वालामुखरसे ।

**जलमद्गु:** । पुं । मत्स्यरङ्कपक्षिणि । माछराङा । हारा. ।

**जलमधु(धू)क:** । पुं । जलजातमधूकवृक्षे । जलमउआ । तत्पर्यायः,—मधूल्यः, दीर्घपत्रकः, मधुपुष्पः, क्षौद्रप्रियः, पतङ्गः, कीरेष्टः, गैरिकाक्षः । गुणाः—मधुरः कषायः वान्तिहृत् व्रण-शुक्रवर्द्धनः रसायनः शीतलश्च । रा. नि. व. ११ । "मधूकपुष्पं मधुरं शीतलं गुरु बृंहणं । बलशुक्रकरं प्रीतं वातपित्तविनाशनम् । फलगुणाः—शीतं गुरु स्वादु शुक्रलं वातपित्तनुत् । अहृद्यं हन्ति पित्तास्रदाहतृष्णाक्षतक्षयान् ॥" भा. ।

**जलमसि:** । पुं । मेघे । हा. ।

**जलमक्षिका** । स्त्री । वारिमक्षिकायाम् । जलमाछी । चिका. ।

**जलमार्जार:** । जलबिड़ाले । उद्बिड़ाल । चिका. ।

**जलमीन:** । पुं । मत्स्यभेदे । वै. निघ. ।

**जलमुक् (च्)** । पुं । मेघे । श. । मुस्तके ।

**जलमुस्तम्** । क्ली । जलजमुस्तायाम् । वै. निघ. ।

**जलमूर्त्तिका** । स्त्री । करकायाम् । श. च. ।

**जलमोदम्**। क्ली। उशीरे। रा. नि. व. १२।

**जलयष्टिः**। पुं। वल्लीयष्टिमधुनि। वै. निघ.। जलयष्टिर्विषच्छर्द्दिं तृष्णाग्लानिक्षयापहः। अर्कप्र.।

**जलरङ्कः**। पुं। वकपक्षिणि। वक पाखी। हे. च.।

**जलरङ्कुः**। पुं। हरिणे। वै. निघ.। दात्यूह-पक्षिणि। डाक पाखी। हारा.।

**जलरञ्जः**। पुं। वकपक्षिणि। हे. च.।

**जलरण्डः**। पुं। जलसर्पभेदे। जलविन्दौ। हे. च.। श. र.।

**जलरसः**। पुं। लवणे। हारा.। सौवर्चललवणे। क्षारलवणे। हारा.।

**जलरुट् (हम्)**। क्ली। पद्मे। हे. च.।

**जलरुहा**। स्त्री। कुङ्कुमशालौ। टेंसवाटिक धान्यविशेष। रा. नि. व. १६।

**जलरूपः**। पुं। मकरे। त्रिका.।

**जललता**। स्त्री। जलतरङ्गे। हा.।

**जलवरण्टः**। पुं। जलवसन्तरोगे। पानवसन्त। हारा। तत्पर्य्यायः,—मोगः। हा.।

**जलवल्कलः**। पुं। कुम्भिकायाम्। पाना। हारा.।

**जलवल्ली**। स्त्री। शृङ्गाटके। पाणिफल। रा. नि. व. ७।

**जलवायसः**। पुं। जलकाके। पानकौड़ि। हे. च.।

**जलवालिका**। सौदामन्याम्। विद्युत्।

**जलवासः (सा:)**। पुं। विष्णुकन्दे। रा. नि. व. ७। गुण्डासिनीतृणे। रा. नि. व. ८। क्ली। उशीरे। रा. नि. व. १२।

**जलवाहः**। पुं। मेघे। हे.।

**जलविक्रमा**। स्त्री। सलकीरुचि। रा. नि. व. ११।

**जलविड़ालः**। पुं। जलमार्जारे। उद्बिड़ाल। हारा.।

**जलविन्दुजा**। स्त्री। यावनालीशर्करायाम्। रा. नि. व. १४।

**जलविल्वः**। पुं। कर्कटे। पद्माक्षे। जल-वल्कले। पाना। हारा.।

**जलवृश्चिकः**। पुं। इचाकमत्स्ये। एँचला माछ। हारा.। चिङ्गटमत्स्ये। चिङ्गड़ीमाछ। त्रि.।

**जलवेतसः**। पुं। जलजातवेतसविशेषे। जल-वेत। सं वज्राणु। कं वैईयसरणु। प. मु.। तत्पर्य्यायः,—निकुञ्चकः, परिव्याधः, नादेयी। गुणाः—तिक्तशीतलः व्रणशोधनः कफरक्तपित्तघ्नः संग्राही कषायो रक्षोघ्नश्च। रा. नि. व. ९।

**जलव्यधः**। पुं। कङ्कतीटमत्स्यभेदे। काँकिला माछ वा गान्धाड़ा। हारा.।

**जलव्यालः**। पुं। जलसर्पे। अम.।

**जलशिरीषः (षिका)**। पुं, स्त्री। शिरीष-भेदे। हिं टिटिनी। "त्रिदोषविषकुष्ठार्शोहरी वारिशिरीषिका।" भा.।

**जलशुक्तिः**। स्त्री। शम्बूकायाम्। झिनुक। जलसिंपी इति च ख्याते। तत्पर्य्यायः,—वारि-शुक्तिः, क्षमिशुक्तिः, पुष्टिका, तोयशुक्तिका, क्षुद्र-शुक्तिका, शम्बुका, नरशुक्तिः। गुणाः—"कटुः स्निग्धा दीपनी गुल्मशूलविषदोषहरी रुच्या पाचनी बल्या च।" रा. नि. व. १३।

**जलशुचिः**। पुं। शृङ्गाटके। पाणिफल।

**जलशूकम्**। क्ली। शैवाले। हे. च.।

**जलशूकरः**। पुं। शिशुमारे। शुशुक। हारा. कुम्भीरे। हे. च.।

**जलश्यामाकः**। पुं। तृणधान्यविशेषे। गुणाः —श्यामाकवत्।

**जलसन्त्रासः**। पुं। कुक्कुरदंशजरोगविशेषे। येन जल दृष्ट्वा त्रस्यति। वा. चि.।

**जलसम्भवः**। पुं। जलवेतसे। रा. नि. व. ९।

**जलसर्पिणी**। स्त्री। जलौकायाम्। जोँक। हे. च.।

**जलसूकरः**। पुं। कुम्भीरे। वनसूकरे। वै. निघ.।

**जलसूचिः**। पुं। क्रौञ्चपक्षिणि। कङ्कतोट-मत्स्ये। जटा.। शृङ्गाटके। शिशुमारे। मे.। काके। हे. च.। स्त्री। जलौकायाम्। जोँक।

**जलस्था**। स्त्री। गण्डदूर्वायाम्। रा. नि. व. ८।

**जलह्रासः**। पुं। समुद्रफेने। त्रिका.।

**जलेरुहा** । स्त्री । कुटुम्बिनीक्षुपे । रा· नि· व· ५ ।

**जलेवाहः** । पुं । जलकुक्कुटे । वै· निघ· ।

**जलेशयः** । पुं । जलचारिव्याघ्रे ।

**जलोका** । स्त्री । जलायुकायाम् । हारा· । अम· ।

**जलोदरः** । पुं, क्ली । तन्नामकोदररोगभेदे । जल उदरी । निदानलक्षणं यथा—"यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढ़ः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दूष्यन्ति हि तद्वहानि । स्नेहोपलिप्तेष्वथवापि तेषूदकोदरं पूर्ववदभ्युपैति । स्निग्धं महत्तत्परिवृत्तनाभि समाततं पूर्णमिवाम्बुना च । यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् ॥ जन्मनैवोदरं सर्व्वं प्रायः कृच्छ्रतमं मतं । बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥" इति । मा. नि· ।

**जलोदरारिरसः** । पुं । जलोदराधिकारे रसः । रसगन्धकौ प्र· २ तो. (मतान्तरे गन्धकः ४ तो.) मनःशिला हरिद्रा जयपालबीजं त्रिफला त्रिकटु चित्रकमूलं एषां प्रति १ तो· दन्तीरसेन स्नुहीक्षीरेण (सिजूर आठा) भृङ्गराजरसेन च पृथक् ७ भावयित्वा संशोष्य च वटीं कुर्य्यात् । मात्रा २ र. ।

**जलोद्भवः** । पुं । मत्स्ये । शाँक । वै· निघ· । स्त्री । लघुब्राह्मीशाके । कुङ्कुमशाली । रा· नि· व· ५।१६ ।

**जलोद्भूता** । स्त्री । गुण्डालायाम् । रा.नि·व.५ ।

**जलोरगी** । स्त्री । जलौकायाम् । जोँक । अ. टी· ।

**जलोलूका** । स्त्री । पद्मबीजे । रा· नि· व· १० ।

**जलौकः** । पुं । जलवेतसे । वै. निघ· ।

**जलौकसः** । पुं । (सौ) स्त्री । जलौकायाम् । अ. ।

**जलौका** । स्त्री । जलायुकायाम् । हारा· । जोँक । सा द्वादशविधा । अलगर्द्दा, इन्द्रायुधा, गोचन्दना, कर्बुरा, सामुद्रिका, एताः षट् सविषाः । कपिला, पिङ्गला, शङ्कुमुखी, मूषिका, पुण्डरीकमुखी, सावरिका, एताः षट् निर्व्विषाः । जलौकाशोधनादिविधिर्यथा,—"चिरन्तनजलौकायां तासपात्रेण रक्षयेत् । चतुर्मासं निशाचूर्णं जलाष्टपलके क्षिपेत् । तस्मिन् क्षिपेत् जलौकां तां स्वयं त्यक्त्वा परित्यजेत् । कृतलाला जलौकाया सा योज्या रक्तमोक्षणे ॥" अनुपयोज्या-जलौकालक्षणं यथा,—लोमपृष्ठा च कपिला नातिस्थूला न दुर्व्वला । वर्ज्जनीया प्रयत्नेन भिषजा कीर्त्तिमिच्छता ।" रस. प. । See जलायूका ।

**जलौकाविधिः** । पुं । तया रक्तमोक्षणकार्य्ये । जोँक धरान । "अथ जलौकावसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुक्षः स्यात् । गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्त्तस्थिता विगतक्लमा ज्ञात्वा ताभीरोगं ग्राहयेत् । सूक्ष्मशुक्लार्द्रपिचुप्लोतावच्छन्नां कृत्वा मुखमपावृणुयादगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्याच्छस्त्रपदानि वा कुर्व्वीत । यद्येवमपि न गृह्णीयात् तदान्यां ग्राहयेत् । यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नमय्य च स्कन्धं तदा जानीयात् गृह्णातीति गृह्णन्तीश्चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च ।" इत्यादि । तस्य गुणाः—"शीताधिवासा मधुरा जलौका वारिसम्भवा । तस्मात्पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥" सु· सू· १३ अ· ।

**जलौदनम्** । क्ली । सजलान्ने । भा. कुष्ठचि. ।

**जवनः** । पुं । अश्वे । शीकारिदरिवे । रा· नि. व· १९ ।

**जवनालः** । पुं, क्ली । धान्यविशेषे । जनार । तद्बीजगुणाः—स्वादु शीतलं वातलं कफपित्तघ्नञ्च । राज. ।

**जवनी** । स्त्री । स्वनामख्यात-ओषधिविशेषे । हे. ।

**जवली** । स्त्री । कषायफलवृक्षे । जओयार । तस्याः फलगुणाः—"कषायं कफपित्तघ्नं किञ्चित्तिक्तं रुचिप्रदम् । हृद्यं सुगन्धि विशदं जवलीफलमुच्यते ॥" सु. ।

**जवसम्** । क्ली । तृणे । घासे । श, र. ।

**जवसाह्वा** । स्त्री । यमान्याम् । मद. व. २ ।

**जवा** । स्त्री । ओड्रपुष्पवृक्षे । जवाफुलेर गाछ । तत्पर्य्यायः,—ओड्रपुष्पं (क·), ओड्रं (मे.), जपा, ओड्राख्या, रक्तपुष्पी, अर्कप्रिया, रागपुष्पी, प्रतिका, हरिवल्लभा । गुणाः,—कटुत्वं, उष्णत्वं, इन्द्रलुप्तविनाशकत्वं, मलमूत्रस्तम्भन-रञ्जनकारित्वञ्च । राज· । रा. नि. व. १० । घृतभर्ज्जितजवापुष्पम् आर्त्तवकरम् । च, द. ।

**जवादि** । क्ली । गन्धराजे । गन्धराज, थाटोशी ।

मूल...।" च.द.ज्व.चि.अपराजिताधूपे। या.ज्व. रास्नादिः। "रास्नाश्वगन्धोदारु।" दारुगुणे। गार्मुत। र.मा.गं.। विपघ्नि। मे.। कर्पूर-हरिद्रायाम्। भा.।

**दारुकाम्।** क्ली। देवदारुणि। रा.नि.व.१२। ना.व्या.चि.। तैलदेवदारुणि। शीघ्रविघ्ने। वै. निघ.।

**दारुकदली।** स्त्री। काष्ठकदल्याम्। वन कला। रा.नि.व.११।

**दारुगन्धा।** स्त्री। भीड़ानामकदेवदारुभेदे। रा.नि.व.१२।

**दारुगरलम्।** क्ली। दारुमूषाख्यविषे।

**दारुणः।** पुं। चित्रकवृक्षे। रा.नि.व.६.२९। दारुणरोगे। क्ली। शतकपाले।

**दारुणकः।** पुं। गुल्मभेदे। वत्सनाभ। च. निघ.१ध.मूर्च्छा.चि.। स्त्री। तन्नामकक्षुद्ररोगे। मरामी मुंगरी। लक्षणं यथा—"दारुणा कण्डुरा रुक्षा केशभूमिः प्रपाट्यते। कफमारुतकोपेन विद्याद्दारुणकन्तु तम्॥" सु.नि.१३अ.।

**दारुणकर्म्म।** क्ली। मृदुव्रणानां कठिनीकरणे। कोमल क्षतस्थान कठिन करा। सु.।

**दारुनिशा।** स्त्री। दारुहरिद्रायाम्। दारु-हरिद्रा। रा.नि.व.६। वै.निघ.१ध.मज्जलक्षाधा-तैले। च.द.वा.र.चि., मे.दृ.चि.। "वचादेवीदारु-निशा।"

**दारुपत्नी।** स्त्री। हिङ्गुपत्र्याम्। रा.नि.व.६।

**दारुपीता।** स्त्री। दारुहरिद्रायां। रा.नि.व.६।

**दारुफलम्।** क्ली। पेस्ता इति ख्याते फले। वै.निघ.।

**दारुभद्रम्।** क्ली। देवदारुणि। भा.।

**दारुमत्स्या (ह्वया,ह्वा)।** स्त्री। गोधायाम्। गोसाप। रा.नि.व.१९।

**दारुमुखा।** स्त्री। दारुमूषाख्यविषे। भा.।

**दारुमुख्याह्वा।** स्त्री। गोधायाम्। र.।

**दारुमूषा।** स्त्री। दार्मुश इति प्रसिद्धे स्थावर-विषभेदे। गार्मुज। भा.म.१भ.ज्व.चि.।

**दारुमोचः।** पुं। स्वनामख्यातविषभेदे। गार्मुच। प.मु.।

**दारुविषम्।** क्ली। दारुमोचविषे। "भवेदाग्र-विषं दारुविषं पापापसंशकम्। यदि दाः मन-गोदन्तदाड़िमीस्फटिकादयः॥" प.मु.।

**दारुसिता।** स्त्री। (Cinnamomum zeylanicum.) दारुसितेतिख्यातायां मधुर-त्वचि। दारुचिनि। हिं डालचिनि। तें सनलिंग। ता. कारुवा। गुणाः—"उक्ता दारुसिता स्वाद्वी तिक्ता चानिलपित्तहृत्। सुरभिः शुक्रला वर्ण्या मुखशोषतृषापहा।" आ.उ.धा.क्षी.चि.।

**दारुहरिद्रा।** स्त्री। (Coscinium fenes-tratum. [Berberideae] Berberis Asiatica and other species.) स्वनाम-ख्यातपीतकाष्ठविशेषे। दारुहरिद्रा। हिं दा दारुहलदि, झारकेहलदि। क मरदरिसिन। तें मनिपसुपु। ता. मरमञ्जल। तत्पर्य्यायः,— पीतद्रुः, कालीयकः, हरिद्रुः, हेमकान्तिः, दार्व्वी, पचम्पचा, पर्जनी (च.), हरिद्रा (गन्ध.), काम-वती, दारुपीता, कर्कटिनी, काठा, मर्म्मरी (मे.), द्वितीया (भा, म.), कपीतकं (भा.), पीतिका, पीतदारु, स्थिररागा, कामिनी, कटङ्कटेरी, पर्जन्या, पीता, दारुनिशा, कालीयकः। गुणाः —तिक्ता कटूष्णा व्रणघ्नी मेहघ्नी कण्डूविसर्प-त्वग्दोषकर्णाक्षिरोगघ्नी च। रा.नि.व.६। "दार्व्वी-निशागुणाः किन्तु नेत्रकर्णास्यरोगनुत्।" भा.। कफपित्तशोफघ्नी विशेषेण कफाभिष्यन्दहरी च। राज। [ सु.सू.०प.।

**दारुहस्तकः।** पुं। दर्व्वी। काठेर हाता।

**दार्दुरः।** पुं। दक्षिणावर्त्तशङ्खे। लाक्षायाम्। जले। शब्दार्थकल्पतरुः। विषभेदे। मे.।

**दार्व्वाटः।** पुं। मयूरे। वै.निघ.।

**दार्व्वाघाटः (तः)।** पुं। काष्ठकुट्टपक्षिणि। काठ्ठोकरा पाखी। अम.। म.र.।

**दार्व्विकरः।** पुं। विषभेदे।

**दार्व्विका।** स्त्री। खर्परधातौ। तांगत्र। प. मु.। गोजिह्वाक्षुपे। रा.नि.व.४। रसाञ्जने। वै. निघ.।

**दार्व्विपत्रिका।** स्त्री। दार्व्वीशाके। गोजिया शाक। र.मा.।

**दार्व्वी।** स्त्री। दारुहरिद्रायाम्। प.मु.।

**दार्व्वीक्वाथसमुद्भवम्** । क्ली । कृत्रिमरसाञ्जने । रा.नि.व.१३ ।

**दार्व्वीक्वाथोद्भवम्** । क्ली । कृत्रिमाञ्जने । रसोत् इति पारस्यभाषा । प.मु. । "दार्व्वीक्वाथसमं क्षीरं पादं पक्त्वा यथा घनं । रसाञ्जनमिति ख्यातं नेत्रयोः परमं मतम् ।" भा. ।

**दार्व्वीत्वक्** । स्त्री । दारुहरिद्रात्वचि । सि.यो. काम.चि.मण्डुरवटके । "दार्व्वीत्वक्त्रिफलाव्योषं ।" त्वच एव ग्राह्यत्वम् । अभावे काष्ठम् । श्रीकण्ठः ।

**दार्व्वीभेदा** । स्त्री । कर्पूरहरिद्रायाम् ।

**दार्व्यम्** । क्ली । रसाञ्जने । वै.निघ. ।

**दार्व्यादिः** । पुं । कषायविशेषे । "दार्व्वीरसाञ्जन-किराततृषाब्द-बिल्व-सक्षौद्रचन्दन दिनेशभवप्रसूनैः । क्वाथः कृतो मधुयुतो विधिना विनीतः रक्तं सितञ्च सरुजं प्रदरं निहन्ति ।" भा. । "दार्व्वी-रसाञ्जन-वृषाब्द-किरात-बिल्व-भल्लातकैरथकृतो मधुना कषायः ।" च.द. ।

**दालम्** । क्ली । अष्टविधमध्वन्यतममधुविशेषे । कुट्टेर मधु । एतदापीतवर्णै सूक्ष्ममक्षिकाभिः इन्द्रनीलवर्णाभिः तरुकोटरादौ उत्पाद्यते । "इन्द्र-नीलदलाकाराः सूक्ष्माश्चिन्वन्ति मक्षिकाः । यद्वृक्ष-कोटरान्तःस्थं मधु दालमिदं स्मृतम् ॥" गुणाः— कटु कषायमम्लं मधुरं पित्तकरञ्च । रा.नि.व.१४ । अपिच—"संस्रुत्य पतितं पुष्पात् यत्तु पत्रोपरि-स्थितम् । मधुराम्लकषायञ्च तद्दालमधु कीर्त्तितम् । दालं मधु लघु प्रोक्तं दीपनीयं कफापहं । कषायानु-रसं रुक्षं रुच्यं छर्द्दिप्रमेहजित् । अधिकं मधुरं स्निग्धं बृंहणं गुरुभारिकम् ।" भा. । पुं । कोद्रवे । ऐ.च. ।

**दालकशर्करा** । स्त्री । दालकमधुकृतशर्करा-याम् । दालमधुर चिनि । सा तन्मधुतुल्यगुणा । रा.नि.व.१४ ।

**दालनः** । पुं । वायुजन्यदन्तगतमुखरोगे । "दीर्य्यमाणेष्विव रुजा यस्य दन्तेषु जायते । दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥" मा.नि. । तथा "दाल्यन्ते बहुधा दन्ता यस्मिन् तीव्ररुजा-न्विताः । दालनः स इति ज्ञेयः सदागति-निमित्तजः ॥" सु.सू.४५अ. ।

**दालवः** । पुं । स्थावरविषभेदे । ऐ.च. ।

**दाला** । स्त्री । पारिभद्रे । रा.नि.व.८ । इन्द्रवारुण्याम् । वै.निघ. । महाकाले । माकाल । भा. ।

**दालिः** । स्त्री । द्विदले । दाल । "स्फोटस्तु चण-कादीनां दालिस्तु परिकीर्त्तिता ।" रा.नि.व.१६ ।

**दालिका** । स्त्री । दाल्याम् । डाल । महा-काले । माकाल । भा. ।

**दालिमः** । पुं । दाडिम्बवृक्षे । अ.टी.भ. ।

**दाली** । स्त्री । देवदालीलतायाम् । पीत घोषालता । हिं घघरवेल । रा.नि.व.३ । See अगरी । द्विदले । दाल । "दलितस्तु शमीधान्यं दालिर्दाली स्त्रियामुभे ।" तत्पाकविधिः—"दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभिः । संयुक्ता सूपनाम्नी स्यात्कथ्यन्ते तद्गुणा अथ । सूपो विष्टम्भको रुचः शीतस्तु स विशेषतः । निस्तुषो भृष्टसंसिद्धो लाघवं सुतरां व्रजेत् ॥" भा । विट्खदिरवृक्षे । गुयेबावला । रा.नि.व.८ ।

**दावः** । पुं । वने । दावाग्नौ । अ. । अग्नौ । अ.टी. ।

**दावाग्निः (नलः)** । पुं । वनोद्भवाग्नौ । शब्दर. ।

**दाशः** । पुं । आर्त्तगले । झाँटी ।

**दासः** । पुं । नीलझिण्ट्याम् । उष्ट्रे । वै.निघ. ।

**दास(श)पु(पू)रम्** । क्ली । जलमुस्तके, परि-पेलवके । नागरमुस्ता । श.र. । रा.नि.व.८ ।

**दासिका** । स्त्री । दासीकुरुण्टके । नीलपुष्प झाँटी । श.चि. ।

**दासी** । स्त्री । पीतपुष्पझिण्टीक्षुपे । पीतझाँटी । नीलझिण्ट्यां । कूलझाँटी, नीलझाँटी । रा.नि.व. १० । काकजङ्घायाम् । केउआका । रा.नि.व. ४ । See नीलाम्लानः ।

**दासीकुरुण्टकः** । पुं । नीलपुष्पझिण्टीक्षुपे । नीलझाँटी । सु.सू.३८अ. । See नीलाम्लानः । "नीलपुष्पः स एव दासीकुरुण्टकः ।" डल्वणः ।

**दासेरः (कः)** । पुं । उष्ट्रे । मे. ।

**दास्यादिः** । पुं । विषमज्वरे कषायभेदे । "दासीदारु-कलिङ्ग-लोहितलता-श्यामाकपाठाशठी-गुडूचीशीर-किरात-कुञ्जरकणा-त्रायन्तिकापद्मकैः । वज्री-धान्यक-नागराब्द-सरलैः प्रियङ्गुसिंहीशिवा-व्याघ्रीपर्पटदर्भमूलकटुकानन्तामृतापुष्करैः । धातुस्थं विषमं त्रिदोषजनितं...... ।" भैष. ।

**दाहः** । पुं । भस्मीकरणे । सर्व्वाङ्गसन्तापे । "सर्व्वाङ्गीणस्तीव्रतमो दाहः ।" अयन्तः । वा.ज्व.चि.१ष. । तन्नामकपित्तजरोगे । अमूनि रोगे । "त्वचं प्राप्य सनातीमा पित्तरक्ताभिमूर्च्छितः । दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥" दाहः तृष्णारोधनरक्तपूर्णकोष्ठगधातुक्षयजपित्तजक्षतजरक्तजभेदेन षड्विधः, मर्म्माभिघातजश्चेत्यात इति सप्तविधः । [ नि.व.६ ।

**दाहकः** । पुं । चित्रके । रक्तचित्रकवृक्षे । रा.

**दाहकर्पितः** । वि । दाहपीड़िते ।

**दाहकाष्ठम्** । क्ली । दाहागुरुणि । वै निघ. ।

**दाहग(गु)रु** । क्ली । अगुरुविशेषे गुर्ज्जरदेशप्रसिद्धे । अगुरुविशेषेण । तत्पर्य्यायः,—दाहागुरु, दाहनागुरु, दाहकाष्ठं, धूमागुरु, तैलागुरु, पूरं, वनवल्लभं । गुणाः—दाहागुरु कटूष्णं केशवर्द्धनं वर्णकरं कफशोषघ्नं सौगन्ध्यप्रदञ्च । रा. नि.व.१२ ।

**दाहज्वरः** । पुं । दाहपूर्व्वके ज्वरे । दाहपूर्व्वक ज्वरे । "करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च । तस्मिन् प्रशान्ते चितरौ कुरुतः शीतमन्ततः ॥" मा.नि. ।

**दाहदा** । स्त्री । नागवल्लीलतायाम् । वै.निघ. ।

**दाहनिःश्वासः** । पुं । सुगन्धार्जकवृक्षे । वै. निघ. ।

**दाहलवः** । पु । श्मशाने । वि. ।

**दाहसरः** । क्ली । श्मशाने । त्रिका. ।

**दाहहरणम्** । क्ली । उशीरे । श.च. ।

**दाक्षाख्यः** । पुं । सम्रपचिनि । श. ।

**दाक्षायणम्** । क्ली । स्वर्णे । वै.निघ. ।

**दाक्षाय(या)णी** । स्त्री । दन्तीवृक्षे । र.मा. ।

**दाक्षायणीपः (पतिः)** । पुं । चन्द्रे । त्रि. ।

**दाक्षिणात्यः** । पुं । नारिकेलवृक्षे । रा.नि.व. ११ । पाठुल्येन दक्षिणदेशोद्भवोऽयम् ।

**दिक्** । स्त्री । रीतौ । शितम । सु.सू.४३ष. ।

**दिक्कः** । पुं । करिशावके । श.र. ।

**दिक्करिका** । स्त्री । नदीभेदे ।

**दिक्करी** । स्त्री । युवतीस्त्रियाम् । हे. ।

**दिक्पालसङ्ख्या** । स्त्री । दशसंख्यायाम् । ज्याटे । भा.ज्य.कल्पतरौ ।

**दिग्धः** । वि. । विषाक्ते । च. ।

**दिग्धविद्धः** । त्रि । विषाक्तवाणविद्धे । च.द. । विष.चि. ।

**दिङ्गुः** । पुं । त्रिकायां । ३ वा ४ जगदेशु । शब्दार्थकल्पतरुः ।

**दितः** । त्रि । छिन्ने । अम. ।

**दिनम्** । क्ली । दिवसे । रा.नि.व.२१ । तत्पर्य्यायः,—घस्रः, अहः, दिवसः, वासरः (अ.), भास्वरः, दिवा (रा.), वारः, अंशकः, द्यु (शब्दर.), सूर्य्यकालः (श.), वस्तोः, द्युः, भानुः, स्वसरानि, उस्रः, घर्म्मः, पृश्नि, दिवेदिवे, द्यविद्यवि (वेदनि.) ।

**दिनकरः (कृत्)** । पु । सूर्य्ये । हे.च. ।

**दिनकरात्मजा** । स्त्री । यमुनानद्याम् ।

**दिनकेशरः** । पु । अन्धकारे । शब्दर. ।

**दिनकेशान्तकः** । पु । वटपत्रपाषाणभेदे । बड़ पाथरकुचा । वै.निघ. ।

**दिनचर्य्या** । स्त्री । दिवसे योविधिः स्वास्थ्यकामस्याचरणं । तच्च ब्राह्ममुहूर्त्तोत्थानाभीष्टदेवतास्मरणम्, ततोदध्याज्यादर्शविल्वगोरोचनादिदर्शनस्पर्शनादि, घृते स्वमुखदर्शनम्, उषसि मलोत्सर्ज्जनम्, दन्तधावनजिह्वानिर्लेखनमुखप्रक्षालनतैलाभ्यङ्गस्नानभोजनादि च । भा.च.ट. ।

**दिनज्योतिः (स्)** । क्ली । आतपे ।

**दिनदुःखितः** । पु । चक्रवाके । स्त्री । तत्पक्ष्याम् । श.र. ।

**दिनप्रणीः** । पु । सूर्य्ये । त्रि. ।

**दिनप्रभा** । स्त्री । आतपे । रा. ।

**दिनमणिः** । पुं । सूर्य्ये । त्रिका. ।

**दिनादिः** । पुं । प्रभाते । रा.नि.व.२१ ।

**दिनान्तः** । पुं । सायंकाले । अम. ।

**दिनान्धः** । पु । पेचके । वै.निघ. ।

**दिनान्तकः** । पुं । अन्धकारे । त्रि. ।

**दिनावसानम्** । क्ली । दिनान्ते । हे. ।

**दिनेशः** । पुं । सूर्य्ये । अर्कवृक्षे । वै.निघ २भ.वा. व्या.चि.शतपुष्पार्कांशे ।

**दिनेशपुष्पम्** । क्ली । केरदपुष्पे । नीलदन्तीपुष्पे । चि.क्र.मा.मदरचि. ।

**दिलीरम्** । क्ली । शिलीन्ध्रे । কোঁড়ক ছাতা । हारा. ।

**दिवसः** । पुं, क्ली । दिने ।

**दिवसमुखम्** । क्ली । प्रभाते । एला. ।

**दिवा** । अ, पुं (न्) । दिवसे । अम. ।

**दिवाकरः** । पुं । काके । सूर्य्यपर्ण्यां । श.च. । अर्कवृक्षे । अम. ।

**दिवाकीर्त्तिः** । पुं । पेचके । नापिते । हे.च. ।

**दिवाटनः** । पुं । काके । शब्दार्थकल्प. ।

**दिवान्धः** । पुं । पेचके । रा.नि.व.२३ । त्रि । दृष्टिरोगयुक्ते । দিনকাণা । लक्षणं—"प्राप्ते तृतीयं पटलन्तु दोषे दिवा न पश्येत् निशि वीक्षते सः । रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत् ॥" मा.नि. । (न्धा) स्त्री । वल्गुलापक्षिणि । रा.नि.व.१९ ।

**दिवान्धकी (न्धिका)** । स्त्री । कुकुन्दर्य्याम् । छुँचो । वै.निघ. ।

**दिवाभीतः (तिः)** । पुं । पेचके । त्रिका. । श.र. । क्ली । श्वेतपद्मे । वै.निघ. ।

**दिवामध्यम्** । क्ली । मध्याह्ने । हे.च. ।

**दिवास्वापः** । पुं । दिवानिद्रायाम् । দিনে ঘুমান । तस्य विधिः—"सर्व्वर्त्तुषु दिवास्वापः प्रतिषिद्धः अन्यत्र ग्रीष्मात् ।" सु.शा.४अ. । "दिवा स्वप्नीकृतं येस्तु रात्रौ वा यदि वा दिवा । न तेषां स्वपतां दोषो जाग्रतां वा विधीयते ॥" दिवास्वापं न कुर्व्वीत यतोऽसौ स्यात्कफावहः । ग्रीष्मवर्ज्जेषु कालेषु दिवास्वप्नो निषिध्यते ॥" "व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतिसारिणः, शूलश्वासवतस्तृषापरिगतान् हिक्का-मरुत्-पीड़ितान् । क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनो रात्रौ जागरितान् नरान् निरशनान् कामं दिवा स्वापयेत् ॥"

**दिवास्वापा** । स्त्री । पक्षिविशेषे, वल्गुला इति लोके । रा.नि.व.१९ ।

**दिविः** । पुं । चाषपक्षिणि । श.मा. ।

**दिविजम्** । क्ली । कुङ्कुमागुरुचन्दने । वै.निघ. ।

**दिवी** । स्त्री । उपजिह्विकाकीटे । हारा. ।

**दिवोकाः** । पुं । चातके । मे. । हरिणे । वै.निघ. ।

**दिवोदासः** । पुं । काशीराजधन्वन्तरौ । यः चन्द्रवंशीयभीमरथनरपतेः पुत्र आसीत् । त्रिका. ।

**दिवोद्भवा** । स्त्री । एलायां । शब्दार्थकल्पतरुः ।

**दिव्यः** । गुग्गुलौ । रा.नि.व.१२ । यवे । रा.नि.व.१६ । अर्ज्जुनवृक्षे । वै.निघ. । क्ली । कान्तलौहे । प.मु. । लवङ्गे । रा.नि.व.१२ । चन्दने । वै.निघ. । बालके । বালা । वा.द.१३५. ।

**दिव्यकः** । पुं । निर्व्विषसर्पविशेषे । सु.कल्प ४अ. ।

**दिव्यगन्धः** । पुं । गन्धके । रा.नि.व.१३ । क्ली । लवङ्गे । रा.नि.व.१२ ।

**दिव्यगन्धा** । स्त्री । स्थूलैलायाम् । - বড় এলাইচ । रा.नि.व.६ । महाचुञ्चुक्षुपे । रा.नि.व.४ । लवङ्गलतायाम् । श.चि. । [ वै.निघ. ।

**दिव्यचन्दनम्** । क्ली । हरिचन्दने । लवङ्गे ।

**दिव्यचक्षुः** । पुं । वानरे । श.मा. । उपचक्षुषि । চশমা । सुगन्धभेदे । मे. ।

**दिव्यतुम्बी** । स्त्री । अलाबुभेदे । वै.निघ. ।

**दिव्यतेजाः** । स्त्री । ब्राह्मीनाममहाक्षुपे । रा.नि.व.५ ।

**दिव्यपञ्चामृतम्** । क्ली । समभागगव्यघृतदधिदुग्धमधुशर्करासु । "गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्र मिलितम् ।" रा.नि.व.२२ । [ व.१० ।

**दिव्यपुष्पः** । पुं । श्वेतकरवीरवृक्षे । रा. नि.

**दिव्यपुष्पा (ष्पी)** । स्त्री । देवद्रोण्याम् । বড় ঘলঘসা । रा.नि.व.५ ।

**दिव्यपुष्पिका** । स्त्री । देवद्रोणक्षुपे, महाद्रोण्याम् । বড় ঘলঘসা । वै.निघ. । रक्तार्कवृक्षे । र.मा. ।

**दिव्यरथः** । पुं । व्योमयाने । शब्दर. ।

**दिव्यरसः** । पुं । पारदे । रा.नि.व.१३ ।

**दिव्यलता** । स्त्री । मूर्व्वायाम् । रा.नि.व.३ ।

**दिव्यसारः** । पुं । सर्ज्जवृक्षे । শাল বা ধুনার গাছ । रा.नि.व.९ ।

**दिव्या** । स्त्री । महामेदायाम् । ब्राह्म्याम् । ব্রাহ্মী শাক । वन्ध्याकर्कोटक्यां । शतावर्य्याम् । स्थूलजीरके । বড় জীরা । रा.नि.व.५ । श्वेत-

दूर्व्वायां। रा.नि.व.८। आमलक्यां। मे.। हरीतक्याम्। रा.नि.व.११।

**दिव्यान्नम्।** क्ली। उष्णमान्ने। वै.निघ.।

**दिव्येलकः।** पुं। राजिलवद्वैकरञ्जसर्पविशेषे। सु.कल्प.४थ.।

**दिव्योदकम्।** क्ली। आन्तरीक्षजले। तत्पर्य्यायः,—आकाशजलं, खवारि, व्योमोदकं, अन्तरीक्षजलम्। गुणाः—मधुरं, त्रिदोषनाशि, पथ्यदं, रुच्यं, अग्निकरं, तृष्णाश्रममोहापहारकं, पात्रापेक्षिगुणत्वञ्च, अनार्त्तवन्तु तत् त्रिदोषजनकं। रा.।

**दिव्यौषधिः (धी)।** स्त्री। मनःशिलायां। च.द.। मृतलौहे। भा.। च.द.शि.यो.र.चि.चि. खण्डखाद्यलौहे। "दिव्यौषधिहतस्यापि।" शमीमूले। क्ली। स्वर्णमाक्षिके। के.।

**दिष्टम्।** क्ली। दारुहरिद्रायाम्। श.मा.।

**दिष्टान्तः।** पुं। मृत्यौ। अम.।

**दिष्टिः।** स्त्री। परिमाणे। मे.।

**दीर्घिका।** स्त्री। त्रिशतधनुःपरिमितजलाशये। दिघि। "पल्वलं दीर्घिका वापी घटिका मीनगोधिका।" त्रिका.।

**दीदिवि।** क्ली। अन्ने। प.मु.।

**दीनम्।** क्ली। तगरपादिके। रा.नि.व.१०।

**दीना।** स्त्री। छुछुन्दर्य्याम्। वै.निघ.। मूषिकायां। त्रिका.।

**दीनारः।** पुं। माषचतुष्टयमाने। ४ माषा। अम.। स्वर्णमुद्रायां। মোহর। स्वर्णकर्षद्वये। अ.टी.भा.। वर्त्तिस्वन्तलदग्निशिखाजाम्।

**दीपकः।** पुं। काशमर्द्दक्षुपे। চাকন্দা। रा.नि.व.४। चित्रकवृक्षे। वै. निघ. २ भ. वा. व्या.। यवान्यां। र.मा.। अजमोदायाम्। जीरके। वै. निघ.। श्लेष्मपचिनि। বাজ পাখী। है.च.। क्ली। कुङ्कुमे। शर. मयूरपुच्छे। चित्रिशवसर्पविशेषे। सुश्रु.।

**दीपकर्पूरजः।** पुं। कर्पूरे। वै.निघ.।

**दीपकिट्टम्।** क्ली। दीपकज्जले। श.मा.।

**दीपकूपी (खोरी)।** स्त्री। दीपवर्त्याम्। পলতে। श.मा.।

**दीपतरुः।** पुं। सरलतरौ, सरलदेवदारौ। दीपवृक्षे। ডেনদো। रा.नि.व.१२।

**दीपध्वजः।** पुं। कज्जले। जटा.।

**दीपनम्।** क्ली। रसस्य संस्कारविशेषे। तन्नामकरससाधनकार्य्यविशेषे। तद्यथा—"कासीसं पञ्चलवणं राजिका मरिचानि च। भूशिग्रुबीजमेकत्र टङ्कणेन समन्वितं। आलोड्य काञ्जिके दोलायन्त्रे पाकाद्दिनैस्त्रिभिः। दीपनं जायते सम्यक् सूतराजस्य जारणे॥" अथवा चित्रकाद्यैः काञ्जिके त्रिदिनं पचेत्। र.सा.सं.। मण्डोदके। त्रिका.। See पारदः। कुङ्कुमे। त्रिका.। तगरमूले। र.मा.। पुं। पलाण्डौ। रा.नि.व.१०। शालिञ्चशाके। নাঁকে শাক। श.च.। षड्भागावशिष्टकषाये। "दीपनन्तु षड़ंशय।" रा.नि.व.२०। चक्रमर्द्दवृक्षे। काशमर्दवृक्षे। रा.नि.व.४। अग्निगुणभूयिष्ठे द्रव्यमात्रे। "पचेन्नामं वह्निकृद्दीपनं तद्यथा मिषिः।" भा.। त्रि। पाचने। अग्निगुणभूयिष्ठे। सु.सू.४१ष.।

**दीपनी।** स्त्री। मेथिकायां। মেতি। पाठायां। आकनादि। यवान्याम्। रा.नि.व.६। कर्कटिकायाम्। काँकड़ी। वै.निघ.।

**दीपनीयः।** पुं। यवान्याम्। रा.नि.व.६। हस्तिपलाण्डौ। वै.निघ.। त्रि। अग्निदीप्तिकरे।

**दीपनीयवर्गः।** पुं। तन्नामकाग्नेयमहाकषायवर्गे। यथा—"पिप्पली-पिप्पलीमूल-चव्यचित्रकशृङ्गवेराम्ल-वेतस-मरिचाजमोदाभल्लातकास्थि हिङ्गु-निर्य्यासा इति दशेमानि दीपनीयानि भवन्ति।" পিপুল, পিপুলমূল, চই, চিতা, শুঁট, অম্লবেতস বা থৈকল, মরিচ, যমানী, ভেলার মুটী, হিঙ্। च.सू.४थ.। "हिव्विषधिबकोधान्यमजमोदा च जीरकम्। चतुर्द्दश् हृद्दुपा द्वेधा गणोऽयं दीपनः स्मृतः॥" चक्र.चि.।

**दीपनीया।** स्त्री। यवान्याम्। मद.व.२।

**दीपनीयौषधम्।** क्ली। आग्नेयौषधे, पञ्चकोलादौ। शि.यो.मदा.चि.। च.द.।

**दीपपुष्पः।** पुं। चम्पकवृक्षे। रा.नि.व.१०।

**दीपवती।** स्त्री। कामरूपस्थनदीभेदे। का.पु.।

**दीपवृक्षः (कः)।** पुं। सरलदेववारुवृक्षे। वै. निघ.।

**दीपशिखा।** स्त्री। कज्जले। शब्दार्थकल्प.।

**दीपसंज्ञः।** पुं। चिवकवृक्षे। वै.निघ.।

**दीपास्यभस्म।** क्ली। दग्धदीपशिखायाम्। প্রদীপের পোড়া শীষ। रस.र.सुनरी.चि.।

**दीपिका।** स्त्री। वचायाम्। वै.निघ.।

**दीप्त(क)म्।** क्ली। हिङ्गुनि। हिং। रा.नि.व.६। कांस्यधातौ। কাঁসা। सुवर्णे। रा.नि.व.१३। जम्बीरे। वै.निघ.। पुं। सिंहे। रा.नि.व.१९। नासारोगविशेषे। নাকজ্বালা। लक्षणं यथा— "घ्राणे भृशं दाहसमन्विते तु विनिःसरेद्धूम इवेह वायुः। नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्तमुदाहरन्ति॥" सु.। निम्बूकवृक्षे। रा.नि.व.११।

**दीप्तकांसम्।** क्ली। शुद्धकांस्यधातौ। খাঁটী কাঁসা। रा.नि.व.१३।

**दीप्तजिह्वा।** स्त्री। उल्कामुखीशृगाल्याम्। त्रिका.।

**दीप्तपिङ्गलः।** पुं। सिंहे। रा.नि.व.१९।

**दीप्तपुष्पा।** स्त्री। लाङ्गलीवृक्षे। विषलाङ्गलिया। वै.निघ.।

**दीप्तरसः।** पुं। किञ्चुलुके। কেঁচো। श.च.।

**दीप्तलोचनः।** पुं। विड़ाले। रा.नि.व.१९।

**दीप्तलोहम्।** क्ली। कांस्यधातौ। प.मु.।

**दीप्ता (प्तिः)।** स्त्री। लाङ्गलिकाक्षुपे। विषलाङ्गलिया। रा.नि.व.४। ज्योतिष्मतीलतायाम्। लताफटकी। रा.नि.व.३। लाक्षायाम्। रा.नि.व.६। मनःशिलायाम्। वै.निघ.। कांस्यधातौ। रा.नि.व.१३। दीप्तनामनासारोगभेदे। वा.उ.१९अ.। See दीप्तः।

**दीप्ताग्निः।** त्रि। दीप्तजठराग्नौ। मा.नि.।

**दीप्ताङ्गः (ङ्कः)।** पुं। मयूरे। श.र.। विड़ाले। श.र.।

**दीप्तानलम्।** क्ली। सुवर्णे। रा.नि.व.१३।

**दीप्ताक्षः।** पुं। विड़ाले। त्रिका.। मयूरे। वै.निघ.।

**दीप्तिः।** स्त्री। दीपने। अ.। लाक्षायाम्। कांस्ये। रा.।

**दीप्तिकः।** पुं। दुग्धपाषाणे। ফুল খড়ি। वै.निघ.।

**दीप्तिकांस्यम्।** क्ली। कांस्ये। रा.।

**दीप्तोपलः।** पुं। सूर्यकान्तमणौ। प.मु.।

**दीप्यः (कः)।** पुं, क्ली। मयूरशिखायां। रुद्रजटायाम्। अम.। रक्तचित्रके। कुङ्कुमे। तगरे। निम्बूकवृक्षे। श्येनपक्षिणि। भ.। जीरके। रा.नि.व.६। रस.र.सूतिका.चि.पञ्चजीरकगुड़े। भैष.कुष्ठ.चि.। च.द.पञ्चतिक्तघृतगुग्गुलौ। उन्मा.चि.लशुनाद्यघृते। अजमोदायाम्। রাঁধুনি। भा.पू.२भ.। यमान्याम्। च.द.सि.यो.कास चि.दशमूलषट्पलकघृते। "तालीशवह्निदीप्यकम्।"

**दीप्यका।** स्त्री। यमान्याम्। अजमोदायाम्। রাঁধুনি। भा.पू.१भ.।

**दीप्यवल्ली।** स्त्री। अजमोदायाम्। वै.निघ.।

**दीप्या।** स्त्री। कृष्णजीरकभेदे। মোটা কৃষ্ণজীরে। रा.नि.व.६। यमान्याम्। भा.। पिण्डखर्ज्जूरिकायाम्।

**दीर्घः।** पुं। रामशरे। रा.नि.व.८। लताशाले। र.मा.। कोङ्कणदेशप्रसिद्धे माड़वृक्षे। रा.नि.व.९। रक्तकशाल्यौ। रा.नि.व १६। द्रुत्काटे। र.मा.। नलतृणे। रा.। उष्ट्रे। रा.नि.व.१९। त्रि। आयते।

**दीर्घकम्।** क्ली, पुं। कृष्णजीरके। मद.व.२। शरवृक्षे। श्वेतजीरके। उशीरे। उष्ट्रे। शाकवृक्षे। শেগুন গাছ। वै.निघ.।

**दीर्घकणा।** स्त्री। गौरजीरके। শাদা জীরা। रा.नि.व.६।

**दीर्घकण्टः (कः)।** पुं। बर्बूरवृक्षे। বাবলা গাছ। रा.नि.व.८।

**दीर्घकण्ठः (कः)।** पुं। बकपक्षिणि। श.च.।

**दीर्घकन्दः (कः)।** पुं। मालाकन्दे। वै.निघ.। सुखालौ। মৌ আলু। (कम्) क्ली। मूलके। মূলা। रा.नि.व.७।

**दीर्घकन्दिका।** स्त्री। तालमूल्याम्। रा.नि.व.७। कृष्णतालमूल्याम्। वै.निघ.।

**दीर्घकन्धरः।** पुं। बकपक्षिणि। रा.नि.व.१९। स्त्री। बकस्त्रियाम्। वै.निघ.।

दीर्घकर्णः। पुं। छागे। ছাগল।
दीर्घकाण्डः। पुं। गुण्डतृणे। रा.नि.व.८।
दीर्घकाण्डा। स्त्री। बस्तादनीलतायाम्। পাতাল গরুড়ী। रा.नि.व.३।
दीर्घकोलः (कः)। पुं। अङ्कोठवृक्षे। ধল আঁকোড়, আঁকোড় গাছ। रा. नि. व. ९। जटा.। "अङ्कोठे दीर्घकीलकः।" रा.नि.व.९।
दीर्घकुल्या। स्त्री। गजपिप्पल्याम्।
दीर्घकूरकम्। क्ली। वृषान्ननामकशालिधान्यभेदे। রাজ অন্ন। रा.नि.व.१६।
दीर्घकारणा। स्त्री। तिलपर्णिनीशालौ। रा.नि.व.१६।
दीर्घकेशः (शी)। पुं। भल्लूके। रा.नि.व.१९।
दीर्घकोषा (षा)। स्त्री। षड्गुकी। ভগুলি, ঝিনুক। शारा.। गण्डूपद्याम्। কেঁচো। वै.निघ.।
दीर्घकोशि(षि)का (शी)। स्त्री। षड्गुकी। शारा.। गण्डूपद्यां। वै.निघ.।
दीर्घखरच्छदः। पुं। इत्कटे। ইৎকড়। प.मु.।
दीर्घगतिः। पुं। उष्ट्रे। रा.नि.व.१९।
दीर्घगोधूमः। पुं। महागोधूमे। वै. निघ.।
दीर्घग्रन्थिः। पुं। गजपिप्पल्यां। रा.नि.व ६।
दीर्घग्रीवः। पुं। उष्ट्रे। हे. च.। नीलक्रौञ्चपक्षिणि। रा.नि.व १९।
दीर्घघाटिकः। पुं। उष्ट्रे। बके। वै. निघ.।
दीर्घचञ्चुः। पुं। पक्षिविशेषे। बङ्, रামঠোড়া। वै. निघ.।
दीर्घच्छदः। पुं। शाकवृक्षे। শেগুন গাছ। इक्षौ। भा.।
दीर्घजङ्गलः। पुं। मत्स्यविशेषे। ভাঙ্গন মাছ। श. मा.।
दीर्घजङ्घः। पुं। उष्ट्रे। जटा.। बकपक्षिणि। विका.।
दीर्घजिह्वः। पुं। सर्पे। हे. च.।
दीर्घजीरकः। पुं। स्थूलजीरके। भा. पू १भ.।
दीर्घतन्वी। स्त्री। आलुकभेदे। वै.निघ.।
दीर्घतरः। पुं। मकरे। शब्दच.।
दीर्घतरुः। पुं। तालवृक्षे। शब्दार्थकल्प.।
दीर्घतिसिपा। स्त्री। कर्कटिकायाम्। কুড় তেতো কাঁকুড়। श.मा.।
दीर्घतुण्डा (ण्डी)। स्त्री। छुछुन्दर्याम्। ছুঁচো। वै. निघ.।
दीर्घतृणः। पुं। पल्लिवाहतृणे। बङ्. पीतकत्ण। रा.नि.व.८।
दीर्घदण्डः (कः)। पुं। एरण्डे। रा.नि.व.८। जटा.। तालवृक्षे। रोहीतकवृक्षे। वै.निघ.।
दीर्घदण्डी। स्त्री। गोरक्षायाम्। গোরক্ষচাকুলে। रा नि.व.५। [ निघ.।
दीर्घदलः। पुं। मालाकन्दे। श्यामाके। वै.
दीर्घदर्शी (दृष्टिः)। पुं। गृध्रे। श.र.। भल्लूके। रा.नि.व.१९।
दीर्घद्रुः। पुं। तालवृक्षे। श.च.।
दीर्घद्रुमः। पुं। शाल्मलिवृक्षे। শিমুল গাছ। रा नि व.८। [ १९।
दीर्घनादः। पुं। शङ्खे। শাঁখ। रा.नि.व.
दीर्घनालः। पुं। दीर्घरोहिषे। বড় গন্ধতৃণ। गुण्डतृणे। रा.नि.व.८। श्यानुके। शालिधान्यभेदे। वै.निघ.। यावनालनामशिम्बीधान्ये। रा.नि.व १६।
दीर्घनिद्रा। स्त्री। मृत्यौ। हे.।
दीर्घनिस्वनः। पुं। शङ्खे। वै. निघ.।
दीर्घपटोलिका (ली)। स्त्री। पटोलाकारदीर्घफलशाकविशेषे। धुन्दुल। बङ्. गौड़परवल। गुणाः—गुरु स्निग्धं विष्टम्भि कटुकं मधुरं शीतलं वातपित्तघ्नं पाकरुचिकरश्च। राज. ३प.।
दीर्घपत्रः (कः)। पुं। पुनर्नवायाम्। শ্বেত পুন্ড়া। रा नि.व.५। राजपलाण्डौ। विष्णुकन्दे। रा.नि व.७। शरपत्रदर्भे। कुन्दुरुतृणे। रा.नि.व.८। ताम्रवृक्षे। रा.नि व.९। हरितकुशे। रक्तपुनर्नवायाम्। सर्जवृक्षे। मिश्रवर्णचौ। हिं बड़ी पा। गुणाः—सुकठिनः सक्षारश्च। भा.। वातकरः कफपित्तघ्नः कषायः विदाही च। सु.सू.४५ ष.। कुणीलौ। কুঁচিশা। भा.। मधूकवृक्षे। वै.निघ.। (क) वेतसवृक्षे। मद.व.५। रक्तरसोने।

लाल रशुन। रा.नि.व.७। एरण्डवृक्षे। छिन्नल-वृक्षे। रा.नि.व.८। शुक्लरसोने। শ্বেত রশুন। वै.प.। नागनधूके। नटा.। करीरवृक्षे। श.च.।

**दीर्घपत्रा।** स्त्री। वृहतीक्षुपे। द्रोणपुष्प्याम्। घणघसा। रा.नि.व.४।५। शालपर्ण्याम्। भा.। क्षुद्रजम्बूवृक्षे। বন জাম গাছ। र. मा.। केतकी-वृक्षे। रा.नि.व.१०। घृतकुमार्य्याम्। श्वेतपुनर्न-वायाम्। आम्रहरिद्रायां। कदलीवृक्षे। श्योणाक-वृक्षे। कुम्भतुम्ब्याम्। গোল লাউ। वै. निघ.। चिञ्चायां। চেঁচড়া। भा. पू १भ. शा.व.।

**दीर्घपत्रिका।** स्त्री। श्वेतवचायाम्। শ্বেত বচ। रा.नि.व.६। घृतकुमार्य्याम्। घृतकुमारी। रा.नि.व.५।२३। शालपर्ण्याम्। শালপানি। रा.नि.व.४। भा.। केतक्यां। रा.नि.व.२३। आट-रूषके। বাসক। मातुलुङ्गवृक्षे। ছোলঙ্গ লেবু। कण्टतालमूल्याम्। कदलीवृक्षे। वै.निघ.।

**दीर्घपत्री।** स्त्री। पलाशीलतायाम्। হাপর-মালী। रा.नि.व.३। महाचुञ्चुक्षुपे। চুঞ্চু শাক। रा.नि.व.४।

**दीर्घपर्णः।** पुं अश्वकर्णनामकशाले। নতা-শাল। रा.नि.व.९। 'तोपचिनी' इतिख्याते द्रव्ये। वै. निघ.।

**दीर्घपर्णी।** स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া। रा.नि.व.४। शालपर्ण्याम्। শালপানি। वै.निघ.।

**दीर्घपर्व्वा।** पुं। इक्षौ। वै. निघ.।

**दीर्घपलाण्डुः।** पुं। विष्णुकन्दे। राज-पलाण्डौ। तालवृक्षे। रा.नि.व.७।८। हरितकुश-तृणे। कुन्दरतृणे। इक्षुभेदे। कुचैलवृक्षे। কুঁচিলা গাছ। भा.।

**दीर्घपल्लवः।** पुं। शणक्षुपे। শণ গাছ। रा. नि.व.४।

**दीर्घपक्षः।** पुं। मत्स्यविशेषे। वै. निघ.।

**दीर्घपात् (दः)।** पुं। क्रौञ्चबके। কোঁচ বক। कङ्कपक्षिणि। কাঁকপাখী। त्रिका.। वै. च.।

**दीर्घपादपः।** पुं। तालवृक्षे। रा.नि.व.९। गुवाकवृक्षे। रा.नि.व.११। See अक्षोटः।

**दीर्घपुष्पः।** पुं। मुचुकुन्दवृक्षे। মুচকুন্দ। प. मु.। श्वेतमन्दारार्के। रा.नि.व.१०।

**दीर्घपृष्ठः।** पुं। सर्पे। अम.।

**दीर्घपोरः।** पुं। वंशनामेक्षुभेदे। "दीर्घपोरः सुकठिनः सक्षारो वंशकः स्मृतः।" भा.।

**दीर्घफलः (कः)।** पुं। स्थूलारग्वधवृक्षे। বড় সোণালু। रा.नि.व.९। पलाशवृक्षे। अर्क-वृक्षे। वै.निघ.। (कः) अगस्तिपुष्पवृक्षे। বাসনা-ফুলের গাছ। रा.नि.व.१०।

**दीर्घफला।** स्त्री। कोषातक्याम्। ঝিঙে প্রভৃতি। रा.नि.व.७। जन्तुकालतायाम्। रा.नि. व.३। कपिलद्राक्षायाम्। रा.नि.व.११। मेष-शृङ्ग्याम्। तिक्तालाब्वाम्। वै.निघ.।

**दीर्घबाला।** स्त्री। चमरीमृगे। वै. निघ.।

**दीर्घबालुकः।** पुं। वृद्धदारकलतायाम्। বীজতাড়ক। रा.नि.व.३।

**दीर्घमारुतः।** पुं। हस्तिनि। त्रिका.।

**दीर्घमूलः।** पुं। मोरटलतायाम्। रा.नि. व.३। यासक्षुपे। দুরালভা। रा.नि.व.४।२३। बेल्लन्तरवृक्षे। रा. नि. व. ८।२३। बिल्ववृक्षे। लज्जालुकायाम्। लामज्जके। रा.नि.व.१२।२३। बिभीतकवृक्षे। देवसर्षपे। इन्द्रयवे। क्ली। मूलके। वै. निघ.।

**दीर्घमूलकम्।** क्ली। मूलके। মূলা। रा.नि. व.७। पुं। स्थूलशरे। रा.नि.व.८।

**दीर्घमूला (लिका)।** स्त्री। शालपर्णीक्षुपे। वै.निघ.। श्यामालतायाम्। प.मु.। (ला) दुरा-लभायाम्। सु सू.३८अ.। शरतृणे। শর গাছ। क्षीरमूर्व्वायां। मेषशृङ्ग्यां। बेल्लन्तरवृक्षे। वै. निघ.।

**दीर्घमूली (लिका)।** स्त्री। दुरालभायाम्। श. मा.। दारुकमाच्याम्। काकजङ्घायाम्। वै. निघ.।

**दीर्घरङ्गा।** स्त्री। हरिद्रायाम्। वै.निघ.।

**दीर्घरतः (दः)।** पुं। शूकरे। त्रिका.।

**दीर्घरसनः।** पुं। सर्पे। श. च.।

**दीर्घरागा।** स्त्री। हरिद्रायाम्। रा.नि.व.६।

**दीर्घरात्रिकः।** पुं। बहुरात्रानुबन्धी ज्वरभेदे। भा.।

दीर्घरोमा । पुं । भल्लूके । वै.निघ.

दीर्घरोहिष(क)म् । क्ली । रोहिषभेदे । বড় গন্ধতৃণ । तत्पर्य्यायः,—दृढ़काण्डं, दृढ़च्छदं, यवेष्टं, दीर्घनालं, तिक्तसारं । रा. । गुणाः—तिक्तं कटूष्णं कफवातजित् श्रमघ्नतरोपघ्नञ्च । रा.नि.व.८ ।

दीर्घलता । स्त्री । व्याघ्रघण्टायाम् । শিয়াড়ি লতা । वै.निघ. ।

दीर्घलताद्रुमः । पुं । अश्वकर्णवृक्षे ।

दीर्घलोहितयष्टिका । स्त्री । रक्तेक्षौ ।

दीर्घवंशः । पुं । नले । নল । रा.नि.व.८ ।

दीर्घवक्त्रः । पुं । हस्तिनि । श.मा. ।

दीर्घवच्छिका । स्त्री । कुम्भीरे । शब्दार्थकल्प. ।

दीर्घवर्षाभूः । स्त्री । श्वेतपुनर्नवायां । वै.निघ. ।

दीर्घवल्ली (ल्लिका) । स्त्री । महेन्द्रवारुणी लतायाम् । বড় মাকাল । वत्सादनीलतायाम् । পাতাল গরুড়ী । पलाशीलतायां । হাপরমালী । रा.नि.व.३ ।

दीर्घवीजा । स्त्री । अलाब्वाम् । शिम्बीभेदे । प.मु. ।

दीर्घवृन्तः (कः) । पुं । पृथुशिम्बश्योनाकवृक्षे । শোণাপাঠা । प.मु. । पीतलोध्रे । वै.निघ. लताशाले ।

दीर्घवृन्ता (न्तिका) । स्त्री । इन्दीवराख्यलतायां । ইন্দ্রচির্ভিটী । रा.नि.व.३ । कपर्द्दकभेदे । र.सा.सं. । एलापर्ण्यां । श.च. । কাঁটা আমরুলী ।

दीर्घवृक्षः । पुं । तालवृक्षे । लताशालवृक्षे । वै. निघ ।

दीर्घशरः । पुं । यावनालनामकशिम्बीधान्ये । জনার গাছ । रा.नि.व.१६ ।

दीर्घशाखः । पुं । शणवृक्षे । শন গাছ । रा.नि.व.४ । शालतरौ । শেগুন গাছ । वै.निघ. । शालवृक्षे । श.च. ।

दीर्घशाखिका । स्त्री । क्षुपपीठीवृक्षेच, मौहान्नीक्षुपे । रा.नि.व.४ ।

दीर्घशिम्बा । स्त्री । शिम्बीविशेषे । प.मु. ।

दीर्घशिम्बिकः । पुं । राजमाषे । বরবটী । रा.नि.व.१६ ।

दीर्घशूकः (कः) । पुं,क्ली । शूकाकारशालिधान्यविशेषे । स सारासुखाहीनगुणः स्वादुपाकरसत्वादियुक्तः । च.सू.२७अ. । राजान्ने । रा.नि.व.२२ ।

दीर्घसमुच्चयः । पुं । नलवृषे । प.मु. ।

दीर्घसस्यः । पुं । तिन्दुकवृक्षे । তেঁদ গাছ । वै. निघ. ।

दीर्घसुरतः । पुं । कुक्कुरे । शूकरे । त्रिका. ।

दीर्घस्कन्धः । पुं । तालवृक्षे । रा.नि.व.९ ।

दीर्घा । स्त्री । पृश्निपर्ण्याम् । रा.नि.व.४ ।

दीर्घाङ्कुरः । पुं । राजशाली । রাজ অন্ন । वै.निघ. ।

दीर्घाङ्गी । स्त्री । शालपर्ण्याम् । भा.पू.१भ. ।

दीर्घाङ्घ्रिः । स्त्री । शालपर्ण्याम् । वै.निघ. ।

दीर्घाध्वगः । पुं । उष्ट्रे । त्रिका. ।

दीर्घायुः । पुं । शाल्मलिवृक्षे । শিমূল গাছ । रा.नि.व.८ । जीवकौषधौ । काके । मे. । रा.नि.व.५ । त्रिका. ।

दीर्घायुधः । पुं । वनशूकरे । श.मा. ।

दीर्घायुष्यः । पुं । जीवके । मे. । श्वेतमन्दारार्के । रा.नि.व.१० । [ १० ।

दीर्घालर्कः । पुं । महाश्वेतार्कवृक्षे । रा.नि.व.

दीर्घिका । स्त्री । हिङ्गुपत्राम् । रा.नि.व.६ । गोजिह्वायाम् । वै.निघ. । विंशतधनुःपरिमितजलाशये । तत्पर्य्यायः,—वापिः, (भ) वापी । अ. । तज्जलं गुरु कटु क्षारं पित्तकरं कफवातघ्नञ्च । रा.नि.व.१४ ।

दीर्घेर्वारुः । पुं । महालाब्वाम् । दीर्घकर्कटिकायाम् । रा.नि.व.७ ।

दीविः । पुं । चाषपक्षिणि । श.मा. । [ १२ ।

दुकूलः । पुं । चोरनामकगन्धद्रव्ये । रा.नि.व.

दुःखम् । क्ली । रोगे । मानसधर्म्मभेदे । দুঃখ । तत्तु सप्तविधे व्याधावुपनिपतति । सु.सू.२४अ. । See व्याधिः ।

दुःखकोद्रवा । स्त्री । मसूरिकाभेदे । কোদাই । "किञ्चिदुष्मनिमित्तेन जायते राजिकाकृतिः । एषा भवति बालानां सुखं शाम्यति च स्वयम् ॥" भा. ।

**दुःखत्रयम्।** क्ली। आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति त्रिविधदुःखे। मु.मु.२४श.।

**दुःखदश्मनः।** पुं। गृध्रपक्षिणि। शकुनि। वै. निघ.।

**दुःखदिरः।** पुं। विट्खदिरे। रा.नि.व.८।

**दुःखवर्द्धनः।** पुं। कर्णपालीरोगे। लक्षणम् —"वर्द्धमाने यदा कर्णे कण्डू-दाह-रुगन्वितः। शोफो भवति पाकश्च त्वक्स्थोऽसौ दुःखवर्द्धनः॥" सु.चि.२५अ.।

**दुःसहा।** स्त्री। नागदमन्याम्। रा.नि.व.५।

**दुःसाध्यः।** त्रि। दुश्चिकित्स्ये। पुं। शम्बुके। भम्बुके।

**दुःस्पर्शा।** स्त्री। कपिकच्छ्वाम्। दुरालभायाम्। कण्टकार्य्याम्। आकाशवल्ल्याम्। रा.।

**दुकू(गू)लम्।** क्ली। क्षौमवस्त्रे। त्रिका.। हे.च.।

**दुग्धम्।** क्ली। कत्तृणे। ग्रामकर्पूरे। र.मा.। क्षीरे। दुध। रा.नि.व.१५। तत्पर्य्यायः,—क्षीरं, पीयूषं, ऊधस्यं, स्तन्यं, पयः, अमृतं (रा.), बालजीवनं (भा.), दोहजं (कै.), प्रदोहं, दोहापनयः (त्रि.)। तद्गुणादि—"क्षीरं स्निग्धं यथा रक्तं पित्तेन पाकतां गतं। रक्तं श्वेतत्व मायाति तथा क्षीरं सितं भवेत्। क्षीरनाड़ी कुमारीणां यस्मान्नाश्च कथं भवेत्। अल्पधातुबलं यस्मात् तस्मात् क्षीरं न जायते। कन्यानां क्षीरनाड्यस्तु वातेन परिपूरिताः। क्षीरञ्च न भवेत् तस्मात् आर्त्तवञ्चाधिकं यतः। प्रसूतासु च नारीषु बलेन सह शुष्यते। तेन स्रोतोविशुद्धिः स्यात् क्षीरमाशु प्रवर्त्तते। तस्मात् सद्यःप्रसूतायां जायते श्लैष्मिकं पयः। तेन काठिनतां याति तस्मात्तत् परिवर्ज्जयेत्। स्रोतोविशुद्धिकरणं बलकृद्दोषनाशनम्। पथ्यं त्रिदोषशमनं हृद्यञ्चाग्निप्रवर्द्धनम्॥" तत्र श्वेतादुग्धं श्लेष्मकरं, रक्तायाः वातलं, पीतायाः पित्तसंशमनं विशिष्टं, कृष्णायाश्च पित्तघ्नम्। इति, न्य.। दुग्धं बहुविधं गव्यादिभेदात् यथा—गावस्तु दशधा काली त्रिधाजी त्रिविधा मता। मृगच एवास्त्रिधा मेषी त्रिधोष्ट्री दशधा हयी। पञ्चधा करिणी नारी दशधा शूकरी द्विधा। व्याघ्री शुनी श्वदंष्ट्री च रासभी पञ्चधा पृथक्। त्रिधा एकादशधा मत्स्यी गवयी खड्गिनी चण्डी। दुग्धं घृतञ्च तक्रञ्च दधि ताभ्यः प्रजायते॥ अर्क.। गवादिदुग्धगुणाः स्वस्वपर्य्यायेषु द्रष्टव्याः। दुग्धमात्रगुणाः—आमं गुरु कास-श्वास-प्रकोपकं रोगजनकञ्च। तत्तप्तावशिष्टञ्च तत् पथ्यम्। नारीक्षीरन्तु आममेव रोगघ्नं भवति। धारोष्णं गव्यादिदुग्धम् अमृतोपमं सर्व्वरोगघ्नं। विरसंस्थं दोषदञ्च। तथा—"केऽप्याविकं पथ्यतमं श्रृतोष्णं क्षीरं त्वजानां श्रृतशीतमाहुः। दोषान्तशीतं महिषीपयश्च गव्यन्तु धारोष्णमिदं प्रशस्तम्॥" पूर्व्वाह्णपीतं दुग्धं हृष्यं बल्यं बृंहणमाग्नेयञ्च, मध्याह्नपीतं बलदं कफघ्नं कृच्छ्रघ्नञ्च। बाल्ये अग्निकरं यौवने बल्यं वीर्य्यदञ्च वार्द्धके भवति। रात्रौ नानादोषशमनं अतः क्षीरं सदा सेव्यम्। मुहूर्त्तत्रयपर्य्युषितमतस्तं न सेवेत। पर्य्युषितं दोषकरं तदूर्द्ध्वञ्च विषोपमं ज्ञेयम्। ज्वरे तद्गुणाः—"जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्। तदेव तरुणे पीतं विषवद्धन्ति मानवम्। चतुर्थभागं सलिलं निधाय यत्नाद्वदावर्त्तितमुत्तमं तत्। सर्व्वामयघ्नं बलपुष्टिकारि वीर्य्यप्रदं क्षीरमतिप्रशस्तम्।" इति दुग्धक्वाथः। "गव्यम्पूर्व्वाह्णकाले स्यादपराह्णे तु माहिषम्। क्षीरं सशर्करं पथ्यं यद्वा साज्यं च सर्व्वदा। पित्तघ्नं श्रृतशीतलं कफहरं पक्वं तदुष्णं भवेत्क्षीरं यत्तु न पाचितं तदखिलं विष्टम्भदोषप्रदं। धारोष्णं त्वमृतं पयः श्रमहरं निद्राकरं कान्तिदं वृष्यं बृंहणमग्निवर्द्धनमतिस्वादु त्रिदोषापहम्॥" श्रृतशीतादिक्षीरगुणाः—"क्षीरं न भुञ्जीत कदाप्यतप्तं तप्तं न चैवाम्लवणेन सार्द्धम्। पिष्टान्नधान्यक्षमाषमुद्गकोशातकीकन्दफलादिकैश्च।" तथाच "मत्स्यमांसगुड़मुद्गमूलकैः कुष्ठमावहति सेवितं पयः। शाकजाम्बवरसैस्तु सेवितं मारयत्यबुधमाशु सर्पवत्॥" इति क्षीरवर्ज्जनस्थानम्। "स्निग्धं शीतं गुरु क्षीरं सर्व्वकालं न सेवयेत्। दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च। नित्यं तीव्राग्निना सेव्यं सुपक्वं माहिषं पयः। पुष्यन्ति धातवः सर्व्वे बलपुष्टिविवर्द्धनम्॥" इति क्षीरसेवनस्थानम्। "क्षीरं गवाजकादेर्मधुरं क्षारं नवप्रसूतानाम्। रूक्षं न पित्तदाहं करोति रक्तामयं कुरुते॥ मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम्। लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम्॥ गुणहीनं निःसारं क्षीरं प्रथमप्रसूतानां। सेव्यञ्च सरसायनमुक्तमिदं दुर्ब्बलन्तु वृद्धानाम्॥ तासां मासत्रयादूर्द्ध्वं गुर्व्विणीनाञ्च यत्पयः। तद्वापि लवणं क्षीरं मधुरं पित्तदोषकृत्॥ गवादीनां वर्णभेदाद्गुणा

दुग्धादिके पृथक् । केचित्तु तौ विशेषाच्च विशेषो हैमभेदतः ॥" तथा च तत्रैव । "हैमेषु हैमेषु च तेषु तेषु द्रव्यान्तुनी याद्दशदोषयुक्ते । तस्मैवनादेव गवादिकानां गुणा हि दुग्धादिषु तादृशस्युः । शीतं स्निग्धं गुरु शैत्यं रूप्यं पित्तापहं परं । तैश्चश्चैवाभिधीतस्तु शीलाद्यन्तु पयस्पदः ॥" रा.नि.व १५ । प्रभातदुग्धं—"निशाशीतांशुसंशीतं निद्रालस्यहरं गुरु । लघवं शीतलफलकृत् क्षीरं प्राभातिकं भवेत् ॥" वि.प्र. ।

**दुग्धकन्दगणः** । पुं । दुग्धप्रधाने अश्वगन्धादिकन्दगणे । यथा—"अश्वगन्धा च मुशली विदारी च शतावरी । क्षीरवाराहिका चेति दुग्धकन्दगणस्त्वयम् ॥" गुणाः—"बालको वर्द्धते वीर्य्यरसिस्तु बालस्य नरः । एतत्कल्कस्य पानेन कन्या षोडशवार्षिकी ॥" स्वर्के. ।

**दुग्धकूपिका** । स्त्री । घृतदुग्धमिश्रिततण्डुलचूर्णकृतपिष्टकविशेषः । तन्निर्म्माणविधिः यथा— "तण्डुलचूर्णविमिश्रित-नवक्षीरेण शान्तशिष्टेन । कृतकूपिका विदध्यात् पचेत् सर्पिषा मन्दम् । अथ तां कीरितमध्यां घनपयसा पूर्णमांश्च । कङ्कणमुद्रितवदनां सर्पिषि सुपक्वफलाश्च । अथ पात्रे...कर्पूरवासिते क्षमतः ।" गुणाः—"अथ दुग्धकूपिका सा रुच्या पित्तानिलापहा । हृद्या शीता गुर्वी शुक्रकरी वृंहणी रुच्या । विदधाति कायपुष्टिं द्रुतमक्षाणिभ्यां शुचिरम् ॥" भा. ।

**दुग्धतालीयम्** । क्ली । दुग्धसारे । हे.च. । दुग्धाग्रे । क्षीरफेने । मे. ।

**दुग्धतुम्बी** । स्त्री । क्षीरालाबाम् । वै.निघ. ।

**दुग्धत्रयम्** । क्ली । गोमहिषच्छागदुग्धेषु । र. मा.सं. ।

**दुग्धदा** । स्त्री । षष्टिकातृणे । रा.नि.व.८ ।

**दुग्धनिका** । स्त्री । रक्तापामार्गे । अर्कहचे । वै.निघ. ।

**दुग्धपाचनः** । त्रि । दुग्धपाककरे । क्ली । दुग्धपाकपात्रे । हारा. ।

**दुग्धपाषाणः (कः)** । पुं । खटिकादिविशेषे । खूनखड़ि, खड़िमाटि । हिं शिरखीरा । तत्पर्य्यायः,—दुग्धपाषाणः, दुग्धाश्मा, क्षीरी, गोमेदसन्निभः, बचाम, दौतिकः, दुग्धी, क्षीरवः, बोधः । गुणाः—अस्य चूर्णं तु ज्वरपित्तहृद्रोगकासश्वासानहरत्वं । रा.नि.व.१३ ।

**दुग्धपाषाणिका** । स्त्री । दुग्धपाषाणे । खूनखड़ि । रा.नि.व.३ ।

**दुग्धपुच्छी** । स्त्री । वृक्षविशेषे । छड्पेत्रा । श.च. । तत्पर्य्यायः—हैवकान्तः, गिराभङ्गा, नमस्कारी (श.) ।

**दुग्धफेनः (कः)** । पुं, क्ली । क्षीरफेने । दुधेर फेना । रा.नि.व.१५ । गुणाः—"क्षणलोऽस्य पयः-फेनसमानां वेति शस्यते । मन्दाग्नीनाङ्गनानाञ्च विशेषादतिसारिणाम् । तस्मादुद्दीपनस्वल्पं मधुरं वातनाशनं । तथी बलकरश्चैव तच्च क्षीरविलोडितं । क्षीरज्वरातिसारे च श्रान्ते च विषमज्वरे । मन्दाग्नौ कफमाश्रित्य पयःफेनमशस्यते । क्षीरं गवाश्वीरफेनं तक्रं वा हितमेव च । पक्वान्नभक्षणाद्यपि अतृप्तो तस्य नश्यति । ताम्बूलं नैव सेवेत क्षीरंपीत्वा तु मानवः । यावन्नच्चरेत् क्षीरमुद्गान्नादपि शस्यते ॥" स्त्रि. ।

**दुग्धफेनी** । स्त्री । स्वनामख्यातक्षुपे । सं वं दुधफेणी, हालुकोदवि । तत्पर्य्यायः,—पयःफेनी, फेनदुग्धा, पयस्विनी, क्षतारिः, अध-क्षेतुघ्नी, गोजादनी । गुणाः—कटुः तिक्ता हिमा विषघ्नी व्रणघ्नी रुच्या । रा.नि.व.५ । पक्वान्नविशेषे । वै. निघ. ।

**दुग्धरुहः** । पुं । तिलकवृक्षे ।

**दुग्धवटी** । स्त्री । औषधवटी । विषं हिङ्गुलं धुस्तूरबीजं समभागं गृहीत्वा धुस्तूरपत्ररसेन प्रहरं मर्द्दयित्वा गुञ्जामाना वटी कार्य्या । भैष ।

**दुग्धबीजः (जा)** । पुं, स्त्री । यावनालादिकृतचिपीटके । जनार वा जोयारेर चिड़े । "ये चान्ये यावनालाद्याश्चिपिटाः कृततण्डुलाः । अकृततण्डुलास्ते तु दुग्धबीजाः प्रकीर्त्तिताः ॥" गुणाः—"दुग्धबीजा मधुरा दुर्ज्जरा वीर्य्यपुष्टिदा । शालिय-यावनालाद्याः चिपिटाः पुष्टिवर्द्धनाः ॥" रा.नि.व.१६ ।

**दुग्धसन्तानिका** । स्त्री । दुग्धसरे । वै. निघ. ।

**दुग्धहरणी** । स्त्री । दुग्धवहनाड्याम् । रस. र. समरी.चि. ।

**दुग्धचौरिका।** स्त्री। दुग्धतण्डुलघृतशर्करा-कृतपायसे। यथा—"दुग्धाष्टमांशभागेन तण्डुलान् घृतसंस्कृतान्। पक्त्वा ऽर्द्धपक्के दुग्धे तु क्षिप्ता सिद्धा हि चौरिका। पायसं शर्करायुक्तं घृतप्रक्षेपणाद्भवेत्॥" गुणाः—"सा गुरुर्वातकृद्बल्या मलावष्टम्भकारिका तथा। अरुचिं मेदहृद्धिश्च कफसञ्चय मन्दताम्। कृत्वा च रक्तपित्तं हि वातपित्तञ्च नाशयेत्॥" द्रव्यगुणः।

**दुग्धा (ग्धी)।** स्त्री। चौरिकायां। क्षिराइ। रत्न.। भैष.क्षुद्ररो.चि.। काकोल्याम्। पलाशीलतायाम्। शारिवायाम्। वै. निघ.। दुग्धपाषाणे। कूलखड़ि। रा.नि.व.१३।

**दुग्धाम्रम्।** क्ली। दुग्धताल्लीये। आँवेर मध्ये दुध। गुणाः—"दुग्धाम्रं शीतलं स्वादु हृद्यं वर्णकरं गुरु। वातपित्तापहं रुच्यं बृंहणम्बलवर्द्धनम्॥" रा.नि.व.१५।

**दुग्धाश्मा।** पुं। दुग्धपाषाणे। कूलखड़ि। रा.नि.व.१३।

**दुग्धाक्षः।** पुं। चीरस्फटिके। शब्दार्थकल्पतरुः।

**दुग्धिका।** स्त्री। क्षुद्रचौरिकायाम्। छोट थिराइ। मं दुधि। कं दुधने। तैं पिल्लपालचेट्टु। तत्पर्य्यायः,—दुग्धी, चीरी, चीरालिका (शब्दर.); अपिच "दुग्धिका स्वादुपर्णी स्यात् चीरावी चीरिणी तथा।" भा.। गुणाः—"दुग्धिकोष्णा गुरु रूक्षा वातला गर्भकारिणी। स्वादुचीरा कटुस्तिक्ता सृष्टमूत्रमलापहा। स्वादुर्विष्टम्भिनी हृद्या कफकुष्ठकृमिप्रणुत्॥" भा.। चि.रक्त.क.प्रदरे चि.। रस. र. ज्वराति. चि.। इन्दीवरायाम्। ईश्वरचिर्भटो। गुरुकटुकालाव्वाम्। तिक्त लाउ। वै.निघ.। वृचभेदे। थिर्णी गाछ। र.मा.।

**दुग्धिनि (नी) का (नी)।** स्त्री। रक्तापामार्गक्षुपे। रा.नि.व.४। गुरुदुग्धालाव्वाम्। वा. उ.३०अ.।

**दुच्छकः।** पुं। सुरामान्दाम्। मे.। तालीशपत्रे। वै.निघ.।

**दुड़िः (लिः)।** स्त्री। कच्छपिकायाम्। अ.टी. रा.। मे.।

**दुण्डुभः।** पुं। सर्पभेदे। ढोँड़ा साप। उणा.।

**दुण्डुभा।** स्त्री। सर्पपक्षे। वै.निघ.।

**दुद्रुमः।** पुं। कन्दविशेषे, हरितपलाण्डौ। अम.।

**दुन्दुः।** पुं। दण्डढक्कायाम्। दामामा। शब्दर.।

**दुन्दुभिः।** पुं। सर्पदष्टे दुन्दुरादौ, दन्दुर इति लोके। सु.कल्प.७अ.। प्रसुदर्पाचिविशेषे। च शू. २७अ.। विषे। हे.च.।

**दुन्दुमारः।** पुं। विड़ाले। वै.निघ.।

**दुन्धुमारः।** पुं। धुन्धुमारे, गृहधूमे।

**दुन्वकः।** पुं। स्वनामख्यातमेषे। दुम्बा। वै. निघ.।

**दुरभिग्रहः।** पुं। अपामार्गक्षुपे। रा.नि.व.४।

**दुरभिग्रहा।** स्त्री। दुरालभायां। कपिकच्छ्वां। अपामार्गे। रा.नि.व.२३। अलाव्वां। वै.निघ.।

**दुराधर्षः (र्षा)।** पुं, स्त्री। सिद्धार्थे। श्वेत सरिषा। (र्षा) कुटुम्बिनीक्षुपे। रा.नि.व.५।

**दुरारुहः।** पुं। नारिकेलवृक्षे। विल्ववृक्षे। रा.नि.व.११।

**दुरारुहा।** स्त्री। खर्ज्जूरीवृक्षे। खेजूर गाछ। नारिकेलवृक्षे। तालवृक्षे। वंशे। रा.नि.व.२३।

**दुरारोहः।** पुं। तालवृक्षे। शाल्मलीवृक्षे। खर्ज्जूरीवृक्षे। वै.निघ.। शरटे। रा.नि.व.१९।

**दुरारोहा।** स्त्री। श्रीवल्लीवृक्षे। रा.नि.व.८। शरटे। गिरगिटे। रा.नि.व.२३। पिण्डीखर्ज्जूर्य्याम्। भा.। शाल्मलीवृक्षे। तिका.।

**दुरालभा (लम्भा)।** स्त्री। ( Alhagi maurorun. Syn. Hedysarum Alhagi. ) स्वनामख्यातक्षुपे। हिङ्गुया इति ख्याता। दुराल(ला)भा। हिं जवास, जवासा दुराला, धमासा। मं वेलिकामूली। कं बलिदुरुवे। तैं पिल्लरेगटि दुलगोंड़ि। तत्पर्य्यायः—यासः, यवासः, दुःस्पर्शः, कुनाशक, रोदनी, अनन्ता, समुद्रान्ता, (अ.), धनुर्य्यासा, यवचः, कच्छुरा (शब्दर.), धन्वयवास. (अ.टी.भ.), विकण्टकः (ज.), आत्ममूली, पत्रमुखी, ह्रदंकार्य्या (श.), दुरालभा, धन्वयासः, ताम्रमूला, कच्छुरा, दुःस्पर्शा, धन्वी, धन्वयवासकः, प्रबोधनी, सूक्ष्मदला, विरूपा, दुरभिग्रहा, दुर्लभा, दुष्प्रधर्षा सा द्विधा स्थूलसूक्ष्मभेदात्। गुणाः—कटु, तिक्ता उष्णा चाराम्लिका मधुरा वातपित्तघ्नी ज्वर-गुल्म-प्रमेहघ्नी च। रा.नि.व.४। "यासः स्वादुः सरस्तिक्त-स्तुवरः शीतलो लघुः।

कफ-मेदो-मद-भ्रान्ति-पित्तासृक्-कुष्ठ-कासजित्। तृष्णा वीसर्प-वातास्र-वमि-ज्वरहरः स्मृतः। यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा।" भा.। वा.पि. १च.। हि.यो.कास.चि.। "दुरालभाश्ववेतसैः।" कार्पासक्षुपे। स्पृक्कायां। पिड़िं शाक। श. चि.।

**दुरालभादिः।** पुं। दुरालभा-मृता-मुस्ता-नागरकृत. कषायः वातज्वरे हितः। दुरालभादिरयं पित्तज्वरतृष्णारक्तपित्तदाहघ्नः। वा. चि. १ च.। "दुरालभा-पर्पटक-प्रियङ्गु-भूनिम्ब-वासा-कटुरोहिणीनाम्। जलं पिबेत् शर्करयावगाढ़म्।" च.द.पि. ज्व.चि.।

**दुरालम्भा।** स्त्री। दुरालभायाम्। रा.।

**दुरासदः।** पुं। रुद्रे। शब्दर.। त्रि.। दुष्प्राप्ये।

**दुरिः।** स्त्री। ऋतुमत्याम्। शब्दर.।

**दुरितद(श)मनी।** स्त्री। शमीवृक्षे। रा. नि.व.८।

**दुरिष्टकृत्।** पुं। अभिचारकर्त्तरि।

**दुरूराहः।** पुं। पुण्ड्रकयुक्त-दुष्कुलाहार्थे। "दुष्कुलाहो दुरूराहः पुण्ड्रकेणैव कीर्त्तितः।" ज.द. ३अ.।

**दुरोहः।** पुं। नागकेशरवृक्षे। वै.निघ.।

**दुर्गः।** पुं। गुग्गुलौ। रा.नि.व.१२।

**दुर्गकारकः।** पुं। तरुभेदे। श.मा.।

**दुर्गन्धम्।** क्ली। सौवर्च्चललवणे। हे.च.।

**दुर्गन्धः।** पुं आम्रवृक्षे। श.च.। पलाण्डौ। भा.। त्रि। पूतिगन्धयुक्ते।

**दुर्गन्धखदिरः।** पुं। विट्खदिरवृक्षे। गुये-बाबला।

**दुर्गन्धा।** स्त्री। वाकुच्याम्। सोमराज। वै. निघ.।

**दुर्गन्धास्यः।** पुं। मुखरोगभेदे। मुखे दुर्गन्ध हओया।

**दुर्गन्धिः।** पुं। आम्रवृक्षे। दुर्गन्धि। क्ली। सौवर्च्चललवणे। वै. निघ.।

**दुर्गपुष्पी (ष्पिन्)।** पुं। वनस्पतिभेदे। केशपुष्पा इति लोके। श.च.।

**दुर्गलङ्घनः।** पुं। उष्ट्रे। हे.च.। [श.।

**दुर्गसञ्च(ञ्चा)रः।** पुं। संक्रमे। साँको, पूल।

**दुर्गा।** स्त्री। श्यामपक्षिणि। श्यामापाखी। रा. नि.व.२३। कृष्णचटके। कृष्णसारिवायाम्। श्यामा लता। नील्यां। मे.। कोकिलायाम्। वै.निघ.। अपराजितायां। श.च.।

**दुर्गाह्लादः।** पुं। भूमिजगुग्गुलौ। वै.निघ.।

**दुर्गाह्वः।** पुं। भूमिजगुग्गुलौ। रा.नि.व.१२।

**दुर्ग्रहः।** पुं। अपामार्गक्षुपे। रा.नि.व.४।२३।

**दुर्ग्रहा।** स्त्री। मुस्तायाम्। रा.नि.व.२३। अपामार्गे। भा.पू.१भ.।

**दुर्घटा।** स्त्री। पृष्ठग्रन्थी। वै.निघ.।

**दुर्घोषः।** पुं। भल्लुके। रा.नि.व.१९।

**दुर्जरः।** त्रि। दुष्पचे। वै.निघ.।

**दुर्जरफलम्।** क्ली। कर्कटिकायाम्। वै.निघ.।

**दुर्जरा।** स्त्री। ज्योतिष्मतीलतायाम्। लता-कटुकी। रा.नि.व.३। घोलि। वै.निघ.।

**दुर्जलजेता (रसः)।** पुं। नवज्वरे रसः। पाठः—"विषं भागद्वयं दग्धं कपर्दं पञ्चभागकं। मरिचं नागरञ्चैव चूर्णं वस्त्रेण शोधयेत्। आर्द्रकस्य रसेनास्य कुर्य्यात् मुद्गनिभां वटीं। वारिणा वटिकायुग्मं प्रातः सायञ्च भक्षयेत्।" विषं २ भ. वराटकभस्म मरिचचूर्णं शुण्ठीचूर्णं प्र. ५ भ.। भा.म.१भ.।

**दुर्दग्धम्।** क्ली। अग्निदग्धरोगे।

**दुर्दर्पः।** पुं। भल्लातकवृक्षे। वै.निघ.।

**दुर्दवम्।** क्ली। ऋषभौषधौ।

**दुर्द्रिता।** स्त्री। लताभेदे। जटा.।

**दुर्द्दिनम्।** क्ली। मेघाच्छन्ने दिने। "मेघाच्छन्नेऽह्नि दुर्दिनम्।" अ.।

**दुर्द्रुमः।** पुं। हरित्पलाण्डौ। रा.नि.व.७।

**दुर्द्धरः।** पुं। ऋषभकौषधौ। मे.। भल्लातकवृक्षे। अनडुहि। रा.नि.व.२३। पारदे। वै.निघ.।

**दुर्द्धर्षा।** स्त्री। नागदमन्याम्। नागदना। रा. नि.व.५। कन्थारीवृक्षे। फणिमनसा। रा.नि.व.८।

**दुर्नाम(क)म् (मा)** । क्ली, स्त्री । अर्शोरोगे । रा.नि.व.२० । स्त्री । पद्मगर्भे । झिनुक । हारा. । गण्डूपदे । केंचो । वै.निघ. ।

**दुर्नामारिः** । पुं । सूरणे । ओल । रा.नि.व.७ ।

**दुर्नाम्नी** । स्त्री । अर्शोरोगे । श.र. ।

**दुर्न्यासः** । पुं । असम्यक्स्थापने । भा.म.१भ. ।

**दुर्व्वला** । स्त्री । जलशिरीषे । भा. । त्रि. । बलहीने ।

**दुर्भरा** । स्त्री । ज्योतिष्मतीलतायाम् । वै.निघ. ।

**दुर्भिक्षा** । स्त्री । काकजङ्घायाम् । वै.निघ. ।

**दुर्मनाः** । स्त्री । शतावर्य्याम् । रा.नि.व.४ ।

**दुर्मरः** । पुं । पिप्पलवृक्षे । अश्वत्थ गाछ । वै. निघ. ।

**दुर्मरा** । स्त्री । शतमूल्याम् । रा. नि. व. ४ । श्वेतदूर्व्वायां । रा.नि.व.८ । दूर्व्वायां । जटा. ।

**दुर्मोषा** । स्त्री । शक्रगुञ्जायाम् । मद.व.२ ।

**दुर्मुखः** । पुं । वानरे । घोटके । सर्पे । त्रिका. ।

**दुर्मुखा** । स्त्री । शक्रगञ्जायाम् । वै.निघ. ।

**दुर्मोक्ता** । स्त्री । श्वेतगुञ्जायाम् । वै.निघ. ।

**दुर्मोहाः** । स्त्री । काकादनीलतायाम् । श्वेत कुँच । रा.नि.व.३ । रक्तगुञ्जायाम् । वै.निघ. ।

**दुर्लभः** । पुं । कर्चूरे । शठी । वम्. कचोरा । रा.नि.व.६ । वै.निघ. । श्वास.रो.चि.श्वासकालेश्वरे । दुरालभायाम् । रा.नि.व.४ । रक्तदुरालभायाम् । वै. निघ. २भ.मधुरज्व.चि.मधुकादिः । अग्न्याम् ।

**दुर्व्वरा** । स्त्री । ब्राह्मणयष्टिकायाम् । वामुनहाटी ।

**दुर्वर्ण(क)म्** । क्ली । रौप्ये । प. मु. । एल-यालुके । रा.नि.व.४ ।

**दुर्विषेया** । स्त्री । कर्पूरगन्ध्याम् । आम आदा । वै.निघ. ।

**दुलिः (ली)** । स्त्री । कच्छप्याम् । म'दि काछिम । अ.टी.भ. ।

**दुश्चक्रमः** । पुं । गोक्षुरके । रा.नि.व.४ ।

**दुश्च(ष्क)रः** । पुं । भल्लूके । रा.नि.व.१६ । भल्लुके । हारा. ।

**दुश्चर्म्मा** । पुं । त्वग्दोषरोगे । श्वकुदोष । ते च शीतपित्तोदर्दकोठरोगाः । रा.नि.व.२० ।

**दुष्कुलः (लीनः)** । पुं । चोरकनामगन्धद्रव्ये । रा.नि.व.१२ । श.र. ।

**दुष्खदिरः** । पुं । अरिमेदे । विट्‌खदिर । तत्पर्य्यायः,—काम्बोजी, कालस्कन्धः, गोरटः, अनराज, पवतरुः, बहुसारः, सारखदिरः, महासारः, क्षुद्रखदिरः । गुणाः—कटु-तिक्तोष्णः रक्तव्रणकण्डूविषशोथपंज्वरकुष्ठोन्मादभूतघ्नश्च । रा. नि.व.८ ।

**दुष्टम्** । क्ली । कुष्ठौषधौ । कुड़ । श.च. ।

**दुष्टपीनसः** । पुं । पीनसरोगे । वै.निघ. ।

**दुष्टप्रतिश्यायः** । पुं । नासारोगविशेषे । "प्रक्लिद्यते पुनर्नासा पुनश्च परिशुष्यति । पुनरानह्यते चापि पुनर्विव्रियते तथा । निश्वासो वाति दुर्गन्धो नरो गन्धं न वेत्ति च । एवं दुष्टप्रतिश्यायं जानी-यात् कृच्छ्रसाधनम् ॥" मा.नि. ।

**दुष्टमुखः** । पुं । दंशकीटे । डाँश । रा. ।

**दुष्टव्रणः** । पुं । दूषितक्षते । नाड़ीव्रणे ।

**दुष्टान्नम्** । क्ली । विषादिदुष्टे अन्ने । भा.प्र. चिकि. ।

**दुष्टाम्बु** । क्ली । दुष्टजले । सै. ।

**दुष्पत्रः** । पुं । चोरकनामगन्धद्रव्ये । चोरा इति पार्व्वताः । रा.नि.व.१२।२३ । चण्डालकन्दे । यमानीभेदे । वै.निघ. ।

**दुष्प्रदम्** । क्ली । सौविराञ्जने ।

**दुष्प्रधर्ष(र्षि)णी** । स्त्री । कण्टकार्य्याम् । रा. नि.व.४ । वार्त्ताक्याम् । प.मु. । वृहत्याम् । भा. ।

**दुष्प्रधर्षा** । स्त्री । दुरालभायाम् । रा.नि.व.४ । खर्ज्जूरीवृक्षे । खेजूर गाछ । रा.नि.व.११ ।

**दुष्प्रवेशा** । स्त्री । कन्थारिवृक्षे । फणिमनसा । रा.नि.व.८ । गृहकन्यायाम् । वै.निघ. ।

**दुस्पर्शः** । पुं । दुरालभायाम् । अ.टी.भ. । सि. यो.वातकासावलेहे । च.द वातकफज्व. । "व्याघ्री-दुस्पर्शगोक्षुरैः ।" भा. । लताकरञ्जे । रा.नि.व.८ ।

**दुस्पर्शा** । स्त्री । कपिकच्छ्वाम् । आलाकुशी । रा.नि.व.३ । रक्तदुरालभायाम् । रा.नि.व.४ ।

पाटलद्रुमे। आकाशवल्लीलतायाम्। आलोकलता। वनबदरे। वै.निघ.। कण्टकार्य्याम्। रा. नि.व.४।२३।

**दुस्फोटः**। पुं। दुष्टव्रणे। शस्त्रभेदे। हे.च.।

**दुस्स्थः**। पुं। कुक्कुरे। कुक्कुटपक्षिणि। शब्दार्थकल्प.।

**दुहिता**। स्त्री। कन्यायाम्। अ.।

**दूः**। पुं। रोगे। वै.निघ.।

**दूतः**। पुं। वैद्यानेतरि। गमनाय प्रश्नाय वागते पुरुषे। सु.सू.१०अ.। तल्लक्षणम्—"यश्चिकित्सकमानेतुं याति दूतः स कथ्यते। दूता. सुजातयोऽव्यङ्गाः पटवो निर्म्मलाम्बराः। सुखिनोऽश्वपारूढ़ाः शुभपुष्पफलैर्युताः। सजातयः सुचेष्टाश्च सजीवदिशि सङ्गताः। भिषज समये प्राप्ता रोगिणः सुखहेतवे॥" भा.।

**दूतघ्नी**। स्त्री। कदम्बपुष्पाम्। श.च.।

**दूति(ती)का**। स्त्री। सारिकापक्षिणि। शालिक। रा.नि.व.१९। श्वेतकण्टकार्य्याम्। वै. निघ.।

**दूती**। स्त्री। रक्तपाटलायाम्। शारिकापक्षिणि। रा.नि.व.१९। वै.निघ.।

**दूरगः (सः)**। पुं। उष्ट्रे। गर्द्दभे। रा. नि. व. १९। वै. निघ.।

**दूरजम्**। क्ली। वैदूर्य्यमणौ। भा.।

**दूरदर्शनः ( दर्शी, दृक् )** पं। गृध्रे। त्रिका.। पण्डिते। हे.च.।

**दूरमूला**। स्त्री। मुञ्जे। मूज। दुरालभायाम्।

**दूरेरितेक्षणः**। त्रि। केकरे। टेरा, गङ्गा। श.मा.।

**दूर्य्यम्**। क्ली। विष्ठायाम्। श.र.।

**दूर्व्वा**। स्त्री। (Cynodon dactylon. Syn. Agrostis cynosurioides, or panicum doctylon.) स्वनामख्यातघास विशेषे। दूर्व्वा। हिं दूब्, दुब्। तें गरिकेगड्डि, गरिककसुवु। ता. अरुगम् पुल्लु। तत्पर्य्यायः,—शतपर्व्विका, सहस्रवीर्य्या, भार्गवी, रुहा, अनन्ता (अ.) गुणा (रा.), नन्दा, महावरा (शब्दर.), हरितालिका (त्रि.), तिक्तपर्व्वा, दुर्म्मरा, वक्रवीर्य्या, हरिता, हरिताली, कच्छरुहा। श्वेतायाः पर्य्याय,—शतवीर्य्या, गण्डाली. शकुलाक्षकः, गोलोमी (ज.), सितदूर्व्वा, सितालता (र.), शतपर्व्वा, सिता (र.)। दूर्व्वा बहुधा श्वेतनीलमालागण्डभेदेन। तासां विशेषाः स्वस्वपर्य्याये मन्याः। सा. गुणाः—कषायाः मधुराः शीतपित्ततृष्णारोचकवमिघ्नाः दाहमूर्च्छाग्रहभूतशान्तिश्लेष्मश्रमध्वंसिन्यश्च। रा.नि.व.८। वा.सू.१५ अ.। "दूर्व्वानन्तानिम्बवासाः।" श्वेतदूर्व्वायाम्। भा.४भ.बालरो.चि.। "श्वेता दूर्व्वा घृतं मधु।" शय्याम्। रा.नि.व.६।

**दूर्व्वादिवर्गः**। पुं। दूर्व्वानन्तानिम्बवासात्मगुप्तागुन्द्राभीरुशीतपाकीप्रियङ्गवश्चेति वर्गे। गुन्द्रः शर, अभीरुः शतावरी सुसलपर्णं वा, शीतपाकी गुञ्जा। अयञ्च वर्गः पित्तघ्नः न्यग्रोधपद्मकादिवत्। वा.सू.१५अ.।

**दूर्व्वाद्यघृतम्**। क्ली। रक्तपित्ते घृतम्। गव्यघृतं ४ श.। कल्कार्थं—दूर्व्वामूलं उत्पलमूलं कुङ्कुमं मञ्जिष्ठा एलवालुकम् उशीरं मुस्ता रक्तचन्दनम् एषां प्र. २ तो.। पाकार्थं—आतपतण्डुलजलं १६ श. छागदुग्धं १६ श.। (तण्डुलोदकार्थं तण्डुलं ४ श. जलं १६ श.)। भैष.। भा.।

**दूर्व्वासोमः**। पुं। सोमलताभेदे। सु.चि.२९अ.।

**दूलकम्**। क्ली। तूलके। तूला। रस.र.बाल.चि.।

**दूलि(ली)का**। स्त्री। नील्याम्। नील गाछ। श.र.।

**दूश्यम्**। क्ली। वस्त्रगृहे। ताँबू। अ.टी.।

**दूषकः**। पुं। शालिधान्यभेदे। गुणाः शालिवत्। सु.सू.४६अ.। भा.पू.१भ.धा.व.। पक्षिभेदे।

**दूषिः (षि[षी]का)**। स्त्री। नेत्रमले। चक्षुर पिचुटी। रा.नि.व.१८। अ.टी.भ.। श.र.। तत्पर्य्यायः,—पिञ्जोड़कं पिञ्जेटः पिञ्जट (शब्दर.)। मुखदूषिकारोगे। वा. उ. ३१ अ.। तूलिकायाम्। मे.।

**दूषीविषम्**। क्ली। औषधादिहतावीर्य्यविषे। भोजनादिदोषेण निद्रया वा दूषितं चीर्णविषं धातूनपि काये दूषयत् दूषीविषमित्युच्यते। "दूषितं देश-कालान्न-दिवास्वप्नैरभीक्ष्णशः। यस्माद्दूषयते धातून् तस्माद्दूषीविषं स्मृतम्॥" तस्य चि. अजेयघृतादौ। सु.कल्प.२अ.। तच्च विषं प्राणहरम्।

यथा—दूषीविषं प्राणहरमिति सङ्क्षेपतो मतम्। लक्षणं—“गात्रं रक्तं सितं रक्तं श्यावं वा पिड़कान्वितं। सकण्डूदाहवीसर्पपाकि स्यात् क्लेदनं तथा॥” च.। गुणाः—“उदरगुल्मकुष्ठप्रमेहघ्नम्।” राज.।

**दूषीविषारिः**। पुं। दूषीविषविपन्ने अगदविशेषे। “पिप्पली ध्यामकं मांसी रोध्रमेला सुवर्चिका। कुटन्नटं नतं कुष्ठं यष्टीचन्दनगैरिकम्। दूषीविषारिर्नामायं न चान्यत्रापि वार्य्यते॥” वा. उ. ३५अ.। सु. कल्प १अ.।

**दूष्यम्**। क्लौ। रक्ते। वा.सू.२५अ.। पूये। हे. च.। वस्त्रे। वस्त्रगृहे। मे.।

**दूष्यजलम्**। क्लौ। विस्रुतादिदुष्टवारिणि। विष्ठादिदुष्टे जले। यथा—“विस्रुतारुणनीलिकाविपक्तं तप्तं घनफेनिलं दन्तग्राह्यमनार्त्तवं सलवणं शैवालकैः संवृतम्। जन्तुव्रातविमिश्रितं गुरुतरं पर्णौघपङ्काविलं चन्द्रार्कांशुतिरोहितं च न पिबेत् नीरं जड़ं दूषितम्॥” रा.नि.व.१४।

**दूष्या**। स्त्री। हस्तिकक्ष्यरज्ज्वौ। हाँचदड़ि। हे.।

**दूष्युदरम्**। क्लौ त्रिदोषजोदररोगे। निदानलक्षणं यथा—“स्त्रियोऽन्नपानं नखरोममूत्रविड़ार्त्तवैर्युक्तमसाधुवृत्ताः। यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा। तेनाशु रक्तं कुपिताश्च दोषाः कुर्वन्ति घोरं जठरं त्रिलिङ्गम्।...प्रकीर्तितं दूष्युदरन्तु घोरम्॥” सु.नि.७अ.।

**दृक्**। स्त्री। नेत्रे। रा.नि.व.१८।

**दृकम्**। क्लौ। छिद्रे। उणा.।

**दृक्कटः**। पुं। इत्कटे। त्रिका.।

**दृक्कर्णः**। पुं। सर्पे। हे.च.।

**दृक्प्रदम्**। क्लौ। सौवीराञ्जने। रा.नि.व १३।

**दृक्प्रसादः**। पुं, स्त्री। कुलत्थायाम्। वनकुलत्था। रा. नि. व. ५। कुलत्थाञ्जने। रा. नि. व. १३।

**दृक्श्रुतिः**। पु। सर्पे। हला.।

**दृक्सेकः**। पुं। आश्च्योतने। वै.निघ.।

**दृगध्यक्षः**। पुं। सूर्य्ये।

**दृग्योनिः**। पुं। दुर्य्यकक्षोवे। त्रिका.।

**दृग्विषः**। पुं। सर्पे। हे.च.।

**दृग्व्याधिहृतम्**। क्लौ। रसाञ्जने। वै.निघ.।

**दृड़कः**। पुं। चुक्रराम्। उडून।

**दृढ़ः**। पुं, क्लौ। एलबालुके। रा.नि.व.४। शाल्मलीवृक्षे। धववृक्षे। लौहे। प्र.प.। हीरके। वै.निघ.। त्रि.। कठिने। मे.।

**दृढ़कण्टकः (का)**। पुं, स्त्री। खर्ज्जूरवृक्षे। वै.निघ.। अटीटवृक्षे। धन आँकड़ गाछ। श.च.।

**दृढ़काण्डम्**। क्लौ। दीर्घरोहिषतृणे। बड़ गन्ध तृण। रा.नि.व.८। पुं। वंशे। बाँश। रा. नि.व.७।

**दृढ़काण्डा**। स्त्री। वत्सादनीलतायाम्। पाताल गरुड़ी। रा.नि.व ३।

**दृढ़गर्भम्**। क्लौ। हीरके। प.मु.।

**दृढ़गात्रिका**। स्त्री। मत्स्याण्डिकायाम्। मिछरि। श.।

**दृढ़ग्रन्थिः**। पुं। वंशे। बाँश। रा.नि.व.७।

**दृढ़च्छदः**। पुं, क्लौ। तालवृक्षे। रा.नि.व.९। दीर्घरोहिषे। बड़ गन्धतृण। रा.नि.व.८।

**दृढ़तरुः**। पुं। धवलवृक्षे। धाओया गाछ। रा. नि.व.९।

**दृढ़तृणः**। पुं, स्त्री। मुञ्जतृणे। मुञ्ज। (णा) वल्वजायां। उलु। रा.नि.व.८।

**दृढ़त्वक्**। पुं। यावनालशरे। रा.नि.व.८। मुञ्जतृणे। वै.निघ.।

**दृढ़दंशकः**। पुं। जलचरविशेषे। हाङ्गर। वै.निघ.। शब्दार्थकल्पतरुः।

**दृढ़नीरः (लः)**। पुं। नारिकेलवृक्षे। रा. नि व.११।

**दृढ़पत्रः**। पुं। वंशे। बाँश गाछ। रा.नि.व. ७। मुञ्जतृणे। वै.निघ.।

**दृढ़पत्री**। स्त्री। वल्वजायां। उलु। रा.नि.व.८।

**दृढ़प(पा)दा (पादी)**। स्त्री। भूम्यामलक्याम्। यवतिक्तायाम्। रा.नि.व.३।५।

**दृढ़पदी**। स्त्री। वन्दाके। परगाछा। रा.नि. [व.५।

**दृढ़पुष्पा**। स्त्री। गुलुच्छकन्दे। वै.निघ.।

**दृढ़पृष्ठकः**। पुं। कच्छपे। रा.नि.व.१९।

**धनूः ।** स्त्री । धनुषि । ज. ।

**धनेच्छुः ।** पुं । करेटूपक्षिणि । [ म. ।

**धनेयकम् ।** क्ली । धन्याके । धनियाँ । श.टी.

**धनैषणा ।** स्त्री । एषणासु नरस्य द्वितीयैषणायाम् । धनप्रार्थना । "प्राणेभ्यो ह्यनन्तरं धनमेव पर्य्येष्टव्यं भवति । तदुपकरणानि च कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि । यानि चान्यान्यपि सतामविगर्हितानि कर्म्माणि वृत्तिपुष्टिकराणि विद्यात् ।" च.सू.११अ. ।

**धन्यः ।** पुं । अश्वकर्णशाले । लता शाल । रा.नि.व.९ । क्ली । द्रव्ये । वै.निघ. । कैवर्त्तमुस्तायां । ज.द.१२अ. । धन्याके ।

**धन्यवृक्षः ।** पुं । अश्वत्थवृक्षे । वै.निघ. ।

**धन्या ।** स्त्री । धन्याके । धने । हे.च. । उपमातरि । वै.निघ. । आमलक्याम् । मे. । निर्जलप्रदेशे । वै.निघ. ।

**धन्याकम् ।** क्ली । (Coriandrum sativum.) Coriander plant. स्वनामख्यातपण्यद्रव्ये । प.मु. । धने । हिं धनिया । तें कोत्तिमिरचेट्, धनियम् । ता. कोटमल्लि । तत्पर्य्यायः,—छत्रा, वितुन्नकं कुस्तुम्बुरु (अ), धन्यं, धन्याकं, तुम्बुरु, धनिकं, धनीयकं, कस्तुम्बुरी, धान्याकं, धन्या, तुम्बरी, धनेयकं (भरतधृतरत्नकोः). धानकं, धान्यं, धानियं, धनिका, छत्राधान्यं, सुगन्धि, शाकयोग्यं, सूक्ष्मपत्रं, जनप्रियं, धान्यबीजं, बीजधान्यं, वर्वरिका, वेधकं (रा.), उग्रा (के.); धेन्निका । भा. । च.द.सन्निपातज्व.चि.नागरादिः । "धन्याकं हृद्दतोद्रयम् ।" चि.ज्व.चि. । "व्युषितं धन्याकजलम् ।" चि. श्लेषज्व.चि. गुडूच्यादिः । गुणाः—तुवरं स्निग्धम् अवृष्यं मूत्रलं लघु तिक्तं कटूष्णवीर्य्यं दीपनं पाचनं ज्वरघ्नं रोचकं ग्राहि स्वादुपाकं त्रिदोषघ्नं तृष्णादाहवमिश्वासकासकार्श्यक्रिमिघ्नञ्च । आर्द्रं सत् तद्गुणमप्यत्र स्वादु विशेषतः पित्तघ्नञ्च । भा.पू.१भ. । मद.व.२ ।

**धन्वः ।** पुं । दुरालभायाम् । वै.निघ. ।

**धन्वकः (गः) ।** पुं । धामनवृक्षे । च.द.मेह.चि. । "पाठार्ज्जुनधन्वकानां ।"

**धन्वङ्गः ।** पुं । धामनवृक्षे । धामना गाछ । गुणाः—"धन्वङ्गस्तु धनुर्वृक्षो गोवृक्षः सुतेजनः । धन्वङ्गः कफपित्तास्रकासहृत्तुवरो लघुः । बृंहणो बलकृद्रुक्षः सन्धिकृद्व्रणरोपणः ॥" भा.म.२ भ.प्रमे.चि. । देशे । वै.निघ. । [ ७अ. ।

**धन्वचारी ।** त्रि । निर्जलदेशचारिणि । वा.चि.

**धन्वजा ।** स्त्री । दुरालभायाम् । श्या. ।

**धन्वतरुः ।** पुं । सोमवल्कायाम् । वै.निघ. ।

**धन्वदुर्गम् ।** क्ली । निर्जलदेशे । पुराणम् ।

**धन्वनः ।** पुं । धामनवृक्षे । धामना गाछ । र.मा. । हिं धामिनी । मं धमाण । कं उदुवे तत्पर्य्यायः,—पिच्छिलत्वक् (रा.), रक्तकुसुमः, धनुर्वृक्षः, महाबलः, रजासहः, पिच्छिलकः, रुच्यस्वादुफलः । गुणाः—कटुः उष्णः कषायः कफघ्नः दाहशोषकरः संग्राही कण्ठदोषघ्नश्च । रा.नि.व.९ । एतत्फलं कषायं हिमं स्वादु वातकफघ्नञ्च । सु.सू.४६अ. ।

**धन्वन्तरिः ।** पुं । वैद्ये । चित्ते आयुर्व्वेदप्रणेतरि देववैद्ये । तत्प्रादुर्भावः—"एकदा देवराजस्य दृष्टिर्निपतिता भुवि । तत्र तेन नरा दृष्टा व्याधिभिः परिपीड़िताः ॥ तान् दृष्ट्वा हृदयं तस्य दयया परिपीड़ितम् । दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह ॥ धन्वन्तरे सुरश्रेष्ठ भगवन् किञ्चिदुच्यते । योग्यो भवसि भूतानामुपकारपरो भव ॥ उपकाराय लोकानां केन किं न कृतम्पुरा । त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान् ॥ तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव । प्रतीकाराय रोगाणामायुर्व्वेदं प्रकाशय ॥ इत्युक्त्वा सुरशार्दूलः सर्व्वभूतहितेप्सया । समस्तमायुषो वेदं धन्वन्तरिमुपादिशत् ॥ अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा । आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि ॥ नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ । बाल एव विरक्तोऽभूच्चचार सुमहत्तपः ॥ यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम् । ततो धन्वन्तरिर्लोकैः काशिराजोऽभिधीयते ॥ हिताय देहिनां स्वीया संहिता विहितामुना । अयं विद्यार्थिनो लोकान् संहितान्तामपाठयत् ॥' भा. । चिकित्सादीपकनिदाननिघण्ट्वादिप्रणेतरि ।

**धन्वन्तरिग्रस्ता ।** स्त्री । कटुकां । कट्‌की । श.च. । [ विशेषे ।

**धन्वन्तरिपञ्चकम् ।** क्ली । धन्वन्तरिकृतपन्य-

**धन्वन्तरिभागः ।** पुं । औषधकरणार्थं वैद्य-

लम्बीपधादिभागे। सिद्दरणानां ॥० भ. तैलघृत-लौहानां ८ भ. लिङ्गवटिकानां ७ भ.। वै.निघ.।

**धन्वपट:** । पुं। प्रियालवृक्षे।

**धन्वमांसम्** । क्लो। निर्जलदेशपशुमांसे। वा.चि.१२अ.। See जाङ्गलमांसम्।

**धन्वयवास: (क:)** }
**धन्वयास:** } पुं। दुरालभायाम्। रा.नि.व.४। चि.यो.रक्तार्शचि.। "धन्वयवासा: सनागरा: क्वथिता:।" च.सू.४अ.। चि.यो.सन्निपात-ज्व.चि.अष्टादशाङ्गकषाये।

**धन्वी (न्)** । पुं। मरुभूमौ। रा.नि.व.२। च.चि.१अ.।

**धन्वामिषम्** । क्लो। जाङ्गलपशुमांसे।

**धन्वी (इन्)** । पुं। दुरालभायाम्। रा.नि.व.४। अर्जुनवृक्षे। रा.नि.व.९। वकुलवृक्षे। वकुल। रा.नि.व.१०।

**धमन:** । पुं। नलतृणे। नल गाछ। रा.नि.व.८। निम्बवृक्षे। निम् गाछ। रा.नि.व.९।

**धमनि: (नी)** । स्त्री। पृश्निपर्ण्याम्। चाकुले। रा.नि.व.४। उत्तरापथप्रसिद्ध नालिकानामगन्धद्रव्ये। भा.। हे.च.। नलीनामगन्धद्रव्ये। हरिद्रायाम्। ग्रीवायाम्। हे.। शिरायाम्। रा.नि.व.१८। शिराविकार एव धमनी। धमन्यश्च नाभिजा:, तत्संख्या च २४। तेषु दशोर्द्ध्वगा:, दशाधोगामिन्यस्तिर्य्यग्गाश्च। तेषूर्द्ध्वगा: रूपरसगन्धस्पर्शशब्दप्रश्वासोच्छ्वासजृम्भक्षुत्हास्यभाषणरोदनगानादिकर्म्म सम्पादयन्त्यो देहं धारयन्ति। ताश्च हृदयं गत्वा प्रत्येकं शाखात्रयं विस्तारयन्त्य: ३० संख्या भवन्ति। तासु प्रत्येकं द्वे द्वे भूत्वा दश धमन्यो वातपित्तकफशोणितरसान् वहन्ति। अष्टौ च रूपादीनि गृह्णन्ति। शिष्टासु द्वादशसु द्वाभ्यां वाङ्निष्पत्ति:, द्वाभ्यां घोषणं, द्वाभ्यां निद्रा, द्वाभ्यां जागरणं, द्वाभ्याञ्च रक्तवहनं भवति शिष्टेन स्तनसम्बन्धिनैन द्वयेन च स्त्रिया: स्तन्यवहनं पुंसश्च शुक्रवहनं स्तनाभ्यां भवति। अधोगास्तु दश पित्ताशयमधिगम्य त्रिंशत्सम्पन्ना:। तासु द्वे द्वे वातपित्तकफरक्तरसान् वहत:। शिष्टाभ्यश्च द्वे अन्त्रमाश्रित्यान्नं वहत। द्वे जलं वहत:, द्वे वस्तिमाश्रित्य मूत्रं वहत:। द्वाभ्यां पुरुषस्य शुक्रं स्त्रियश्चार्त्तवञ्च प्रादुर्भवति, द्वे च तद्द्वयं नि:सारयत:। द्वे स्थूलान्त्रनिबद्धे भूत्वा पुरीषं नि:सारयत:। अवशिष्टाश्चाष्टौ तिर्य्यग्गामिन्यो स्वेदं नि:सारयन्ति। एताश्चाधोगा धमन्य: पक्वाशयकटिमूत्रपुरीषगुह्यवस्तिमेढ्रपादप्रभृतीन्याश्रित्य तेषां पोषणं सम्पादयन्ति तिर्य्यगाश्च धमनीचतुष्टयं प्रत्येकमसंख्यशाखाविभक्तं देहं रन्ध्रयुक्तं करोति। एतासाञ्च मुखानि प्रतिलोमकूपं संलग्नानि। तेभ्यश्च मुखेभ्य: स्वेदा निर्गच्छन्ति, देहरसो बहिरन्तश्च सन्तर्पयति। अभ्यङ्गादिना च तैलादिवीर्य्यमन्त:शरीरं प्रविश्य त्वक्पाकादिकं करोति तेनैव च शुभाशुभस्पर्शज्ञानं भवति।" सु.शा.९अ.। भा.।

**धमन्य:** । पुं। धन्वनवृक्षे।

**धम्मि:** । स्त्री। अग्नौ। धमन्याम्। हारा.।

**धयनम्** । क्लो। पाने। रा.नि.व.२०।

**धर:** । पुं। कार्पासतूलके। मे.। पर्व्वते। कूर्म्मराजे। मे.।

**धरण:** । पुं। तुलायां। स्तने। धान्ये। हे.च.। तण्डुले। वै.निघ.। क्लो। कालिङ्गचतुर्माषमितमाने। रौप्यपोड़शमाषे। वै.निघ.।

**धरणी** । धारणीकन्दे। रा.नि.व.७। शिरायां। रा.नि.व.१८। खदिरवृक्षे। रा.नि.व.२३। पुनर्नवायाम्। मेदायाम्। वै.निघ.। शाल्मलिवृक्षे। श.च.। पृथिव्याम्।

**धरणीकन्द:** । पुं। धरणीकन्दे। रा.नि.व.७।

**धरणीकीलक:** । पुं। पर्व्वते। शब्दर.।

**धरणीधर: (ध्र:)** । पुं। पर्व्वते। कच्छपे। रा.नि.व.१९।

**धरणीपूर: (प्लव:)** । पुं। समुद्रे। शब्दर.। चि.।

**धरणीबन्ध:** । पुं। अरिष्टबन्धने। सर्पाघाते बन्धनविशेष। स शाखादष्टस्य दंशदेशाच्चतुरङ्गुले न्याय्य:। यदाह वाग्भट:—"दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले। क्षौमादिभिर्व्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित्॥" च.द विष.चि.।

**धरणीया** । स्त्री। धारणीकन्दे।

**धरणीरुह:** । पुं। वृक्षे। अ.।

**धरा** । स्त्री। शिरायाम्। नाड्याम्। रा.नि.व.१८। वसायाम्। गर्भाशये। मे.।

**धराकदम्ब: (क:)** । पुं। कदम्बवृक्षे। हारा.।

**धराङ्कुर:** । पुं। भूच्छत्राके। वै.निघ.।

**धराकादम्ब:** । पुं। धाराकदम्बे। हा.।

**धराजकुष्माण्ड:** । पुं । भूमिकुष्माण्डे । भूँइ कुम्ड़ा । चि.क्र.क.स्वौरी.चि. ।

**धराफल:** । पु । कर्म्मरङ्गे । कामराङ्गा । रा. ।

**धराफला:** । स्त्री । वार्त्ताक्याम् ।

**धरिमा (न्)** । पुं । तुलायाम् । तराजू । आकरे । वै.निघ. ।

**धरुण:** । पुं । जले । मे. ।

**धर्त्तम्** । क्ली । गृहे । उ. ।

**धर्त्तूर:** । पुं । शुक्लधुस्तूरे । वै.निघ. । [ धनुषि ।

**धर्म्म:** । पुं । स्वभावे । आचारे । गणे । मे. ।

**धर्म्मघ्न:** । पुं । विभीतकवृक्षे । वै.निघ. ।

**धर्म्मण:** । पुं । धमन्यवृक्षे । धामना गाछ । र.मा. । सर्पभेदे । ঢেমনা সাপ । गे. ।

**धर्म्मद्रवी** । स्त्री । गङ्गायाम् । त्रि. ।

**धर्म्मद्वेषी (इन्)** । पुं । विभीतकवृक्षे । वै.निघ. ।

**धर्म्मपत्तनम्** । क्ली । मरिचे । रा.नि.व.६ ।

**धर्म्मपत्र:** । पुं, क्ली । उदुम्बरवृक्षे । श.च. ।

**धर्म्मपाल:** । पुं । खड्गे । शब्दर. ।

**धर्म्मवृक्ष:** । पुं । अश्वत्थवृक्षे । रा.नि.व.११ ।

**धर्म्मसू:** । पुं । धूम्राटपक्षिणि । श.र. ।

**धर्म्मिणी** । स्त्री । रेणुकायाम् । রেণুক । रा.नि.व. । [ शाक्षे ।

**धर्ष: (र्षितम्)** । पुं, क्ली । मैथुने । त्रिका. ।

**धलण्ड: (क:)** । पुं । स्वनामख्यातवृक्षे । धला आँकोड़ । श.च. ।

**धलमङ्कुठ:** । धलण्डवृक्षे । मे. ।

**धव:** । पुं । (Anogeissus latifolia. Syn. Conocarpus latifolia.) स्वनामख्यातवृक्षे । धाओया गाछ । र.मा. । मं धामोड़ा । कं दिंदिग । तें नारिंगचेट्टु । तत्पर्य्याय:,—धुरन्धर:, -शाकटाख्य: (रा.) दृढ़तरु:, गौर:, कषाय:, मधुरत्वक्, शुक्लवृक्ष:, शुक्लाङ्ग:, पाण्डुतरु:, धवल:, पाण्डुर: । गुणा:—कटु: कषाय: कफघ्न: वातघ्न: पित्तकोपन: रुच्य: दीपनश्च । राज. । "धव: शीत: प्रमेहार्श:पाण्डुपित्तकफापह: । मधुरस्तुवरस्तस्य फलञ्च मधुरं मनाक् ॥" भा. । अन्यश्च—'धव: कषाय: कटुक: कफघ्नोऽनिलनाशन: । पित्तप्रकोपनो रुच्यो विरोधी दीपन: पर: ॥' फलमीषन्मधुरम् । रा.नि.व.८ । काके । त्रिका. । मनुष्ये । अम. । खदिरे । र.सा.सं. मृत्युञ्जयलौहे । [ वै.निघ. ।

**धवनी** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া ।

**धवल:** । पुं । धववृक्षे । धाओया गाछ । रा.नि.व.८ । अर्ज्जुनवृक्षे । भा. । शङ्खे । चीनकर्पूरे । रा.नि.व.१२ । धातकीवृक्षे । वै.निघ. । क्ली । श्वेतमरिचे । रा.नि.व.६ । त्रि । शुक्ले । सुन्दरे । त्रिका. । [ नि.व.१९ ।

**धवलपक्ष: (क्षी इन्)** । पुं । हंसे । रा.

**धवलपाटली** । स्त्री । शुक्लपाटल्याम् । শ্বেত পারুল । रा.नि.व.१० ।

**धवलपुनर्नवा** । स्त्री । श्वेतपुनर्नवायाम् । चक्र. ।

**धवलमृत्तिका** । स्त्री । खटिकायाम् । ফুলখড়ি । रा.नि.व.१३ ।

**धवलयावनाल:** । पुं । श्वेतवर्णयावनालवृक्षे । শাদা জনার । मं श्वेतजुवारी । कं बिलियजोल । तत्पर्य्याय:,—पाण्डुर:, तारतण्डुल:, नक्षत्रकान्ति-विस्तार:, धृत:, मौक्तिक-तण्डुल: । अथ शिम्बीधान्ये वर्त्तते । गुणा:—शैत्य: बल्य: त्रिदोषघ्न: वृष्य: रुचिप्रद: अर्शोघ्न: पथ्य: गुल्मव्रणघ्नश्च । रा.नि.व.१६ ।

**धवलशारिवा** । स्त्री । शुक्लशारिवायाम् । অনন্তমূল । वै.निघ. ।

**धवला** । स्त्री । श्वेतशारिवायाम् । See अनन्ता श्वेतसारिवा च । भा.पू.१भ. । गवि । গাই গরু । त्रिका. । वचायाम् । श्वेतापराजितायाम् । र.चि. पापरोगान्तकरसे ।

**धवली** । स्त्री । शुक्लगवि । अम. ।

**धवलेक्षु:** । पुं । श्वेतेक्षौ । रा.नि.व.१४ ।

**धवलोत्पलम्** । क्ली । कुमुदपुष्पे । নালফুল, সেলা ফুল । रा.नि.व.१० ।

**धवाण्क:** । पुं । वायौ । उ. ।

**धवित्रम्** । क्ली । मृगचर्म्मनिर्म्मितव्यजने । अम. ।

**धाक:** । पुं । वृषे । क्ली । अन्ने । स्तम्भे । उणा. ।

**धातकी** । स्त्री । (Woodfordia floribunda. Grislea tomentosa.) स्वनामख्यातपुष्पवृक्षे । धाईफूलेर गाछ । हिं धावइ,

धाकीला । मं धायटी । हिं धारिपुष्प्, धायि । उत्. धातिकी । तत्पर्य्यायः,—धातृपुष्पी, धातुपुष्पी, धात्री (शब्दर.), वह्निपुष्पी, ताम्रपुष्पी, धातकी, अग्निज्वाला, सुभिक्षा, पार्व्वती, बहुपुष्पिका, कुञ्जरा, सीधुपुष्पी, कुञ्जरा, मद्यवासिनी, गुच्छपुष्पी, रक्तपुष्पी, तीव्रपुष्पिणी, तीव्रज्वाला, वह्निशिखा, मद्यपुष्पी । गुणाः—कटुः उष्णा मदकृत् विषघ्नी प्रवाहिकातिसारघ्नी विसर्पव्रणघ्नी च । रा.नि. व.६ । "धातकी कटुका शीता मृदुकृत्तुवरा लघुः । तृष्णातिसारपित्तास्रविषक्रिमिविसर्पजित् ॥" भा. । शीता रक्तपित्तघ्नी च । राज. ।

**धातकीकुसुम(पुष्प)म्** । क्ली । धातकीपुष्पे । धाइ फुल । सु.सू.३८अ. धन्वादिः । च.सू.४अ. ।

**धातक्यभिषुतम्** । क्ली । धातकीपुष्पकृत-सुराभेदे । गुणाः—हृद्यं रुच्यं रोचनं दीपनञ्च । च. सू.२०८. ।

**धातक्यादिचूर्णम्** । क्ली । बालरोगाधिकारे औषधम् । पाठः—"धातकीबिल्वधन्याकलोध्रेन्द्र-यववालकम् । लिहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित् ।" धाइफुल, बेलशुंठ, धने, लोध, इन्द्रयव, बाला प्रत्येक चूर्ण समभाग मधु द्वारा लेहन । हा.की. ।

**धाता** । पुं । स्रष्टरि । शरीरादिसंयोगस्य धारणहेतौ । सु.शा.३अ. ।

**धातुः** । पुं । खनिजेषु स्वर्णादिमहाविषाटविष-नवविधपदार्थेषु । धाउ । यथा—काञ्चनं रजतं ताम्रं कांस्यं पित्तलं नागं वङ्गं लौहञ्चेत्यष्टौ । रा. नि.व.१८ । स्वर्णरौप्यताम्रवङ्गयशदसीसलौहानीति सप्त । भा. । तथा—"हेमतारारनागाश्च ताम्रवङ्गे च तीक्ष्णकम् । कांस्यकञ्चान्तलौहञ्च धातवो नव कीर्त्तिताः ॥" सुखबोधः । "त्रिविधन्तु सुवर्णं स्यादष्टधा रजतं भवेत् । पञ्च प्रकारकं ताम्रं वङ्गन्तु द्विविधं स्मृतम् । यशद त्रिविधं प्रोक्तं भवेन्नागन्तु षड्विधः । अष्टधा लौहमुद्दिष्टमेते सप्तैव धातवः ॥" चक्र.चि. । गुणाः—"वलीपलितखालित्यकार्श्या-बल्यजरामयान् । निवार्य्य देहं दधाति नृणां तद्धातवो मताः ॥" भा.पू.१भ.धातव. । देहधारक-वस्तुविशेषे । न च वातपित्तकफरूपः देहस्य धार णात्तस्य धातुशब्दवाच्यता । यथा—"धारणाद्वातव-स्ते स्युर्वातपित्तकफास्त्रयः ।" वैद्यकम् । गैरिक-मनःशिलाद्यश्मविकारे । प.मु. । शरीरस्थसप्त-धातुषु रसरक्तमांसमेदोऽस्थिमज्जशुक्रेषु । "रसाद्रक्तं ततो मांसं मांसान्मेदोऽस्थि तद्भवं । अस्थ्नो मज्जा ततः शुक्रमित्यमेषां विनिश्चयः ॥" रा.नि.व.१८ । धातूनाञ्च कर्म्माणि प्रीणनजीवनलेपस्नेहधारणपूरण-गर्भोत्पादकानि । गिरिमृत्तिकायां । रा.नि.व.१३ ।

**धातुक(ज)म्** । क्ली । शिलाजतुनि । वै. निघ. ।

**धातुकाशीष(सीस)म्** । क्ली । कासीसे । हिराकस् । रा.नि.व.१३ ।

**धातुकी** । स्त्री । धातकीवृक्षे । वै.निघ. ।

**धातुग्राही (इन्)** । पुं । खर्परे । वै.निघ. ।

**धातुघनः** । पुं । शरीरस्थ-रस-धातौ ।

**धातुघ्नम्** । क्ली । काञ्जिके । वै.च. ।

**धातुचेतनकरम्** । क्ली । दुग्धे । आमलके । हिदले । वै.निघ. ।

**धातुद्रावकम्** । क्ली । टङ्कणक्षारे । সোহাগা । वै.निघ. ।

**धातुनाशनम्** । क्ली । काञ्जिके । त्रिका. ।

**धातुपः** । पु । शुक्रे । रसे । श.च. ।

**धातुपाकः** । पुं । रसादिधातुपाके । तल्लक्षणम्—"निद्रानाशो हृदिस्तम्भो विष्टम्भो गौरवा-रुची । अरतिर्बलहानिश्च धातूनाम्पाकलक्षणम् ।" वैद्यकम् ।

**धातुपुष्पिका (ष्पी)** । स्त्री । धातकीवृक्षे । प.मु. । भा. ।

**धातुभृत्** । पुं । पर्व्वते । शब्दर. ।

**धातुमलः** । पुं । सीसके । रसादिमलेषु । प्रसवक्लेदादिषु च । "मलिनीकरणान्मलाः ॥" वैद्यकम् । "कफः पित्तं मलः खेषु प्रस्वेदो नखलोम च । नेत्रविट् त्वक् च स्नेहो धातूनां क्रमशोमलाः ।" भा. ।

**धातुमारिणी** । स्त्री । टङ्कणक्षारे । श.च. ।

**धातुमारी (इन्)** । पुं । गन्धके । वै.निघ. ।

**धातुमाक्षिकम्** । क्ली । स्वर्णमाक्षिके । रा.नि. व.१३ । धातुकाशीषे । हिराकस् । वै.निघ. ।

**धातुराजः (कम्)** । पुं, क्ली । वीर्य्ये । शुक्र । वै.निघ. । श.च. ।

**धातुवल्लभम्** । क्ली । टङ्कणे । गां प.मु. ।

**धातुवादी** (इन्)। पुं। खनिजविद्याभिज्ञे।

**धातुविट्**। स्त्री। शोधके। वै.निघ.।

**धातुविषम्**। क्ली। हरितालादौ। र.सा.सं.।

**धातुवृद्धिः**। स्त्री। रसादिवृद्धौ, रसादिधातुसाम्ये। च.सू.१३अ.।

**धातुवृद्धिकरः**। पुं। धातुवर्द्धकद्रव्ये, अश्वगन्धाकपिकच्छूशतावर्य्यादौ।

**धातुवैरी** (इन्)। पुं। गन्धके। प्र.च.।

**धातुवैषम्यम्**। क्ली। विकारागमरूपकार्य्ययोनौ। च.वि.८अ.।

**धातुशेखरम्**। क्ली। Green sulphate of Iron. धातुकासीसे। हिरेकस्। हे.च.।

**धातुशोधनम्**। क्ली। शीसके। वै.निघ.।

**धातुशोधनकारी**। स्त्री। हरीतक्याम्। वै.निघ.।

**धातुसम्भवम्**। क्ली। शीसके। वै.निघ.।

**धातुसाम्यम्**। क्ली। विकारोपशमरूपकार्य्ये। च.वि.८अ.। आरोग्ये। च.सू.१अ.।

**धातुस्तम्भनकरम्**। क्ली। जातीफले। वै.निघ.।

**धातुहा** (न्)। पुं। गन्धके। वै.निघ.।

**धातुक्षयकासः**। पुं। धातुक्षयकरकासरोगे। क्षयकास। निदा.। [ रा.।

**धातूपरसः**। पुं। भक्तमण्डे। ভাতের মাড়।

**धातूपलः**। पुं। खड़िकायाम्। খড়ি। वै.निघ.।

**धात्रिका**। स्त्री। आमलक्याम्। रा.नि.व.११।

**धात्री**। स्त्री। आमलक्याम्। আমলা। रा.नि.व.११। भा.पू.१भ.। See अकरा। उपमातरि, धाई। तल्लक्षणं —"पीताय यदि बालस्य विदध्यादुपमातरम्। सुविचार्य्य गुणान् दोषान् कुर्य्याद्धात्रीं तदेदृशीम्। सवर्णां मध्यवयसां सच्छीलां मुदितां सदा। शुद्धदुग्धां बहुक्षीरां सवत्सामतिवत्सलाम्। स्वाधीनामलसत्तुष्टां कुलीनां सज्जनात्मजाम्। कैतवेन परित्यक्तां निजपुत्रवत् शिशौ॥" भा.। धात्रीकर्म्म। यथा—"धात्री तु यदा स्वादु-बहुल-शुद्धदुग्धा स्यात्, तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधाय-ब्राह्म्यादीौषधं धारयन्ती कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेत्।" इत्यादि। च.शा.८अ.।

**धात्रीपत्रम्**। क्ली। तालीशपत्रे। रा.नि.व.६। आमलकीपत्रे।

**धात्रीफलम्**। क्ली। आमलकफले। আমলা। मद.व.१। (ला) स्त्री। आमलक्याम्। আমলা গাছ। रा.नि.व.११।

**धात्रीलौहम्**। क्ली। शूलाधिकारे। प्रथमः पाठः—शुद्धमण्डूरं ६ प. यवः ४ प. पाकार्थंजलं २ श. शे. ॥० श. शतावरीरसः ८ प. आमलकीस्वरसः ८ प. दधि ८प. दुग्धं ८प. भूमिकुष्माण्डस्वरसः ४ प. घृतं ४ प. इक्षुरसः ४ प.। एकत्र पक्वा पाके सिद्धे प्रक्षेपः—जीरकचूर्णं धान्यकचूर्णं त्वक्चूर्णं तेजपत्रचूर्णम् एलाचूर्णं गजपिप्पलीचूर्णं मुस्ताचूर्णं हरीतकीचूर्णम् अभ्रभस्म लौहभस्म रेणुकचूर्णं त्रिफलाचूर्णं तालीशचूर्णं नागकेसरचूर्णं प्र. २तो.। শুদ্ধমণ্ডুর ৬প. যব ৪প. পাকার্থ জল ২শ.শে.॥০ শ.। শতমূলীরস ৮প. আমলকীরস ৮ প. দধি ৮ প. দুগ্ধ ৮ প. ভূমিকুষ্মাণ্ডের রস ৪ প. ঘৃত ৪ প. ইক্ষুরস ৪ প.। একত্র পাক সিদ্ধ হইলে, প্রক্ষেপ—জীরা, ধনে, গুড়ত্বক্, তেজপত্র, এলাইচ, গজপিপুল, মুতা, হরীতকী, অভ্র, লৌহ, রেণুক, ত্রিফলা, তালীশপত্র, নাগেশ্বর প্রত্যেক চূর্ণ ২তো.। र.सा.सं.। सा.कौ.। द्वितीयः—धात्रीचूर्णं ८ प. मण्डूरचूर्णं ४ प. यष्टिमधुचूर्णं २ प. गुडूचीक्वाथे सप्तवारं भावयेत्। भावनाक्वाथार्थं क्वाथ्यद्रव्यम् औषधतुल्यमादाय ८ गुणे वारिणि साधयेत्। আমলকীচূর্ণ ৮ প. মণ্ডুরলৌহচূর্ণ ৪প. যষ্টিমধুচূর্ণ ২ প.। গুলঞ্চক্বাথে সপ্তাহ ভাবনানন্তর শুষ্ক করিয়া ঘৃতভাণ্ডে রাখিবে। ভাবনার ক্বাথ ঔষধের তুল্য লইয়া ৮ গুণ জলে প্রস্তুত করিবে। तृतीयः पाण्डौ—आमलकलौहत्रिकटुमनःशिलाचूर्णं मधु घृतं शर्करा प्र. समम्। আমলাচূর্ণ, লৌহ, ত্রিকটু, মনছাল, মধু, ঘৃত, চিনি প্রত্যেক সমান। चतुर्थः वाजीकरणे—आमलकचूर्णं ८ प त्रिफलाक्वाथेन २१ भावयित्वा अथ मृतलौहमधुघृतशर्कराः प्र. २ प. मिश्रयेत्। আমলাচূর্ণ ৮ প. ত্রিফলাক্বাথে ২১ ভাবনা দিবে। মৃতলৌহ ২ প. মধু ২

प. घृत २ प. शर्करा २ प. एकत्र मिश्रित करिबे। रस.र.। अन्य: पित्तरोगे—"धात्रीचूर्णस्याढ़ौ पलानि चत्वारि लौहचूर्णस्य। यष्टीमधुकरजस द्विपलं दद्यात् पुटे दृष्टम्। धात्र्याद क्राथेन तच्चूर्णं भाव्यञ्च सप्ताहं। चण्डातपेन संशुष्कं भूय: पिष्टं घटे स्थितं। घृतेन मधुना युक्तं भोजनादन्तमध्यत:। चीन् वारान् भचयेन्नित्यं......।" र.मा.सं.।

**धात्रीश्वरी**। स्त्री। धातव्याम्। रा.।

**धात्रीषट्पलकघृतम्**। क्ली। गुल्मे घृतम्। "धात्रीफलानां स्वरसैः षट्पलं विपचेद् घृतम्। शर्करासैन्धवोपेतं तद्धितं सर्व्वगुल्मिनाम्॥" धात्रीरस: घृतसम:। रस.र.। भै.।

**धात्रेयि(यी)का**। स्त्री। आमलक्याम्। रा.नि.व.११। उपमातरि।

**धात्र्यरिष्टम्**। क्ली। पाण्डुरोगे। "धात्रीफलसहस्रे द्वे पीड़यित्वा रसन्तु तं। चौद्राष्टांशेन संयुक्तं कृष्णार्द्धकुड़वेन च। शर्कराईतुलीन्मिश्रं पक्वं स्निग्धे घटे स्थितं। अधिवेन्मात्रया प्रात:......।" च.चि.२० अ.।

**धात्र्यादिः**। पुं। चातुर्थिकज्वरघ्ने धात्रीमुस्तान्वचीद्रकृते कषाये। वा.चि.१अ.।

**धानकः**। पुं। नाषपरिमाणे। च.कल्प.१२अ.। क्ली। धन्याके। मद.व.२।

**धाना (नाः)**। स्त्री। चिपीटके। चिड़े। प.मु.। भ्रष्टयवादौ। भाङ्गा यवादि। हिं बहुड़ा। गुणा:—विष्टम्भिनी रुक्षा तर्पणी लेखनी गुरुश्च। वा.। "यवादयश्च ये भ्रष्टा धानास्ते परिकीर्त्तिता:।" रा.नि.व.६। "धाना: सुदुर्जरा रुक्षास्तृट्प्रदा गुरवस्तु ता:। तथा मेहकफच्छर्द्दिनाशिन्य: सम्प्रकीर्त्तिता:॥" धन्याके। धनियां। भा.। शुष्कभृष्टयवे। सु.चि.१०अ.।

**धानाकाः**। स्त्री। धान्याके। धने'। वा. सू.१५अ.गुडूच्यादि:। "धानाकारकचन्दनम्।" (बहुवचनान्ता:)।

**धानाचूर्णम्**। क्ली। भ्रष्टयवादिचूर्णे। यवादिर छातू। है.च.।

**धानाली**। स्त्री। हृचभेदे।

**धानिका**। स्त्री। धान्यके। धने'। है.निघ. अ.सा.चि.यवान्यादौ।

**धानी (न्)**। पुं। पीलुवृचे। रा.।

**धानी**। स्त्री। धान्यके। धने'। मद.व.२। पीलुवृचे। रा.नि.व.११।

**धानुष्का**। स्त्री। अपामार्गवृचे। आपाः गाछ। श.च.।

**धानुष्यः**। पुं। वंशे। रा.नि.व.८।

**धानेय(क)म्**। क्ली। धन्याके। रा.नि.व.६। आर्द्रधान्यके। काँचा धनियाँ। वै.निघ.।

**धान्या**। स्त्री। एलायाम्। श.च.।

**धान्यम्**। क्ली। ४ तिलमाने। ६ गुञ्जामाने। धन्याके। धने'। रा.नि.व.६।२३। भूम्यामलक्यां। रा.नि.व.२३। (Oryza sativa.) Common rice plant. शाल्यादिवृचे। सतुषतण्डुले। धान। तत्पर्याय:,—भोग्यं, भोगार्हं, अन्नं, आद्यं, जीवनधनं, सम्बकारि:, ब्रीहि:। धान्यं त्रिधा शालिषष्टिकव्रीहिभेदत:। यथा—"शालयो हैमनास्तत्र षष्टिका ग्रैष्मिका अपि। व्रीहयस्त्वाशव: ख्याता प्रावृट्कालसमुद्भवा:।" राज.३प.। शूकशिम्बीतृणधान्यभेदेन त्रिधा। रा.नि.व.१६। . शालिव्रीहिशूकशिम्बीचुद्रधान्यभेदेन पञ्चविधम्। 'शालयो रक्तशाल्याद्या व्रीहय: षष्टिकादय:। यवादिकं शूकधान्यमुद्गाद्यं शिम्बिधान्यकम्। कङ्ग्वादिकङ्गुधान्यं तृणधान्यञ्च तत् स्मृतमिति॥" भा.पू.१भ.धा.व.। अष्टादशविधम्। यथा—"रक्तशालिर्महाशालि: कलमा षष्टिकापरा। खञ्जरीटीपशाली च नीरकान्ता कपिञ्जला। सौगन्धी शूकला चान्या तिलवासो कचौरका। गण्डा रुकवली च कलमान्या तथापरा। विल्लजा मागधी पीता ता अष्टादश शालय:॥ कङ्गुश्चतुर्विध: प्रोक्त: श्यामाकश्चीनक: कट:। कोद्रवो द्विविध: प्रोक्तो वंशबीजं शरोद्भवं। कुसुम्भबीजं तौली च योनरी च गवेधुक:। द्विजाङ्गला राजनी च चुद्रधान्यगणस्त्वयम्॥" चुद्रधान्यम्। त्रिधा यवश्च गोधूमी मुद्ग: षड्विध ईरित:। द्विविध: प्रोच्यते माषो राजमाषस्त्रिधा मत:। मकुष्ठस्तुवरी मेधा निष्पावकसमूरकौ। त्रिधा चणक उद्दिष्ट: कलायश्च त्रिपुण्ड्रक:॥" अत्रि.। एषां गुणा: स्वस्वपर्य्याये द्रष्टव्या:। शरद्ग्रीष्मोद्भवधान्यगुणा:—"धान्यं शरद्ग्रीष्मभवं पाकेऽम्लं पित्तकृद्गुरु।" ऋतुमन्निभधान्यगुणा:—"ऋतुमन्निभवबीर्य्यं पित्तलं

कफनाशनम् ॥" रा.व.१५. । स्थलजधान्यगुणाः—"स्थलजं कफ-पित्तघ्नं कषायं कटुपाकि च। किञ्चित् तु तिक्त-मधुरं पवनानलवर्द्धनम् ॥" वापितावापितधान्यगुणाः—"वापितं गुरु तद्धान्यं किञ्चिद्धीनमवापितम्।" रोप्यातिरोप्यधान्यगुणाः—"रोप्यातिरोप्ये लघुनी शीघ्रपाके गुणोत्तरे। अदाहिनी दोषहरे पथ्ये मूत्रविवर्द्धने ॥" यच्छूकसमन्वितं व्रीह्यादिकं तच्छूकधान्यम्, शिम्बीनिगूढं मुद्गमकुष्ठकादि शिम्बीधान्यम्। तृणोद्भवतया तृणधान्यम्। इति। "पक्वं हरितलूनञ्च धान्यं सर्व्वगुणावहम्। शुष्कं लूनन्तु निःसारं रूक्षं तत्सत्त्वनाशनम् ॥" इति हरितलूनान्नशुष्कलूनान्नगुणाः। "कोशधान्यं नवम्वल्यं मधुरं वत्सरोषितं। निर्द्दोषं लघु पथ्यञ्च तद्दर्पादचिरम्भवेत्। नवं धान्यमभिष्यन्दि लघु संवत्सरोषितं। द्व्यब्दोषितं लघु पथ्यं त्रिवर्षादवलम्भवेत् ॥" इति नवधान्यजीर्णधान्यगुणाः। धान्यं वापितम् उत्तमं, तदेव छिन्नोद्भवं मध्यमम्। दग्धभूमौ वने वा वापितं छिन्नोद्भवं धान्यं विण्मूत्रबन्धकरम्। चारोदकसमुत्पन्नं श्लेष्मरोगघ्नम्। सुस्निग्धभूमिजम् श्रीजोबलकरम्। वालुकाभूमिजम्बलपुष्टिदञ्च। रा.नि.व.१६।

**धान्यकम्।** क्ली। स्वनामख्यातपथ्यद्रव्ये। धने'। हिं कोथुम्बुरि। धनिया। मद.व.२। गुणाः—मधुरं शीतलं कषायं पित्तघ्नं ज्वरकासतृष्णाच्छर्द्दिकफघ्नं दीपनञ्च। रा.नि.व.६। च.सू.४ अ.। च.द.ज्वराति, चि.। "विल्वधान्यकनागरैः।" पुं। माषमितमाने। ७ कुँच। प.प्र.१ख.।

**धान्यकञ्चुकी (इन्)।** पुं। धान्यत्वचि। धानेर खोला। गुणाः—धान्यगुणयुक्तः। रा.नि.व.१६।

**धान्यक्षततण्डुलः।** पुं। खण्डितधन्याकतण्डुले। धानेर चा'ल। भा.म.१भ. अनाख्य.चि.धान्यकक्काथे। "प्रातर्धान्यकतण्डुलक्काथः।"

**धान्यत्वक्।** पुं। तुषे।

**धान्यचतुष्कम्।** क्ली। अतीसारे धान्यमुस्तकबालकविल्वकृतकषायविशेषे। वैद्यकसं.।

**धान्यचमसः।** पुं। चिपीटके। चिँड़े। त्रिका.।

**धान्यजम्।** क्ली। धान्ये। रा.नि.व.६।

**धान्यतुषोदम्।** क्ली। धान्यतुषकृतसन्धानविशेषे। एतदभावे काञ्जिकम्। चि.यो.अजी.चि.।

**धान्यतैलम्।** क्ली। गोधूमयावनालव्रीहियवादिजतैले। गुणाः—त्रिदोषशमनं कण्डूकुष्ठादिहरं चक्षुष्यञ्च। रा.नि.व.१५।

**धान्यपञ्चकम्।** क्ली। आमशूलादौ कषाये। "धान्यकं नागरं मुस्तं बालकं विल्वमेव वा। आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥" वैद्यकसं.। पञ्चविधधान्येषु शालिव्रीहिशूकशिम्बीक्षुद्राख्येषु। "शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकं। शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम् ॥" भा.।

**धान्यपटोलः।** पुं,क्ली। पित्तश्लेष्मज्वरे योगविशेषे। अत्र धान्यस्य १० माषाः पटोलस्य च ६ माषाः। सि.यो.ज्व.चि.।

**धान्यपानकम्।** क्ली। धान्यकृतपानकविशेषे। धानेर पाना। तस्य साधनविधिः—"शिलायां साधु सम्पिष्टं धान्यकं वस्त्रगालितं। शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतं। नूतने मृण्मये पात्रे स्थित पित्तहरं परम् ॥" भा.।

**धान्यपिप्पली।** स्त्री। आमज्वरे। ज्वरे दीपनी पाचनी च। धान्यादीनां प्रत्येकं ६ माषा ४ रतिः। यो.र.ज्वा.।

**धान्यभक्षकः (नः)।** पुं। गृहकर्त्तरि पक्षिणि। वावुई पाखी। रा.।

**धान्यमञ्जरी।** स्त्री। धान्यशीर्षके। धानेर शीष।

**धान्यमण्डः।** पुं,क्ली। धान्यकृतमण्डे। धानेर मण्ड। गुणाः—"धान्यमण्डं पित्तहरं श्रमघ्नञ्चाश्मरीहरं। वातं रक्तशमनं ग्राहि सन्दीपनम्परम् ॥" अत्रि,१२अ.।

**धान्यमद्यम्।** क्ली। धान्यजातमद्ये। धेनो मद। गुणाः—गुरु विष्टम्भि च। रा.नि.व.१४।

**धान्यमाषः।** पुं। कलाये, माषे। वै.निघ.। षोडशसर्षपपरिमाणे। प.क्षन्न.१२अ.।

**धान्ययोनिः।** पुं। काञ्जिके। अ.टि.भ.।

**धान्यमूलम्।** क्ली। काञ्जिके। अ.टी.भ.।

**धान्ययूषः।** पुं। धन्याकक्काथे। चक्र.।

**धान्यराजः।** पुं। यवे। रा.नि.व.१६।२३।

**धान्यवर्गः।** पुं। धान्यपञ्चके। भा.।

**धान्यवीजम्।** क्ली। धन्याके। रा.नि.व.६।

**धान्यवीरः।** पुं। माषे। মাষকলায় বা বিরি কলায়। रा.नि.व.१६।

**धान्यशाकम्।** क्ली। धन्याकशाके। ধনে'র শাক। र.चि.१४.।

**धान्यशीर्षकम्।** क्ली। धान्यकणिशे। ধানের শুড় বা শীষ। जटा.।

**धान्यश्रेष्ठम्।** क्ली। हैमन्तशालिधान्यभेदे, तृणान्ने। হৈমন্তিক ধান্যবিশেষ। रा.नि.व.१५।

**धान्यस्वेदः।** पुं। धान्याम्लैः स्वेदे। माषादिकोषधान्यैः स्वेदे। सु.चि.१अ.।

**धान्या।** स्त्री। धान्यके। अवि.२स्थान,२अ.।

**धान्याकम्।** क्ली। धान्यके। मद.२व.। वै.निघ.२भ.छर्दि.चि.।

**धान्याग्रम्।** क्ली। धान्यकणिशे।

**धान्याभ्र(क)म्।** क्ली। अभ्रकविशेषे। कृत्रिम अभ्रविशेष। तत्करणप्रणाली भावप्रकाशे—"पादांशं शालिसंयुक्तमभ्रं बद्धा च कम्बले। त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्दयेत्करैः। कम्बलाद्गलितं सूक्ष्मं वालुकारहितञ्च यत्। तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये॥" इति। तद्भस्मप्रकरणम्—"वज्राभ्रञ्च धमेद्वह्नौ ततः क्षीरे विनिक्षिपेत्। भिन्नपत्रन्तु तत् कृत्वा तण्डुलीयाम्लयोर्द्रवैः। भावयेदष्टयामन्तदेवं शुध्यति चाभ्रकम्। कृत्वा धान्याभ्रकं तत्तु शोषयित्वा तु मर्दयेत्। अर्कक्षीरैर्दिनं मर्द्यमर्कमूलद्रवेण वा। वेष्टयेदर्कपत्रैस्तु सम्यग्गजपुटे पचेत्। पुनर्मर्द्यं पुनः पाच्यं सप्तवारं प्रयत्नतः। ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम्॥" र.चि.४भ.।

**धान्यासवम्।** क्ली। मधुजम्बीरकृतसन्धानविशेषे। লেবুর আরক। मधुभाण्डं जम्बीररसैरापूर्य धान्यराशौ मासं स्थापयेत्। वै.निघ.।

**धान्याम्बु।** क्ली। धान्योदके। वा.चि.६अ.।

**धान्याम्ल(क)म्।** क्ली। रसस्वेदनकाञ्जिकविशेषे। यथालब्धनिस्तुषधान्यानि जलेन भाण्डमध्ये तावद्रक्षेत् यावदम्लत्वं नाप्नोति। ततश्च तन्मध्ये भृङ्गराज-मुण्ड्यपराजिता-मत्स्याक्षी-मर्षाक्षी-सहदेवी-त्रिफलानीलापराजिताहंसपादीचित्रकं समूलं यथालाभं कुट्टयित्वा देयम्। "नानाधान्यं यथाप्राप्तं-स्तुषवर्ज्जैर्जलान्वितैः। मृद्भाण्डं पूरितं रक्षेत् यावदम्लत्वमाप्नुयात्। तन्मध्ये भृङ्गरा मुण्डी विष्णुक्रान्ता पुनर्नवा। मीनाक्षी चैव मर्षाक्षी सहदेवी शतावरी। त्रिफला गिरिकर्णी च हंसपादी च चित्रकं। समूलं कुट्टयित्वा तु यथालाभं विनिःक्षिपेत्। पूर्व्वाम्लभाण्डमध्ये तु धान्याम्लकमिदं स्मृतम्। स्वेदनादिषु सर्व्वत्र रसराजस्य योजयेत्॥" भा.२भ.। षड्दृगणा-धि.। काञ्जिके। কাঁজি। रा.नि.व.१५। तत्साधनप्रणाली यथा—"धान्याम्लं शालिचूर्णञ्च कोद्रवादिकृतं भवेत्। धान्याम्ल धान्ययोनित्वात्प्राणनं ज्वरदाघनं। अरुची वातरोगेषु सर्व्वेष्वास्थापनेषु च॥" भा.पू.२भ.।

**धान्यारिः।** पुं। वनमूषके। रा.नि.व.१९।

**धान्यासवः।** पुं। धान्यकृतासवे। गुडधात्रीधातकीसुरासौवीरकसैरेयमैरेयधान्याम्लेषु वर्तमु। च.सू.२५अ.।

**धान्योत्तमम्।** क्ली, पुं। शालिधान्ये। रा.नि.व.१६।

**धान्वः।** त्रि। जाङ्गले। वा.चि.३अ.।

**धान्वनम्।** क्ली। धन्वनवृक्षफले।

**धान्वन्तरघृतम्।** क्ली। प्रमेहाधिकारे घृतम्। गव्यघृतं १६ श.। क्वाथार्थ—दन्तीमूलं चित्रकमूलम् एषां प्र. ८ प. हरीतकी २० प. देवदारुकदम्ब-कैलिकदम्बत्वक् वरुणत्वक्-पारग्वधत्वक्-आम्रत्वक्-पुनर्नवा-करञ्जत्वक् प्र. ६ प. दशमूलं मिलित्वा ६४ प. वारि चतुर्गुणं शे. चतुर्थांशः। कल्कः—पञ्चलवणं पञ्चकोलं प्र. २ तो.। इति बृहद्धान्वन्तरम्। चा.को.। ঘৃত ১৬ শ.। ক্বাথার্থ—দন্তীমূল, চিতামূল প্রত্যেক ৮ প. হরীতকী ২০ প. দেবদারু ৬ প. কদম্ব, কেলিকদম্ব, বরুণ, শোঁদাল, আম্র, পুনর্নবা, করঞ্জ প্রত্যেকের ছাল ৬ প. দশমূল মিলিত ৬৪ প. জল চতুর্গুণ, শে. চতুর্থাংশ। কল্কার্থ—পঞ্চলবণ, পিপুল, পিপুলমূল, চই, চিতামূল, শুঁট প্রত্যেক ২ তো.। द्वितीयम्—गव्यघृतं ४ श.। क्वाथार्थे—दशमूलं करञ्जद्वयस्य फलं (तदभावे त्वक्) देवदारु हरीतकी शक्रपुनर्नवा वरुणमूलं दन्तीमूलं चित्रकमूलं पुनर्नवा कदम्बत्वक् कैलिकदम्बत्वक् स्नुहीत्वक् बिल्वत्वक् भल्लातक शटी पुष्करमूलं कणामूलम् एषां प्र. १० प. यवकोलकुलत्थानां प्र. १६ प. वारि २१० श. शे. ५४ श, ४ प.। कल्कार्थ—हिज्जलमूलं त्रिफला

भार्गी रोहितकमूलं गजपिप्पली शुण्ठी वचा विडङ्गं गन्धारीपत्री एषां प्र. ५॥० तो.। च.द.। घृत ४ श.। क्वाथार्थ—दशमूल, करञ्ज, रक्तकरञ्ज, देवदारु, हरीतकी, श्वेतपुनर्नवा, वरुण, दन्ती, चिता, पुनर्नवा, कदम्ब, কেলিকদম্ব, সিজু, বিল্ব, ভেলা, শঠী, পুষ্করমূল, পিপুলমূল, প্রত্যেক ১০ প. যব, কুল, কুলত্থ প্রত্যেক ১৬ প. জল ২১০ শ. শে. ৫৪ শ. ৪ প.। কল্কার্থ—হিজলমূল, ত্রিফলা, বামুনহাটী, রাস্নামূল, গজপিপুল, শুঁট, বচ বিড়ঙ্গ, কমলাগুঁড়ি প্রত্যেক ৫॥০ তো.। रस.र.। [ मे.। नट्टे।

**धाम (न्)**। क्ली। शरीरे। अम.। जन्मनि।

**धामकम्**। क्ली। कत्तृणे। गन्धतृण वा রাম কর্পূর। रा.नि.व.८। पुं। मापपरिमाणे। "हेमस्य धामकश्चैव।" प.प्र.।

**धामनी**। स्त्री। शोणितवाहिशिरायां। श.च.।

**धामार्गवः**। पुं। पीतघोषायाम्। পীত-ঘোষা। ধুন্দুল। हि नेनुआ। प.मु.। सु.सू.३९अ.। च.सू.।२अ.। अपामार्गे। रक्तापामार्गे। भा पू.१ भ.। महाकोशातक्याम्। ঝিঙ্গে। हि. तरई। तें उत्तरेणि, चेतिबीर। रा नि.व.७। राजकोशातक्याम्। वा.टी.हेमा.।

**धारः**। पुं। पाषाणविशेषे। सन्तती। दवद्रव्यमात्रे। क्ली। हठ्ठादके। वृष्टिर जल। तच्च द्विविधं गाङ्गं सामुद्रञ्चेति। "धाराभिं पतितं तोयं गृहीतं स्फीतवाससा। शिलायां वसुधायां वा धौतायां पतितञ्च यत्। सौवर्णे राजते ताम्रे स्फाटिके काचनिर्म्मिते। भाजने मृण्मये वापि स्थापितं धार सुच्यते॥" गुणाः जलशब्दे द्रष्टव्याः। भा.।

**धारकः (णः)**। त्रि। संग्राहिद्रव्यमात्रे। सु सू.४५अ.।

**धारणी (या)**। स्त्री। स्वनामख्यातमहाकन्दशाकविशेषे। धारणीकन्द, मैलगड़े इति च अनूपदेशे ख्याता। ধরণীকন্দ। तत्पर्य्यायः,—धरणी, धारणीया, धीरपत्री, सुकन्दकः, कन्दालुः, वनकन्दः, कन्दाढ्यः, दण्डकन्दकः, धरणीकन्दः। गुणाः—मधुरः कफपित्तघ्नः मुखदोषघ्नः कण्डूकुष्ठघ्नश्च। रा.नि.व.७। नाड्याम्। शरीरान्तर्नाडीविशेषे। मे.। पृथिव्याम्।

**धारा**। स्त्री। द्रवद्रव्यस्य सन्ततस्रवणे। गुडूच्यां। वै निघ.२भ.जीर्णज्व.चि.सेवन्तीपाके। हरिद्रायां। त्रिका.। आमलक्याम्। क्षीरकाकोल्याम्। वै. निघ.। शस्त्राणां शाणतीक्ष्णतायाम्। धार। हिं तेज। सा च शस्त्रधारा मासूर्य्यर्द्धमासूरी कैशिक्यर्द्धकैशिकी चेति चतुर्धा शस्त्रकर्म्मविशेषेषु भिन्नप्रकृतिका। तत्र भेदनानामस्त्राणां मासूरी (मसूरधारातन्वी) मण्डलाग्रादिलेखनानाम् अर्द्धमासूरी (मसूरदलधारार्द्धतन्वी), सूचीकुशपत्रादिव्यधनानां विस्रावणानाञ्च कैशिकी (केशप्रमाणतन्वी, वृद्धिपत्रादिच्छेदनानामर्द्धकैशिकी (अर्द्धकेशप्रमाणतन्वी) चेति। सु.सू.८अ.।

**धाराकदम्बः**। पुं। (Adina cordifolia. Syn. Nauclea cordifolia.) स्वनामख्यातवृक्षविशेषे। কেলিকদম্। हिं हलदु। मं धाराकलंब। कं धारेयकड़ब। तें मीगलुकड़िमि। तत्पर्य्यायः,—भ्रमरप्रियः, प्रावृष्यः, प्रावृषेण्यः, कलम्बकः, भृङ्गवल्लभः, मेघाभः, प्रियकः, नीपः, पुलकी। गुणाः—कटुः वर्ण्यः हिमः कषायः तिक्तः पित्तघ्नः वीर्य्यवृद्धिकरः विषशोथहरश्च। रा.नि.व.९।

**धाराङ्कुरः**। पुं। जलवृष्टौ। शीकरे। घनोपले। मे.।

**धाराटः**। पुं। चातकविहङ्गे। घोटके। श र.। मेघे। मत्तहस्तिनि।

**धाराधरः**। पुं। मेघे।

**धाराफलः**। पुं। मदनवृक्षे। ময়না গাছ। रा.नि.व.८। (ला) स्त्री। कोषातक्याम्। ঝিঙ্গে। रा.नि.व.७।

**धारायन्त्रम्**। क्ली। वारिसेचनयन्त्रे। ফোয়ারা। सुगन्धवारिरक्षणपात्रे। গোলাব-পাশ। अचि.।

**धाराविनिः**। पुं। वायौ।

**धारासत्त्वम्**। क्ली। गुडूचीस्वरसे। গুলঞ্চের রস। वै.निघ.२भ.चय.चि.सेवन्तीपाके।

**धारास्नुही**। स्त्री। त्रिधारस्नुहीभेदे। তেকাঁটা সিজ্। रा नि.व.८।

**धारि**। क्ली। आयुषि। (धारयति शरीरं पुतिर्या गन्तुं न ददातीति)। च.सू.।भ.।

**धारिणी** । स्त्री । शाल्मलीवृक्षे । श.च. ।

**धारी (इन्)** । पुं । पीलुवृक्षे । आक्रोट् । जटा. ।

**धारः** । त्रि । ऋणपापिनि । जटा. ।

**धारोष्णम्** । क्ली । दोहनेनोष्णधारया पतिते दुग्धे । धारोष्ण दुध । गुणाः—"धारोष्णम् श्रमत्रष्णघ्नं श्रमहरं निद्राकरं कान्तिदं वृष्यं वृंहणमग्निवर्द्धनमतिस्वादु त्रिदोषापहम् ।" रा.नि.व.१५ । त्रि । धारया उष्णं, यस्य सुतमेव पातम् । "धारोष्णमम्रतोपमम् ।" भा.टी.हेमा. ।

**धार्त्तराष्ट्रः** । पुं । ईषच्छुक्लराजहंसे । कृष्णचञ्चुचरणहंसे । गोँड़ि हाँस । अम. । सर्पभेदे । मे. ।

**धार्त्तराष्ट्रपदी** । स्त्री । हंसपादीलतायाम् । रा.नि.व.५ । रक्तलज्जालुकायाम् । वै.निघ ।

**धाव(वि)निः (नी)** । स्त्री । पृश्निपर्णीम् चाकुलिया । प.मु. । भा.चि.१प. । "धाविनी श्रीफलैः कृताम् ।" कण्टकार्य्याम् । धातकीवृक्षे । रा.नि.प.४।१६ । कपिकच्छाम् । आलाकुशी । च. द.हि.यो.यच.चि । गणवृक्षे । वै.निघ. ।

**धावनिका** । स्त्री । कण्टकार्य्याम् । प.मु. । वै. निघ.२भ.मुत्रनेत्रसन्निपातज्व.चि. । पृश्निपर्णीम् ।

**धितिका** । स्त्री । गोमयाग्निभेदे । घुँटेर आगुन ।

**धीः** । स्त्री । बुद्धौ । अम. । उपदिष्टग्रहणशक्तौ । भा. ।

**धीतिः** । स्त्री । पिपासायाम् । हे.च. ।

**धीन्द्रियम्** । क्ली । ज्ञानेन्द्रिये । तत्र मनः नेत्रे श्रोतं त्वक् रसना घ्राणञ्चेति षट् । अम. ।

**धीमोदिनी** । स्त्री । मद्य । रा.नि.व.१४ ।

**धीरः** । पुं । ऋषभके । रा.नि.व.५ । क्ली । कुङ्कुमे । त्रिका. । पुष्करमूले । वै.निघ. ।

**धीरस्कन्धः** । पुं । वनशूकरे । वै.निघ. । महिषे । हे.च. ।

**धीरा** । स्त्री । मेदायाम् । प.मु. । महाज्योतिष्मतीलतायाम् । बड़ माल्कांगनी । काकोल्यां । रा.नि.व.३ । क्षीरकाकोल्याम् । वै.निघ. । शिंशपावृक्षे । शिशु गाछ । प.मु. । कृष्णशिंशपायां, कालशिशु वा काल अगुरु । रा.नि,व.९ । शुक्लवचायाम् । कण्टकारीवल्याम् । वै.निघ. । मद्यविशेषे । रा.नि.व.१४ ।

**धीरावी** । स्त्री । पीतशिंशपायाम् । वै.निघ. ।

**धीवरी** । स्त्री । शतमूल्याम् । रा.नि.व.४ ।

**धीहरा** । स्त्री । कुन्दुरी । वै.निघ. ।

**धुः** । पुं । कम्पने ।

**धुकः (का)** । पुं, स्त्री । भूमिबदरवृक्षे । वै. निघ. ।

**धुकन्धुकाम्** । क्ली । बदरीफले । मद.व.६ ।

**धुकी** । स्त्री । भूबदरे, क्षुद्रकोल्याम् । श्यामदोणी । मद.व.६ ।

**धुत्तूरः** । पुं । धुस्तूरवृक्षे ।

**धुन्धुमारः** । पुं । इन्द्रगोपनामकीटविशेषे । गृहधूमे । धूम । मे. ।

**धुरणीफलः** । पुं । सुमवृक्षे । प.मु. ।

**धुरन्धरः** । पुं । धववृक्षे । प.मु. । र.मा. ।

**धुर्द्धरः, धुर्य्यः** । पुं । ऋषभके । रा.नि.व.५ ।

**धुस्तु(स्तू)रः** । पुं । (Datura fastuosa.) कृष्णधुस्तूरे । (Datura elba.) श्वेतधुस्तूरे । (Datura metel.) उपविषपर्य्यायस्थनामख्यातक्षुपे । धुतुरागाछ । र.मा. । हिं धातुरा । मं धत्तूर । फं मदकुषिणे । तें उमेत्तचेट्टु. नल्ल उन्मेत्त । ता. कारुउमत्ते । तत्पर्य्यायः,—उन्मत्तः, कितवः, धूर्त्तः, कनकाह्वयः, मातुलः, मदनः, पुरीमोहः, मूर्च्छाकृत्, धत्तूरः, घण्टिका, शठः, मातुलकः, श्यामः, शिवशेखरः, खर्ज्जूघ्नः, काहलापुष्पः, खलः, कण्टफलः, मोहनः, कलभः मत्तः, शवः, देविका, तुरी, महामोही, शिवप्रियः, धुत्तुरः, धुस्तूरः, स्वरदूषणः । गुणाः—कटुरसः कान्तिकारी व्रणघ्नः त्वग्दोषखर्ज्जूकण्डुज्वरघ्नः भ्रमजनकश्च । रा.नि.व.१० । मूर्च्छाजनकः वह्निघ्नः पित्तघ्नश्च । राज. । "धुस्तूरादेश्च यद्बीजमन्यच्चोपविषञ्च यत् । क्षीरेण पाचयेद्दोलायन्त्रेण शुद्धिमाप्नुयात् ।" इति शोधनम् । शा.कौ. । घण्टाकर्णक्षुपे । घेँटु गाछ । मद्रतेले । शा,कौ, ।

**धुस्तूरतैलम्** । क्ली । कर्णरोगाधिकारे पक्वतैलम् । "निशागन्धपत्रे । पक्वं कटुतैलं पलाष्टकं । धुस्तूरपत्रजरसे कर्णनाडीजिदुत्तमम् ।" कटुतैलं

८ प. धुस्तूरपत्ररस: १६ प.। क्वाथार्थं—हरिद्रा-गन्धकयो: प्रत्येकं १ प.। सा.कौ.। इदमेव रस-रत्नाकरे गन्धकतैलम्।

**धूकः**। पुं। वायौ। मत्कुणवृक्षे। विडाले। वै. निघ.।

**धूनकः (नः)**। पुं। शालनिर्यासे। धूना। त्रिका.। क्ली। कम्पने।

**धूनराजः**। पुं। वृक्षविशेषे। नमिमस्तुकीर्ति-पश्चिमदेशे ख्यातः। तत्पर्यायः,—पीतरसः, भङ्गुरा, गन्धिनी। गुणाः—मूत्रघ्नः ग्राही कफघ्नः दन्तरोगघ्नो वन्यः मेहासृग्दरघ्नश्च। अति.।

**धूनिः**। स्त्री। कम्पने। व्याक.।

**धूपः**। पुं। उगखेरे। ভাপরা। सुगन्धीकरणे। गन्धद्रव्योत्थधूमे तद्द्रव्ये च। हे.च.। माहेश्वरादौ। धूपार्थं द्रव्यगणो यथा—"डिशागुर्देवदारुश्च गन्ध-पाषाणकम्बिधा। गुग्गुलुः पञ्चधा सर्ज्जनिर्यासः सरलस्य च। पद्मकाष्ठं मोचरसो निर्यासः सल्लकस्य च। रालं नेपालकञ्चेति गणोऽयं धूपसंज्ञकः॥" चक्र. चि.।

**धूपकम्**। क्ली। नूलकाष्ठे। रा.नि.व.९।

**धूपगन्धिनम्**। क्ली। रोहिषतृणे।

**धूपद्रुमः**। पुं। रक्तखदिरे। रा.नि.व.८।

**धूपनम्**। क्ली। धूपाधिवासने। धूपेन धर्मा-कर्षणे। ভাপরা। Fumigation. व्रणादीनां क्रियाविशेषे। ওটকো শেঁকা। स च व्रणशोधना-नन्तरं विधेयः। तद्द्रव्यं यथा—"श्रीवेष्टके सर्ज्जरसे सरले देवदारुणि। सारेष्वपि च कुर्व्वीत मतिमान् व्रणधूपनम्॥" सु.।

**धूपनः**। पुं। धूनके। धूना। श.मा.।

**धूपवृक्षः (कः)**। पुं। रक्तखदिरवृक्षे। रा.नि.व.८। देवदारुवृक्षे। सरलवृक्षे। त्रिका.। श.र.।

**धूपसञ्चारी**। स्त्री। कस्तुर्य्याम्।

**धूपसरला**। स्त्री। धूपाङ्गसरलवृक्षविशेषे। वै. निघ.। [१२।

**धूपाग(गु)रु**। क्ली। दाहागुरुणि। रा.नि.व.

**धूपाङ्गः**। पुं। श्रीवेष्टनामकसुगन्धकाष्ठे। টার্পেণ্টাইন্ গাছ। रा.नि.व.१२।

**धूपार्हम्**। क्ली। कृष्णागुरुणि। रा.नि.व.१२।

**धूप्यः**। पुं। नखीनामगन्धद्रव्ये। रा.नि.व.१२।

**धूमः**। पुं। शिलारसे। गृहधूमे। धूम। मेचके। ধোঁওয়া। तत्पर्य्यायः,—अभ्रः, मरुद्वाहः, खत-मालः, शिखाध्वजः, शिखिध्वजः, अग्निवाहः, तरी, वाचमालः अभ्र.सूः, वायुवाहः, मेघयोनिः, मेचकः। गुणाः—"सद्यः श्लेष्मकरो धूमो नेत्रयो-रहितो भृशम्। शिरोगौरवकृच्चापि वातपित्तस्य कोपयेत्॥" भा.। वातपित्तवर्द्धकः। राज.१प.। अन्यः पानार्थं पञ्चविधः—प्रायोगिकः स्नेहनः रेचनः कासघ्नः वामनीयश्चेति। पञ्चविधा एव धूमवर्त्तयः। तत्रैलादिना कुष्ठतगरवर्ज्जेन सूक्ष्म-पिष्टेन द्वादशाङ्गुलं शरकाण्डं चौमेणाष्टाङ्गुलं परि-वेष्ट्यालेपयेत्। एषा प्रायोगिकधूमवर्त्तिः। स्नेह-फलसार-मधूच्छिष्ट-सर्ज्जरस-गुग्गुलुप्रभृतिभिः स्नेह-मिश्रैः स्नेहने। शिरोविरेचनद्रव्यैर्वैरेचने। कासघ्ने कासहरैर्बृहतीकण्टकारिकात्रिकटुकासमर्दहिङ्गु-ङ्गुदीत्वङ्मनःशिलाच्छिन्नरुहाकर्कटशृङ्गीप्रभृतिभिः। वामनीये वामनीयैः स्नायुचर्म्मखुरशृङ्गकर्कटकास्थि-शुष्कमत्स्यवल्लूरकृमिप्रभृतिभिर्द्रव्यैश्च वर्त्तिः कार्य्या। तत्र प्रायोगिकनेत्रं कनिष्ठिकापरिणाहमग्रे कलाय-मात्रस्रोतो मूलेऽङ्गुष्ठपरिणाहं धूमवर्त्तिप्रवेश-स्रोतोऽङ्गुलान्यष्टचत्वारिंशत्। द्वात्रिंशत् स्नेहने। चतुर्व्विंशतिर्वैरेचने। षोड़शाङ्गुलं कासघ्ने वामनीये च। एते अपि कोलास्थिमात्रच्छिद्रे भवतः। व्रण-नेत्रमष्टाङ्गुलं व्रणधूपनार्थं कलायपरिमण्डलं कुलत्थ-वाहिस्रोत इति। सु.चि.४०अ.। See धूम-पानम्। [भा.।

**धूमगन्धिकम्**। क्ली। रोहिषतृणे। ग्रामकर्पूरे।

**धूमजाङ्गजम्**। क्ली। यवक्षारे रा.नि.व.६।

**धूमदर्शी**। पुं। नेत्ररोगविशेषे। "शोकज्वरा-यासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः। धूमांस्तथा पश्यति सर्व्वभावान् स धूमदर्शीति नरः प्रदिष्टः॥" मा.नि.।

**धूमनाडी**। स्त्री। प्रायोगिकादिधूमप्रयोगार्थं नलाकारयन्त्रे। धूमपानेर नल। लक्षणं—धूमनाडी भवेत्तत्र निखण्डा च त्रिपर्व्विका। कनि-ष्ठिकापरीणाहा राजमाषागमान्तरा॥' भा.।

**धूमपानम्**। क्ली। धूमसेवायाम्। চুরুট খাওয়া বা ধূমপান। तच्च षड्विधं शमनबृंहण-रेचनकासहरवामनव्रणधूपनानीति। एषां विशेषाः स्वस्वपर्य्याये मृग्याः। तद्विधिः—अत्र सर्व्वासामेव

धूमनाड़ीनां छिद्राणि कलायमुद्गलानि भाव्यानि। द्वादशाङ्गुलामीषिकां यथास्वधूमद्रव्यकर्षमितकल्के-नालिप्याटाङ्गुलवर्त्यन्तं छायाशुष्कां कारयेत्। अथ तां स्नेहाक्तामङ्गारदीपितां कृत्वा नेत्ररन्ध्रे धृत्वा च वदनेन धूमं पिबन् तेनैव समुत्सृजेत्। ततो नासिकाभ्यां पीत्वा वदनेन वमेत्। तथा शरावसम्पुटे कल्कं निधायाङ्गारदीपितं कृत्वा छिद्रे नेत्र निवेश्य मणञ्च धूपयेदिति। भा.। अथ सुखोपविष्टः सुमना ऋज्वधोदृष्टिरतन्द्रितः स्नेहाक्तां प्रदीप्तायां वर्त्तिं नेत्रस्रोतसि प्रणिधाय धूमं पिबेत्। "मुखेन तं पिबेत् पूर्वं नासिकाभ्यां ततः पिबेत्। मुखपीतं मुखेनैव वमेत् पीतञ्च नासया। मुखेन धूममादाय नासिकाभ्यां न निर्हरेत्। तेन हि प्रतिलोमेन दृष्टिमत्र विहन्यते।" विशेषतस्तु प्रायोगिकं घ्राणेनाददीत स्नेहनं मुखनासाभ्यां। नासिकया वैरेचनं मुखेनैवेतरे। तत्र प्रायोगिकीं वर्त्तिं व्यपगत शरकाण्डां निवातातपशुष्काम् अङ्गारेष्ववदीप्य नेत्रमूलस्रोतसि प्रयुज्य धूममाहरेति ब्रूयात्। एवं स्नेहनं वैरेचनिकञ्च कुर्य्यादिति। इतरयोर्व्यपगत धूमोऽङ्गारस्थिरे समाहिते शरावे प्रक्षिप्य वर्त्तिं मुखच्छिद्रेणान्येन शरावेण पिधाय तस्मिन् छिद्रे नेत्रमूलं संयोज्य धूममासेवेत। प्रशान्ते धूमे वर्त्तिमवशिष्टां प्रक्षिप्य पुनरपि धूमं पाययेदादोषविशुद्धेः। एष धूमपानोपायविधिः। गुणाः—दन्तप्रक्षालननस्यस्नानभोजनशस्त्रकर्म्मान्तेषु प्रायोगिक इति। तत्र स्नेहनो वातं शमयति, स्नेहादुपलेपाच्च वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षति, रौक्ष्यात्तैक्ष्ण्यादौष्ण्याद्वैशद्याच्च प्रायोगिकः श्लेष्माणमुत्क्लेशयत्युत्क्लिष्टं चापकर्षति साधारणत्वात् पूर्व्वाभ्यामिति। भवति चात्र—"नरो धूमोपयोगाच्च प्रसन्नेन्द्रियवाङ्मनाः। दृढ़केशद्विजश्मश्रुः सुगन्धिविशदाननः॥" कासश्वासारोचकास्योपलेपस्वरभेदमुखास्रावक्षवथुतन्द्रानिद्राहनुमन्याग्रहस्तम्भपीनसशिरोरोगकर्णाक्षिशूलवातकफनिमित्ताश्चास्य मुखरोगा न भवन्ति। प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत मुखनासिकाभ्याञ्च पर्य्यायांस्त्रींश्चतुरो वेति स्नैहिकं यावदश्रुप्रवृत्तिः। वैरेचनिकमादोषदर्शनात्। तिलतण्डुलयवागूपीतेन पातव्यो वामनीयः। ग्रासान्तरेषु कासघ्न इति। सु.चि ४०अ.। [ विका.।

**धूममहिषी।** स्त्री। नीहारं। कुञ्झटी।

**धूममृत्तिका।** स्त्री। स्वर्णशोधनयोग्यकृष्णमृत्तिकायाम्। श.चि.।

**धूमयोनिः।** पुं। मुस्तके। श्म.। मेघे।

**धूमरः।** पुं। दृष्टिमण्डलगतरोगविशेषे। (धोँया देखा।) लक्षणं—"शोकज्वरायासशिरोऽभितापैरभ्याहता यस्य सिता तु दृष्टिः। धूमाविलां धूमदर्शीं दृश्य कुर्य्युः स धूमरः॥" वा.उ.१२अ.। [ चि.।

**धूमरजः।** क्ली। गृहधूमे। झुल। मेघ.कर्परो.

**धूमलः।** पुं। कृष्णलोहितवर्णे।

**धूमवृक्षकः।** पुं। सरलवृक्षे।

**धूमसः।** पुं। शाकतरौ। वै.निघ.।

**धूमसारः।** पुं। गृहधूमे। झुल। र.सा.सं.।

**धूमसी।** स्त्री। मुद्गद्विदलादिकृतगोटिकायाम्। पापड़, डालवडि. चूकणि। प्रणाली यथा— "माषाणां दालयन्त्रेण स्थापितास्त्यक्तकञ्चुकाः। आतपे शोषिता पाते पिष्टाक्ता धूमसी स्मृता। धूमसी रुचिरा सैव प्रोक्ता भुर्भुरिका बुधैः। भुर्भुरी कफपित्तघ्नी किञ्चद्वातकरी स्मृता।" भा.।

**धूमा(ङ्गः)।** स्त्री, पु। कृष्णशिंशपायाम्। वै. निघ.।

**धूमाभः।** पुं। धूम्रवर्णे।

**धूमिका।** स्त्री। कुज्झटिकायां। विका.। प्रसहजातीयपक्षिणि। च.।

**धूमोत्थम्।** स्त्री। वज्रक्षारे। रा.नि.व.६।

**धूमोद्गारः।** पुं। पित्तजरोगभेदे। भा.।

**धूम्या(म्रा)टः।** पुं। कुलिङ्गपक्षिणि। फिङ्गे। श्म.।

**धूम्रः (कः)।** पुं। सिह्लके। शिलारस। रा.नि.व.१२। उष्ट्रे। जटा.। तुम्बुरुवृक्षे। कृष्णलोहितवर्णे।

**धूम्रपत्रा।** स्त्री। स्वनामख्यातक्षुपे। तामाक। मं गाधानो। क कत्तगिरि। उत. धूयापतर। तत्पर्य्यायः—धूमाह्वा, गृध्रपत्रा, गृध्राणी, कृमिघ्नी, श्रीमलापहा, सुलभा, स्वयम्भुवा। गुणाः—तिक्ता शोफघ्नी कृमिघ्नी उष्णा कासघ्नी रुच्या दीपनी च। रा.नि.व.५।

**धूम्रपत्रिका।** स्त्री। धूम्रपत्रायाम्। रा.नि. व.२२। गन्धतृणे। गन्धतृणभेदे। वै.निघ.।

**धूम्रमूलिका (ली)।** स्त्री। गण्डीतृणे। रा. नि.व.८

**धूम्रलोचनः** । पुं । कपोते । वन्यकपोते । रा.नि.व.१९ ।

**धूम्रवर्णः (कः)** । पुं । सिह्लके । शिलारस । रा.नि.व.१२ । कोकड़नामविलक्षणमृगे । रा.नि.व.१९ । कृष्णलोहितवर्णे ।

**धूम्रवर्णा** । स्त्री । वराटिकाभेदे । रा.नि.व.१३ ।

**धूम्रशूलः** । पुं । उष्ट्रे । वै.निघ. ।

**धूम्रा** । स्त्री । शशाण्डुल्याम् । काँकुड़विशेष । रा.नि.व.७ । [ व.५ ।

**धूम्रा(म्या)ह्वा** । स्त्री । धूमपत्रायाम् । रा.नि.

**धूम्राचिः** । स्त्री । धूममुक्तायाम् । वै.निघ. ।

**धूम्रिका** । स्त्री । कृष्णशिंशपावृक्षे । कालशिशु वा अगुरु । रा.नि.व.९ ।

**धूरीयः** । पुं । वृषभे ।

**धूर्त्तः** । पुं । श्वेतकृष्णधुस्तूरवृक्षे । प.मु. । अर्जुनवृक्षे । कुष्माण्डे । वै.निघ. । चोरक-नामगन्धद्रव्ये । गेंटेला । रा.नि.व.१२ । क्लो । लौहकिट्टे । हे.च. । विड़लवणे । रा.नि.व.६ ।

**धूर्त्तकः** । पु । कृष्णधुस्तूरे । कैलिकदम्बे । प.मु. । शृगाल । श.र. ।

**धूर्त्तकृत्** । पुं । धुस्तूरवृक्षे । श.मा. ।

**धूर्त्तजन्तुः** । पुं । मनुष्ये । श.च. ।

**धूर्त्तमानुषा** । स्त्री । रास्नायाम् । श.च. ।

**धूर्त्तरः** । पुं । पारदे । रा.नि.व.१३ ।

**धूर्त्ता** । स्त्री । शुक्लकण्टकार्य्याम् । वै.निघ. ।

**धूर्द्धरः, धूर्य्यः** । पुं । ऋषभके । वै.निघ. । धववृक्ष ।

**धूर्व्वहः** । पुं । धववृक्षे ।

**धूलकम्** । क्लो । विषे । श.च. ।

**धूलिः** । पुं । परागे । गर्द्दभे । पार्थिवरजसि । अम । तत्पर्य्यायः—रेणुः, पांशुः, रजः, धूली, पांसु, चितिकणः क्षोदः, चूर्णं, तूलं, महाद्रवः, वातकेतुः, कणा, क्षितिकणा, नभःकेतुः, मेदिनीद्रवः, वायुकेतु । अम. । [ वृक्षे ।

**धूलिकदम्बः** । पुं । नीपे । तिनिशवृक्षे । वरुण-

**धूलिका** । स्त्री । धूली । पुष्पपरागे । वै.निघ. । कुज्झटिकायाम् । श.र. ।

**धूलिगुच्छः(कः)** । पुं । पिष्टातके । आबीर । विका. ।

**धूलिजङ्घः** । पुं । काके । काक । वै.निघ. ।

**धूलिध्वजः** । पुं । वायौ । बाताम ।

**धूलिपुष्पिका** । स्त्री । केतकीवृक्षे । केया गाछ । रा.नि.व.१० । श्वेतकेतके । वै.निघ. ।

**धूलीकदम्बः (कः)** । पुं । कदम्बवृक्षविशेषे । धाराकदम्ब । सं धुलिकदंबु । कं धूलिगड़ु । गुणैः धाराकदम्बतुल्यः । रा.नि.व.१० । तिनिशवृक्षे । वरुणवृक्षे । मे. ।

**धूसरः** । पुं । गर्द्दभे । उष्ट्रे । वनचटके । कपोते । रा.नि.व.१९ । मुद्गे । वै.निघ. । वि । पाण्डुवर्णे । मे. ।

**धूसरच्छदा** । स्त्री । श्वेतवुह्नायाम् । प.मु. । शुक्लपष्परास्नायाम् । वै.निघ. ।

**धूसरपत्रिका (त्री)** । स्त्री । वृश्चिकाल्याम् । बिछाति । मित्रकाशाके । प.मु. । हस्तिशुण्डीनामक्षुपे । हातिशुड़े । रा.नि.व.५ ।

**धूसरमुद्गः** । पुं । धूसरवर्णमुद्गविशेषे । सं धुसरमुङ्ग । कं पीयरमुङ्ग । गुणाः—रसवीर्य्यविपाकेषु हरिन्मुद्गसमः कषायः मधुरः रुच्यः पित्तकृत् वातविष्टम्भकृच्च । रा.नि.व.१६ ।

**धूसरा** । स्त्री । पाण्डुरफलीनामक्षुपे । रा.नि.व.५ ।

**धूसराह्वयः** । पुं । गर्दभे । वै.निघ. ।

**धूसरी** । स्त्री । गर्दभ्याम् ।

**धूस्तूरः** । पुं । धुस्तूरक्षुपे । प.मु. ।

**धृतराष्ट्रः** । पुं । हंसभेदे । हंसजातीयपक्षिणि । हे.च. । सर्पभेदे ।

**धृतराष्ट्री** । स्त्री । हंसविशेषपत्न्याम् । मे. ।

**धृतिः** । स्त्री । धैर्य्ये । वेगविधाते । भा.म.३भ सदा.चि. ।

**धृष्णुः** । स्त्री । कञ्चिकायां । कञ्चि । श.च. ।

**धेनिका** । स्त्री । धान्याके । धने । भा. ।

**धेनुः** । स्त्री । दुग्धवत्यां गवि । अम. ।

**धेनुका** । स्त्री । धान्याके । धने । मद.व.२ । हस्तिन्यां । गवि । मे. ।

**धेनुकारिः** । पुं । नागकेशरवृक्षे । वै.निघ. ।

धेनुजिह्वा। स्त्री। गोजिह्वानामक्षुपे। गोजिया। रा.नि.व.४।
धेनु(का)दुग्धम्। क्ली। चिर्भटफले। भा.। गोदुग्ध।
धेनुदुग्धकरः। पुं। गर्जरकन्दे। रा.नि.व.८। गाजर। गाजर।
धेनुमक्षिका। स्त्री। गोमक्षिकायाम्। डाँश माछि। वै.निघ।
धेनुयन्त्रम्। क्ली। तैलपातनयन्त्रे। घानि।
धोड़ः। पुं। तुन्दुभे। ढोड़ासाप। श.र.।
धौतम्। क्ली। रौप्यधातौ। रा.नि.व.१३। धौतकार्पासे। धौत धौतवस्त्रम्। वै.निघ.।
धौतकौशेयम् (पत्रम्)। क्ली। धौतकौशेये। धोयाचेलि। क्षौम। श.र.।
धौतखण्डी। स्त्री। खण्डशर्करायाम्। वै.निघ.।
धौतशि(शौ)लम्। क्ली। स्फटिके। त्रिका.।
धौमतम्। स्त्री। रक्तयोनि। धूम्रधाराणि। वै.निघ.।
धौरः। पुं। धवडृक्षे। धाउया गाछ। भा.।
धौरेयः। पुं। वृषभे।
ध्वाङ्क्षः। पुं। काके। बके। जलकाके। पानकौड़ी। अम.। जलपक्षिनामे। तक्षके। वै.निघ.। रा.नि.व.४।
ध्वा(ध्वा)ङ्क्षजङ्घा। स्त्री। काकजङ्घायाम्।
ध्वा(ध्वा)ङ्क्षजम्बूः। पुं। काकजम्बूवृक्षे। कालजाम्। रा.नि.व.११।
ध्वा(ध्वा)ङ्क्षतण्डुलफला। स्त्री। काकजङ्घायाम्। वै.निघ.।
ध्वा(ध्वा)ङ्क्षतुण्डा (ण्डी)। स्त्री। काकादनीलतायाम्। काकनासालतायां। कुँच गाछ। रा.नि.व.३।
ध्वा(ध्वा)ङ्क्षदन्ती (नखी)। स्त्री। काकादनीलतायाम्। काकनासालतायाम्। रा.नि.व.३।
ध्वा(ध्वा)ङ्क्षनामा (नाम्नी)। स्त्री। काकोदुम्बरिकायाम्। रा.नि.व.११।
ध्वा(ध्वा)ङ्क्षनाशिनी। स्त्री। वृश्चिकभेदे। हबुष। रा.नि.व.४। भा.।
ध्वा(ध्वा)ङ्क्षनासा (सिका)। स्त्री। काकनासालतायाम्। कुँच गाछ। रा.नि.व.३।
ध्वा(ध्वा)ङ्क्षपुष्टः। पुं। कोकिले। शारा।
ध्वा(ध्वा)ङ्क्षमाची। स्त्री। काकमाचीक्षुपे। रा.नि.व.४।
ध्वा(ध्वा)ङ्क्षवल्ली। स्त्री। काकजङ्घायाम्। रा.नि.व.४।
ध्वा(ध्वा)ङ्क्षादनी। स्त्री। काकादनीलतायाम्। रा.नि.व.३।
ध्वा(ध्वा)ङ्क्षारातिः। पुं। पेचके। पेंचा।
ध्वा(ध्वा)ङ्क्षी। स्त्री। काकोल्याम्। काँकला। मे.। काकजङ्घायाम्। वै.निघ.।
ध्वा(ध्वा)ङ्क्षोली। स्त्री। काकोल्याम्। काँकला। प.मु.। रा.नि.व.३। द्राक्षाभेदे। वेदाना किसमिस्।
ध्मापनम्। क्ली। अग्निसन्धुक्षणे।
ध्यामम्। क्ली। दमनकवृक्षे। मे.। कत्तृणे। गन्धकर्पूर। प.मु.। सु.चि.२२अ.। च.द.सन्निपातज्व.चि.अपराजिताधूपे। च.द.वा.व्या.१८क्लीबमसारणीतैले। वै.निघ.२भ.गुग्गुल्वादिधूपे। तुलसी। सु.म.२५अ.।
ध्यामकम्। क्ली। कत्तृणे। गन्धकर्पूर। प.मु.। च.सू.५अ.। सु.सू.३८अ. एलादिः। रोहिषे। वा.प.१४अ.ऐला. (अभावे उशीरं)। भा.म.४भ. विष.चि.। "पिप्पली ध्यामकं मांसी।" भा.म.१ भ.ज्व.चि.।
ध्रुवः। पुं। धवडृक्षे। धाउया गाछ। र.मा.। वटवृक्षे। मद.व.५। त्रिका.। जीवके। शरारीपक्षिणि। नासायां।
ध्रुवा। स्त्री। शालपर्ण्याम्। रा.नि.व.४। मूर्वायाम्। मे.। शरारीपक्षिणि।
ध्वंसः (सः)। पुं। मद्यविकाररोगे। लक्षणं यथा—"तं ध्वंसकः कण्ठास्यशोषः शब्दासहिष्णुता। तन्द्रानिद्राभियोगश्च ज्ञेयं ध्वंसकलक्षणम्॥" च.।
ध्वंसी। स्त्री। मानविशेषे, त्रसरेणुपरपर्याये मागधमाने। "त्रसरेणुस्तु पर्यायनाम्ना ध्वंसी निगद्यते।" प.प्र.१ख.। पुं (न्)। गिरिजपीलौ। श.र.।

**ध्वजः** । पुं, क्ली । शिश्ने । भा.म.ङ. । "ध्वजः पतत्यतो नृणां क्लैव्यं समुपजायते ।" "ध्वजं चिह्ने पताकायां मेहने ।" विश्व. । तालवृक्षे । रा.नि.व.९।

**ध्वजद्रुमः** । पुं । तालवृक्षे । रा.नि.व.९ ।

**ध्वजप्रहरणः** । पुं । वायौ । श.र. ।

**ध्वजभङ्गः** । पुं । लिङ्गपातकृतक्लैव्यरोगविशेषे । ধ্বজভঙ্গ রোগ । निदानलक्षणं यथा—"अति व्यवायशीलो यो न च वाजीक्रियारतः । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकः । अत्यम्ललवणक्षारविरुद्धाजीर्णभोजनात् । अत्यम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात् । दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् । कन्यायोगमनाच्चापि वियोनिगमनादपि । दीर्घरोमां चिरोत्सृष्टां तथैव च रजःस्वलाम् । दुर्गन्धां दुष्टयोनिञ्च तथैव च परिस्रुताम् । ईदृशीं प्रमदां मोहात् यो गच्छेत् कामहर्षितः । चतुष्पदादिगमनाच्छेफसश्चाभिघाततः । अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात् । काष्ठप्रहारनिष्पेषशूकानाञ्च निषेवणात् । चेतसश्च प्रतीघातात् ध्वजभङ्गः प्रवर्त्तते ॥" च. । See क्लैव्यम् ।

**ध्वजवृक्षः** । पुं । 'माड़' इति कोङ्कणदेशख्यातवृक्षे । रा.नि.व.९ ।

**ध्वजी (इन्)** । पुं । मयूरे । रा.नि.व.१९ । सर्पे । मे. । रथे । पार्श्वे । पर्व्वते ।

**ध्वनमोदी (इन्)** । पुं । भ्रमरे ।

**ध्वनिग्रहः** । पुं । कर्णे । त्रिका. । [ वै.निघ. ।

**ध्वनिबोधक(न)म्** । क्ली । सुगन्धरोहिषतृणे ।

**ध्वाङ्क्षः** । पुं । काके । बके । मत्स्यादपक्षिणि । अम. । जलचरपक्षिमात्रे ।

**ध्वान्तम्** । क्ली । अन्धकारे ।

**ध्वान्तवित्तः** । पुं । खद्योते । श.र. ।

**ध्वान्तशात्रवः** । पुं । श्योणाकवृक्षे । श.च. ।

**ध্বান্তোন্মेषः** । पुं । खद्योते । জোনাকি পোকা । त्रिका. । तत्पर्य्यायः—ध्वान्तारिः, ध्वान्ताराति: ।

---

# न

**नः** । पुं । रवे । ए.को. ।

**नःक्षुद्रः** । त्रि । क्षुद्रनासिके । चीना । हे.च. ।

**नकुटम्** । क्ली । नासिकायाम् । श.मा. ।

**नकुलः** । पुं । (The bengal mungoose, Viverra ichneumon.) स्वनामख्यातजन्तौ । নেউল । हिं बेजी । मं नेउरा । बां मंगुस । तत्पर्य्यायः,—पिङ्गलः, सर्पहा, बभ्रुः, कोटिरः, सर्पतृणः, सूचीवदनः, सर्पारिः, लोहितानमः । लक्षणं—यः स्थूलपुच्छो रक्तनेत्रो दभ्रुदेहः स नकुलः । शालिहोत्र. । नकुलमांसगुणाः—पिच्छिलं वातघ्नं श्लेष्मपित्तघ्नञ्च । रा.नि.व.१७ । "गुरूष्णं स्निग्धमधुरम्बलोपचयवर्द्धनम् । हृद्यं परं वातहरम् ...... ॥" च.सू.२७अ. ।

**नकुलाढ्या** । स्त्री । गन्धनाकुल्याम् । गन्धरास्ना । रा.नि.व.७ ।

**नकुलान्ध्यम्** । क्ली । नेत्ररोगभेदे । लक्षणं—"विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् । चित्राणि रूपाणि दिवा च पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः ॥" भा.म.४स. । नकुलान्धो दिवा चित्रं पश्यति न तु निशि । अरुण. ।

**नकुलारिः** । पुं । बिड़ाले । वै.निघ. । सर्पे ।

**नकुली** । स्त्री । शाल्मलीवृक्षे । वै.निघ. । शङ्खिन्याम् । धरणि. । कुङ्कुमे । हे.च. । नकुलपत्न्याम् । मांस्यां । जटामांस्यां । कुक्कुट्याम् । मूर्गि । मे. ।

**नकुलेष्टका (ष्टा)** । स्त्री । रास्नायाम् । अम. । सर्पाक्ष्याम् ।

**नक्तम्** । क्ली । रात्रौ ।

**नक्तकः** । पुं । नेत्रपटले । वै.निघ. । कर्पटे । নেকড়া । অ.টী.ভ. । मयूरे । हस्तिनि ।

**नक्तचारी (इन्)** । पुं । पेचके । बिड़ाले । त्रिका. ।

**नक्तञ्चरः** । पुं । गुग्गुलौ । गुग्गुल । पेचके । जटा. । सोमराज्यां । दुन्दुभे । रा.नि.व.२२ । बिड़ाले ।

**नक्तमालः** । पुं । वृहत्करञ्जवृक्षे । डहरकरञ्ज ।

हिं नीलमदइपङ्गीया। मं कालीयघेछ । कं कारियनेलङ्किगु, करियगणिजेलि । तत्पर्य्यायाः,—नीला, श्यामा, कृष्णाख्या, नीलवर्णाभूः । गुणाः—तिक्ता कटूष्णा रसायनी हृद्रोगपाण्डुश्वयथुश्वासवातघ्नी.। रा.नि.व ५ ।

**नीलपुष्पः** । पुं । नीलभृङ्गराजे । नीलझिण्ट्यां । रा.नि.व ४ । विष्णुक्रान्तावृक्षे । कृष्णनिर्गुण्ड्याम् । वै. निघ. । क्लो । ग्रन्थिपर्णे । भा. ।

**नीलपुष्पकः** । पुं । नीलनिर्गुण्डीवृक्षे । वै.निघ.।

**नीलपुष्पा** । स्त्री । अपराजितायाम् । प मु. । विष्णुक्रान्तायाम्, नीलापराजितायाम् । रा.नि.व. ५ । नीलझिण्टीक्षुपे । नील झाँटी । रा.नि.व.१०। See नीलाम्लानः । ग्रन्थिपर्णाम् । कृष्णनिर्गुण्ड्यां । नील्याम् । वै.निघ. ।

**नीलपुष्पिका (ष्पी)** । स्त्री । नीलपुष्पापराजितायाम् । नील अपराजिता । रा.नि.व.३ । नीलवृक्षायाम् । नील বোণা । प.मु. । नील्याम् । रा.नि.व.४ । अतसीक्षुपे । মশিনার গাছ । रा.नि.व.१६ । [ वै निघ. ।

**नीलपृष्ठः** । पुं । मत्स्यविशेषे । রুই মাছ ।

**नीलपृष्ठा** । स्त्री । नीलीवृक्षे । भा.म.१भ. ।

**नीलपीरः** । पुं । कृष्णेचौ । गुणाः—वातकरः कफपित्तघ्नः कषायः विदाही च । भा. । सु.सू.४५अ. ।

**नीलफला** । स्त्री । जम्बूवृक्षे । জাম গাছ । रा.नि.व.११ । वार्ताकुवृक्षे । वै.निघ. ।

**नीलभण्टः** । पुं । पियालवृक्षे । পিয়াশাল । प.मु. । See भण्टः । [ वै.निघ. ।

**नीलभूमिमलचारः** । पुं । खर्परधातौ ।

**नीलभृङ्गराजः** । पुं । नीलपुष्पभृङ्गराजे । নীল কেশুরিয়া । हिं भंगेरिया । तत्पर्य्याया ,—महाभृङ्गः, महानीलः, सुनीलकः, नीलपुष्पः, श्यामलः । गुणाः—तिक्तोष्णः चक्षुष्यः केशरञ्जनः कफामशोफश्विघ्नः रसायनश्च । रा.नि.व.४ । [ च. ।

**नीलमकुष्ठः** । पुं । नीलवनमुद्गे । नवुाल.११

**नीलमञ्जरी** । स्त्री । नीलनिर्गुण्ड्याम् । वै. निघ. ।

**नीलमणिः** । पुं । स्वनामख्यातमणौ । নীল-বর্ণ মণি । तत्पर्य्यायः,—सौरिनीलाश्मा, नीलोत्पलः, तृणग्राही, महानीलः, सुनीलकः । गुणाः—तिक्तोष्णः कफ-पित्त-वातघ्नः धारणात् शुभदश्च । रा.नि.व.१३ ।

**नीलमण्डलम्** । क्ली । परूषकफले । पुं । तद्वृक्षे । फल्सा । रा.नि.ष.११ ।

**नीलमयूरः** । पुं । मयूरभेदे । गुणाः—"मेधावृद्धिं सौतवाश्च करोत्युत्पाटनं शिखी । स वातलोऽतिबलकृत् पुनः किञ्चिद्रसायनः ॥" अत्रि. २१अ. ।

**नीलमल्लिका** । स्त्री । कपित्थवृक्षे । रा.नि. व.११ । [ वै.निघ. ।

**नीलमक्षिका** । स्त्री । पृथुकृष्णमक्षिकायाम् ।

**नीलमाषः** । पुं । राजमाषे । बर्बटी । प.मु. । कृष्णमाषे । কাল কলায় ।

**नीलमौलिकः** । पुं । खद्योते । श.मा. ।

**नीलमृत्तिका** । स्त्री । कृष्णमृत्तिकायाम् । पुष्पकासीसे । रा.नि.व.१३ ।

**नीलमेहः** । पुं । पित्तजन्यमेहरोगे । अत्र रोगी सफेनं स्वच्छं नीलञ्च मेहति । सु.नि.६अ. ।

**नीलयष्टिका** । स्त्री । कृष्णेक्षौ । কাজলা ইক্ষু । कृष्णकुटजे । वै.निघ. । [ व.१३ ।

**नीलरत्न(क)म्** । क्ली । नीलमणौ । रा.नि.

**नीलरास्ना** । स्त्री । नीलपुष्परास्नायां । र.मा. ।

**नीलरूपकः** । पुं । प्लक्षवृक्षे । वै.निघ. ।

**नीललोहम्** । क्ली । वर्त्तलौहे, कृष्णलौहे । रा.नि.व.१३ ।

**नीललोहितः** । पुं । नीलरक्तमिश्रितवर्णे । বেগুনে রং ।

**नीललोहिता** । स्त्री । भूजम्बूवृक्षे । মেটো জাম । श.च ।

**नीलवकः** । पुं । नीलवर्ण-वके ।

**नीलवटी** । स्त्री । नीलवट्याम् । নীলবড়ি । चि.क.वा.केशरञ्जने ।

**नीलवर्णम्** । क्ली । रसाञ्जने । र.मा. । नीलमूलके । परूपकफले । वै.निघ. । [ नि.व ५ ।

**नीलवर्षाभूः** । स्त्री । नीलपुनर्नवायाम् । रा.

**नीलवल्ला** । स्त्री । वन्दायाम् । পরগাছা ।

**नीलवल्ली** । स्त्री । वन्दाके । বান্দড়া । र मा ।

**नीलवीजः ।** पुं । स्वनामख्यातासनवृक्षे । नीलवीज आसनवृक्ष । मं लोहिताबीया । कं कोविन्नदीने । गुणाः—बीजवृक्षौ कटू शीतौ कषायौ कुष्ठघ्नौ सारकौ कण्डूदद्रुघ्नौ । तयोरपित श्वेतः । रा.नि.व.९ । [ प.मु. ।

**नीलवृन्ना ।** स्त्री । क्षगलान्त्र्याम् । नील रोणा ।

**नीलवृषा ।** स्त्री । नीलवृन्तायाम् ।

**नीलवृन्तकम् ।** क्ली । तूलकाष्ठे । तूले । रा. नि.व.९ ।

**नीलवृषा ।** स्त्री । वार्त्ताकी । रा.नि.व.७ ।

**नीलवृक्षः ।** पुं । कोदणमालवयोः स्वनामप्रसिद्धे वृक्षे । तत्पर्य्यायाः,—नीलः, वातारिः, शोफनाशनः, नरनामा, नखवृक्षः, नखालुः, नरप्रियः । गुणाः— 'नीलवृक्षस्तु कटुकः कषायोष्णो लघुस्तथा । वातामयप्रशमनो नानाश्वयथुनाशनः ॥' रा.नि.व.९ ।

**नीलशिग्रुः ।** पुं । शोभाञ्जनवृक्षे । रा.नि.व.७ ।

**नीलशिम्बिका ।** स्त्री । शिम्बीभेदे । वै.निघ. ।

**नीलशुकः ।** पुं । महाविषव्रयिकजातिभेदे । सु.कल्प,८ष. । [ वै.निघ. ।

**नीलशोधनी ।** स्त्री । नील्याम् । नील ।

**नीलषष्टिकः ।** पुं । षष्टिकशालिविशेषे । नीलवर्ण खेटे धान । गुणैः गौरषष्टिकात्किञ्चिदूनः । रा.नि.व.१६ । [ याम् ।

**नीलसन्ध्या ।** स्त्री । नीलपुष्पापराजितालता-

**नीलसस्यम् ।** क्ली । बाजरा इति ख्याते शस्ये । बाजरा । वै.निघ. ।

**नीलसहाचरः ।** पुं । नीलपुष्पझिण्ट्याम् । हिं नीलपुष्पकटसरैया । भा.न ४भ-मुखरी,पि. । "तुलाघृतं नीलसहाचरन्तु ।" भैष. ।

**नीलसारः ।** पुं । नीलवीजासनवृक्षे । रा.नि. व.९ । तिन्दुकवृक्षे ।

**नीलसिन्दुकः (का) (वारः) ।** पुं, स्त्री । नीलनिर्गुण्ड्याम् । नील निशिन्दा । रा.नि.व.४ ।

**नीलसिन्दुवारः ।** पुं । नीलवर्णसिन्दुवारवृक्ष । नील निशिन्दा । हिं नीलसिन्दु । तत्पर्य्यायाः,—श्वेतासहा, निर्गुण्डी, सिन्दुकः, कपिका, सुतश्रेणी, इन्द्राणी, नालिका, नीलनिर्गुण्डी । गुणाः—कटुः, उष्णः, तिक्तः, कासश्लेष्मशोफहरः, वातासृग्प्रदराध्माननाशी च ।

**नीलस्यन्दा ।** स्त्री । नीलापराजितायाम् । रा.नि.व.७ ।

**नीला ।** स्त्री । नीलीक्षुपे । नकुल.१५अ. । नील-पुनर्नवायाम् । लाक्षायाम् । रा.नि.व.५,६ । स्तृक्षायाम् । कृष्णजीरके । वै.निघ. । तन्नामकाईनतुगतमर्म्मद्वये । तत्स्थान कण्ठनाडी.,भयतः । सु.शा.६ष. । नीलमक्षिकायाम् । श्रम. ।

**नीलाख्यः ।** पुं । नीलमणौ । वै.निघ. ।

**नीलाङ्गः ।** पुं । नीलकोषपक्षिणि । पारावते । वै.निघ. । सारसपक्षिणि । चाषपक्षिणि । रा.नि. व.१९ ।

**नीलाङ्गुः ।** पुं, स्त्री । नीलमक्षिकायाम् । हि. । क्रिमौ । श्रम. ।

**नीलाञ्जनम् ।** क्ली । रसाञ्जने । तुत्थके । रा. नि.व.१२ । सौवीराञ्जने । सफेद सुर्मा । र.मा. । गुणाः—उष्णं रसायनं तिक्तं कटु श्लेष्मसुखनेत्ररोगघ्नदाहघ्नं भेदकञ्च । रा.नि.व.१३ । तच्छोधनं —"नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितं । दिनैकमातपे शुद्धिर्भवेत्कार्य्येषु योजयेत ॥" र.सा. सं. । [ जानकृल । वै.निघ. ।

**नीलाञ्जनच्छदा ।** स्त्री । अम्लवृक्षे ।

**नीलाञ्जना ।** स्त्री । बीजवृक्षे । वै.निघ. ।

**नीलाञ्जनी ।** स्त्री । कालाञ्जन्याम् । नील कापास । रा.नि.व.४ ।

**नीलाण्डकः ।** पुं । रोहितमत्स्ये । वै.निघ. ।

**नीलाद्रिकर्णी ।** स्त्री । नीलापराजितायाम् । रा.नि.व.३ ।

**नीलापराजिता ।** स्त्री । नीलपुष्पापराजितायाम् । नील अपराजिता । मं नीलशूपखी । कं नीलगिरिकर्णिके । तत्पर्य्यायः,—नीलपुष्पी, महानीली, नीलगिरिकर्णिका, गवादनी, व्यक्तगन्धा नीलसन्ध्या । गुणाः—शीतला तिक्ता ज्वरदाहरक्तातिसारघ्नी विच्छर्दिकोन्मादमदभ्रमश्वासातिकासघ्नी चामाघ्नी च । रा.नि.व.३ ।

**नीलाब्जम् ।** क्ली । नीलकमले । रा.नि.व.१० ।

**नीलाभ्रम् ।** क्ली । कृष्णाभ्रे । नील अभ्र । रा.नि.व.१३ । See अभ्रकम् । [ व६ ।

**नीलाम्बरम् ।** क्ली । तालीशपत्रे । रा.नि.

**नीलाम्बुजम् (न्म) ।** क्ली । नीलपद्मे । प.मु. ।

**नीलाम्लानः** । पुं । नीलपुष्पझिण्टीक्षुपे । नील झाँटी । मं कालाकोरांटा । कं करियगोरटे । गुणाः—कटुः तिक्तः कफ-वात-शूलघ्नः कण्डू-कुष्ठ-व्रणघ्नः शोफत्वग्दोषघ्नश्च । रा.नि.व.१० ।

**नीलाम्ली** । स्त्री । स्वनामख्यातफलवृक्षे । हिं गन्नबुलगुड़, कालीपिठोलि । मं अजगन्धि । कं केसीयगिड्‌ । सा श्वेतनीलभेदेन द्विधा । गुणाः—मधुरा रुच्या कफवातहरी च । रा.नि.व.४ ।

**नीलालिः** । पुं । भ्रमरे ।

**नीलालुः** । पुं । नीलवर्णालुकविशेषे । नील आलू । मं नीलालु । कं करियगणेसु । तत्पर्य्यायो,—असितालुः, श्यामालुकः । गुणाः—मधुरः शीतः पित्तदाहश्रमघ्नश्च । रा.नि.व.७ ।

**नीलाशी** । स्त्री । नीलनिर्गुण्ड्याम् । वै.निघ. ।

**नीलाश्मजम्** । क्ली । तुत्थके । वै.निघ. ।

**नीलाश्मा** । पुं । नीलमणौ । रा.नि.व.१३ ।

**नीलासनः** । पुं । नीलबीजासनभेदे । पियाशालविशेषे । तत्पर्य्यायः,—नीलबीजः, नीलपत्रः, सुनीलकः, नीलद्रुमः, नीलसारः, नीलनिर्य्यासकः । गुणाः—कटुः शीतः कषायः कण्ठकण्डूदद्रुघ्नः सारकश्च । रा.नि.व.९ ।

**नीलाह्वा** । स्त्री । कृष्णापराजितायाम् । वै. [निघ. ।

**नीलाक्षः** । पुं । हंसे । वै.निघ. ।

**नीलिका** । स्त्री । वक्रलोहे । विट्‌रीतिभाषा । नील्याम् । नील । रा.नि.व.४ । नीलनिर्गुण्ड्याम् । वर्त्तलौहे । रा.नि.व.१३ । क्षुद्ररोगविशेषे । लक्षणं—"कृष्णमेवंगुणं यस्तु गात्रे वा नीलिकां विदुः ।" मा.नि. । "शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु । श्यामलं मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका ॥" मा.उ.३१अ. । लिङ्गनाशनामकपत्तिकदृष्टिरोगे । भा. । See काचः । इन्दीवरालतायाम् । वङ्गे । कान्तलौहे । वै.निघ. । वातज्वरे । गजरै. ।

**नीलिनी** । स्त्री । नील्याम् । च.सू.२अ. । नीलबुह्नायाम् । रा.नि.व.४ । सु.सू.३९अ. । सि.यो. अ.मा.चि.पञ्चगव्यघृते । "नीलिनीं कटुरोहिणीम् ।" च.द.ज्व.चि. । "नीलिनीमजगन्धाञ्च ।" नीलपुनर्नवायाम् । रा.नि.व.५ । वा.सू.१५अ. । "सुरसाहिंस्रानीलिनीतिल्वकानि ।" श्वेतवचायां । च.द.गुल्म.चि. । "सरला नीलिनी वचा ।" श्यामनिशोतायां । श.र. । सिंहपिप्पल्याम् । वै.निघ. ।

**नीलिनीफलम्** । क्ली । नीलीबीजे । नीलेर बीज । सु.सू.१४. ।

**नीली** । स्त्री । स्वनामख्यातक्षुपे । नील गाछ । रा.नि.व.४ । See अञ्जिका । नीलबुह्नायाम् । नील बोणा । तत्पर्य्यायः,—काला, क्लीतकिका, ग्रामीणा, मधुपर्णिका, रञ्जनी, श्रीफली, तुत्था, तूणी, दोला, नीलिनी, तूली, तूलिका, द्रोणिका, क्लीतका, कृतसला, मेघवर्णा, ग्रामणी, ग्रामिणी, नीलपुष्पिका, नीला, तूली, द्रोणी, मेला, तुच्छा, नीलपत्री, रात्री, नीलिका, नीलपुष्पी, काली, श्यामा, शोधनी, श्रीफला, ग्राम्या, भद्रा, भारवाही, मोघा, कृष्णा, व्यञ्जनकेशी, महाफला, असिता, क्लीतनी, केशी, चारटिका, गन्धपुष्पा, श्यामलिका, रङ्गपत्री, महाबला, स्थिररङ्गा, रङ्गपुष्पी, कालकेशी । गुणाः—"नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा । उष्णा हन्त्युदरप्लीहवातरक्तकफानिलान् । आमवातमुदावर्त्तं मदञ्च विषमुद्धतम् ॥" भा. । च.द.सन्निपातज्व.चि. अष्टादशाङ्गे । "नीली कम्पिल्लकं त्रिवृत् ।" तन्नामकौषधी, यस्याः क्षीरं नीलं पुष्पञ्चापि नीलम् । या चानेक-लताप्रतानवती भवति । च.चि.१अ. । नीलाञ्जनिकायां, शारदफलायां, सिंहपिप्पलीति डल्वणः । सु.चि.२५अ. । कालाञ्जन्याम् । काल कार्पास । वा.टी.हेमा. । श्रीफलिकायाम् । बेल गाछ । वृद्धदारके । "नीलीतुल्यं त्वगेलञ्च ।" "चूर्णं श्यामा वृहन्नीली ।" सु.सू.४अ. ।

**नीलीफलम्** । क्ली । श्रीफले । सु.चि.१७अ. ।

**नीलीमाषः** । पुं । राजमाषे । वर्वटी ।

**नीलावृक्षाकृतिः** । स्त्री । शरपुङ्खायाम् । शरपुङ्खा, बन नील । वै.निघ. ।

**नीलोत्पलम्** । क्ली । (Nymphaea stellata or N. Caerulca.) नीलकमले । नील पद्म, नीलोत्पल । नीलकुमुदे । नील शुन्दि । हिं नीलोफर । मं नीलोत्पल । कं नैदिलु । तें मलकुलुव । तत्पर्य्यायः,—उत्पलकं, कुवलयं, इन्दीवरं, कन्दोत्थं, सौगन्धिकं, सुगन्धं, कुड्मलकं, असितोत्पलं, कन्दोटं, इन्दिरावरं, इन्दीवारं, नीलपद्मम् । गुणाः—अतिस्वादु शीतलं सुरभि सुखकृत् पाकेऽतितिक्तं रक्तपित्तघ्नञ्च । रा.नि.व.१० । "नीलोत्पलमतिस्वादु शीतं सुखकरं मतं । पाके-

ऽतितिक्तं सुरभि रक्तपित्तस्य नाशकम् ॥" द्रव्यगुणः। च.अर्श.-चि.। तन्मूलगुणाः—गुरु विष्टम्भि शीतलञ्च। राज.३प.। पुं। नीलमणौ।

**नीलोत्पलिनी (ली)।** स्त्री। नीलकमलिन्याम्। नीलपद्मेर झाड़। कुमुदिन्याम्। सुन्दी वा कुमुदफुलेर झाड़। रा.नि.व.१०।

**नीलोदरः।** पुं। महाविषवृश्चिकजातिभेदे। सु.कल्प.८अ.।

**नीलोपलः।** पुं। नीलमणौ। नीलकान्त मणि। रा.नि.व.१३।

**नीवरम्।** क्लो। जले। वै.निघ.। पुं। पङ्के।

**नीवारः।** पुं। Wild variety of Oryza sativa. तृणधान्यविशेषे। उड़ि धान। हिं तीन्नी। मं निवरिवट्। तत्पर्य्यायः,—तृणधान्यं, वनव्रीहिः, अरण्यधान्यं, मुनिधान्यं, तृणोद्भवं, अरण्यशालिः। गुणाः—मधुरः स्निग्धः लघुः पवित्रः पथ्यदश्च। रा.नि.व.१६। "नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत्। भा.धा.व.। तदन्नगुणाः—"नीवारभक्तो रुचिदो लघुर्दीपनकृद्गुरुः। वातकारी यकृत्श्वासश्लोहामव्रणनाशनः॥" वै.निघ.। रक्तपित्ते हितः। सि.यो.र.पि.चि.। खण्डखाद्ये।

**नीवारतुण्डिका।** स्त्री। नीवारे। उड़ि धान। र.मा.।

**नीहारः।** पुं। हिमे। शिशिर। तत्पर्य्यायाः,—निहारः, मिहिका, अवश्यायः, तुषारः, तुहिनं, हिमं, प्रालेयं, महिका, खजलं, निशाजलम्। स च कफ-वातवर्द्धकः। "शताधिकः सनीहारः सविद्युत्स्तनयित्नुवान्। राज.२अ.।

**नुत्तः।** पु। क्षुद्रपनसवृक्षे। लकुचवृक्षे। वै.निघ.।

**नूतनगुड़ः।** पुं। अभिनवगुड़े। नूतन गुड़। गुणाः—दाहघ्नः तापघ्नः रसनेन्द्रियतर्पणः शीतः सुमधुरश्च। रा.नि.व.१४।

**नूदः।** पुं। ब्रह्मदारुवृक्षे, अश्वत्थभेदे। गया अश्वत्थ। अम.।

**नृदन्ता (न्ती)।** स्त्री। महामेदायाम्। वै.निघ.।

**नृपः।** पुं। ऋषभके। अवभक। प.मु.। राजादनवृक्षे। खिर्नी गाछ। वै.निघ.२भ.चन्दनादितैले। "चन्दनाम्बु नृपं वाप्यम्।" तगरपादुकायाम्। वै.निघ.।

**नृपकन्दः।** पुं। राजपलाण्डौ। लाल पेयाज। रा.नि.व.७।

**नृपतरुः।** पुं। आरग्वधवृक्षे। राजादनीवृक्षे। खिर्नी। चि.क्र.क.४प.।

**नृपद्रुमः (पादपः)।** पुं। स्थूलारग्वधवृक्षे। बड़ सोणालु। रा.नि.व.९। भा.वा.र.चि.त्रिफलागुग्गुलौ। राजादनीवृक्षे। खिर्नी। रा.नि.व.११।

**नृपप्रियः।** पुं। राजपलाण्डौ। रा.नि.व.७। रामशरे। रामशर। रा.नि.व.८। आम्रवृक्षे। रा.नि.व.११। सारसपक्षिणि। वै.निघ.। वंशभेदे। वेड़ु बाँश। श.च.। [व.७।

**नृपप्रियफला।** स्त्री। वार्त्ताकीवृक्षे। रा.नि.

**नृपप्रिया।** स्त्री। केतकीवृक्षे। केया गाछ। रा.नि.व.१०। पिण्डीखर्जूरे। शालिधान्ये। वै.निघ.।

**नृपबदरः।** पुं। राजबदरवृक्षे। रा.नि.व.११।

**नृपमाङ्गल्यकम्।** क्लो। आकुल्यपुष्पे। रा.नि.व.४।

**नृपमाषः।** पुं। राजमाषे। रा.नि.व.१६।

**नृपवल्लभः।** पुं। राजाम्रवृक्षे। राजबदरे। रा.नि.व.११। ग्रहण्यां रसविशेषे। तज्ज्ञः: ८ तो. जातीफलं (जायफल) लवङ्गं (लवङ्ग) मुस्ता (मुता) गुड़त्वक् एला टङ्कणक्षारः (सोहागार खई) जीरकं (जीरा) तेजपत्रं यमानी शुण्ठी सैन्धवलवण लौहम् अभ्रं ताम्रम् एषां प्र. ४ तो. मरिचं ८ तो. छागीदुग्धेन धात्रीरसेन वा मर्द्दयेत्। बृहत् यथा—पारदः गन्धकः लौहम् अभ्रं शोधक चित्रकमूलं निहन्मूलं टङ्कणक्षारः जातीफलं हिङ्गु गुड़त्वक् एला मुस्ता लवङ्गं तेजपत्रं यमानीद्वयं शुण्ठी सैन्धवं मरिचं रौप्यं प्र. १ तो. स्वर्णभस्म १२ रक्तिकं। आर्द्रकरसेन आमलकीरसेन वा भावयेत्। मात्रा माषकलायमिता। र.सा.सं.।

**नृपवल्लभघृतम् (तैलम्)।** क्लो। नेत्ररोगे घृतं तैलञ्च। गव्यघृतं, तैलं वा ॥० श. दुग्धं २श.। कल्कार्थे—जीवकः (गुलञ्च) ऋषभकः (वंशलोचन) मेदा (अश्वगन्धा) द्राक्षा (किसमिस) शालपर्णी कण्टकारी बृहती यष्टिमधु द्राक्षालकं

(বেলেড়া) विड़ङ्गं नक्षित्रा शर्करा (চিনি) रास्ना नीलोत्पलं गोक्षुरं पुण्डरीकं (পুণ্ডরিয়া) पुनर्नवा सैन्धवं पिप्पली (পিপুল) प्रत्येकं ४० तो०। तैलमस्तं घृतमेवमपि। भैष०। अथवा तैल-घृतयोः प्र. ४ श० दुग्धं १६श. कल्कद्रव्यं प्र. २ तो०। रस.र०।

**नृपवल्लभा**। स्त्री। केविकापुष्पवृक्षे। रा.नि. व.१०। महाराजचूतवृक्षे। वै.निघ.।

**नृपवृक्षः**। पुं। राजवृक्षे। সোনালু গাছ।

**नृपात्मजः**। पुं। महाराजचूतवृक्षे। रा.नि. व.११। आम्रातकवृक्षे। वै.निघ.। स्त्री (जा)। कटुतुम्ब्याम्। र.मा.।

**नृपान्नम्**। क्ली। शालिधान्यविशेषे, राजान्ने। गुणाः—त्रिदोषघ्नं सुस्निग्धं मधुरं लघु दीपनं बल्यं पथ्यं कान्तिदं वीर्यवर्द्धनञ्च। रा.नि.व.१६।

**नृपामयः**। पुं। राजयक्ष्मणि, क्षयरोगे। रा. नि.व.२०।

**नृपार्हम्**। क्ली। शालिधान्ये। হৈমন্তিক धान्य। प.मु.।

**नृपावर्त्तः**। पुं, क्ली। राजावर्त्तमणौ। रा. नि.व.१३।

**नृपाह्वयः**। पुं। राजावर्त्तमणौ। प.मु.। राजपलाण्डौ। रा.नि.व.७।

**नृपेष्टः**। पुं। राजपलाण्डौ। रा.नि.व.७। राजबदरवृक्षे। रा.नि.व.११। नीलीवृक्षे। वै.निघ.।

**नृपोचितः**। पुं। राजमाषे। বরটী। प.मु.। रा.नि.व.१६। [ पाणौ। रा.नि.व.१८।

**नृमाणम्**। क्ली। पादात् ऊर्द्धविस्तृतदोः

**नृसा(द)रः**। पुं। निशादल इति ख्याते द्रव्ये। महाद्रावके।

**नेता**। पुं। निम्बुपारवृक्षे। নিশিন্দা। रा.नि. व.४। निम्बवृक्षे। रा.नि.व.९।

**नेत्रम्**। क्ली। दर्शनेन्द्रिये। चक्षुः। रा.नि.व. १८। नेत्रपरीक्षा यथा—वातेन रूक्षं धूम्रमरुणञ्च। पित्तात् पीतरक्तहरितवर्णं सदाहञ्च। कफेन धवलं ज्योतिर्हीनञ्च। भा.। तदुक्तं—"नेत्रप्रमाणं द्व्यङ्गुलं बाहुल्यं त्र्यङ्गुलोदरसम्मतं। द्व्यङ्गुलं सर्वतः सार्द्धं भिषङ्नयनबुद्बुदं। सुवृत्तं गोस्तनाकारं सर्वभूतगुणोद्भवम्।-पलं भुवोऽग्नितो रक्तं वातात् कृष्णसितं जलात्। आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे। दृष्टिश्चात्र तथा वक्ष्ये यथा ब्रूयाद्विशा रदः। नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते। कृष्णात् सप्तमांशमिच्छन्ति दृष्टिं दृष्टिविशारदाः। मण्डलानि च सन्धींश्च पटलानि च लोचने" सु.उ. १अ.। तन्मूले। গাছের শিকড়। रा.नि.व.२। च.द.वि.ज्व.चि.। "दाडिम्बपत्रकर्णाख्यनेत्रम्।" वस्तिप्रशलाकायाम्। নল इति लोके। यथा—नेत्राणि, सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयानि श्लक्ष्णानि दृढानि गोपुच्छाकाराणि ऋजूनि गुटिकामुखानि। तदभावे नलवंशास्थिसम्भवा। नेत्रप्रणिधानदोषाः षट्, पार्श्वावपीडितमत्युत्क्षिप्तमवसन्नं तिर्यक्क्षिप्तं चलितं विवर्त्तितमिति। अतिस्थूलं कर्कशमवनतमणु भिन्नं सन्निकृष्टविप्रकृष्टकर्णिकं सूक्ष्मातिच्छिद्रमतिदीर्घमतिह्रस्वमित्येकादश नेत्रदोषाः। सु.चि.३५अ.। Sec अनुवासनवस्ति.।

**नेत्रकर्म्म (प्रसाधनम्)**। क्ली। सप्तविध नेत्रोपचारेषु। यथा—"सेकश्चाश्च्योतनम्पिण्डी विडालस्तर्पणस्तथा। पुटपाकोऽञ्जनं नेत्रे यथावस्थं प्रयोजयेत्॥" तोड़.। भा.। [ श्रम.।

**नेत्रच्छदः**। पुं। नेत्रावरणे। চক্ষের পাতা।

**नेत्रजलम्**। क्ली। अश्रुणि। চখে'র জল।

**नेत्रधावनम्**। क्ली। चक्षुर्धावने। तस्य विधिः —"दन्तमूर्द्धमथो धृत्वा प्रातः सिञ्चेच्च लोचने। तोयपूर्णमुखस्तेन दृष्टिराग्र प्रसीदति॥" राज.१प।

**नेत्रनैर्मल्यकारी**। पुं। खर्परधातौ। वै.निघ.।

**नेत्रपर्य्यन्तः**। पुं। अपाङ्गदेशे। रा.नि.व.१८।

**नेत्रपाकः**। पुं। चक्षुषः पाके। लक्षणं— "कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः। संरम्भी पच्यते यत्तु नेत्रपाकः स शोथजः॥" मा.नि.।

**नेत्रपाषाणः**। पुं। कटुकायाम्। र.मा.।

**नेत्रपिण्डः**। पुं। विड़ाले। नेत्रगोलके। हारा.।

**नेत्रपुटम्**। पुं। नेत्रच्छदे। [ २।

**नेत्रपुष्करा**। स्त्री। रुद्रजटायाम्। रा.नि.व.

**नेत्रबलम्**। क्ली। रसाञ्जने। वै.निघ.।

**नेत्रभूषणम्**। क्ली। कृष्णाञ्जने। কালি সুর্মা। वै.निघ.। [ वै.निघ.।

**नेत्रमङ्गलकारी** (इन्)। पुं। खर्परधातौ।

**नेत्रमलम्**। क्ली। पिचुटे। পিচুটী। वै.निघ.।

**नेत्रमीला** । स्त्री । यवतिक्तालतायाम् । रा. नि व ३ ।

**नेत्ररञ्जनम्** । क्ली । अञ्जने । কাজল ।

**नेत्ररोगः** । पुं । दृष्टिगतरोगे । চক্ষের রোগ । तस्य निदानं—सन्ततदूरेक्षणरोदनकोपशोकाभिघातादिभिर्वातादयः कुपिता नेत्रविकारान् जनयन्ति । ते च रोगाः षट्सप्ततिः । यथा—वातजा दश, पित्तजा दश, कफजास्त्रयोदश, रक्तजाः षोडश, त्रिदोषजाः पञ्चविंशतिः, बाह्यौ द्वौ । ते च पुन. षट्सप्ततिप्रकारा अवयवभेदेन षट्सप्ततिर्भवन्ति । यथा—सन्ध्याश्रया नव, वर्त्मजा एकविंशतिः, शुक्लजा एकादश, कृष्णजाश्चत्वारः सर्व्वस्थाः सप्तदश, दृष्टिजाः द्वादश, बहिर्जातौ द्वौ चेति । मा.नि. । अन्यस्य नेत्ररोगा यथा—"तोयस्रावः प्रसन्नान्धो नक्तान्ध्यस्तिमिरस्तथा । शुक्लको शुक्लजालश्च पटलस्त्वर्बुदस्तथा ॥ पूयस्रावश्च काचाक्षो रक्तस्रावस्तथैव च । चिपिटी वर्त्मरोगश्च अभिष्यन्दस्तथैव च ॥ वातपित्तकफैर्दुष्टै र्नेत्ररोगा भवन्त्यमी । लिङ्गं चिकित्सितं तेषां प्रवक्ष्याम्यनुपूर्व्वशः ॥" ग.द. ।

**नेत्ररोगहा** । पुं । वृश्चिकाल्यां । বিছাতি । रा.नि व.८ ।

**नेत्ररोम** । क्ली । नेत्रपक्ष्मणि । वै.निघ. ।

**नेत्रवती** । स्त्री । पश्चिमदेशप्रसिद्धभारतवर्षीयनद्याम् । एतज्जलगुणाः—सुमधुर कान्तिजनकं हृद्यं पुष्टिकर दीपनं पाचनं बल्यञ्च । रा.नि.व.१४ ।

**नेत्रवर्त्म** । क्ली । दृष्टौ, नेत्रे । वै.निघ. ।

**नेत्रवर्त्मवन्धः** । पुं । नेत्ररोगविशेषे । वै.निघ. ।

**नेत्रवस्तिः** । पुं । नेत्रे वस्तिदानप्रकरणे । "नेत्रं चेत्र परित्यज्य सार्द्धं च द्वयनङ्गुलम् । सर्व्वतश्चापि चमर्णां मलं दत्त्वा प्रमर्द्दयेत् ॥ तेन पिण्डं गालवाल दृढं सन्धिविवर्जितम् । कृत्वालवालं दृक्प्रान्ते शुक्लभागं द्रवेण वै । पूरयेत यथापक्ष्म पूरितयैव जायते । नेत्रे पलं प्रकुर्व्वीत विकारस्तु तथैव च ॥ स्वस्थे कफे सन्धिरोगे मात्रा पञ्चशतं विदुः । कफे वाते कृष्णरोगे मात्रा सप्तशतं मता । दृष्टिरोगेष्वष्टशतं अधिमन्थे सहस्रकम् । शुक्लेऽति कुटिल कृत्स्ने स्यात् द्वादशशती मता ॥ पित्तरोगे नवशत सहस्र वातरोगिणाम् । एकाहं वा द्व्यहं वापि पञ्चाहं चेष्यतेऽथवा ॥ द्रवञ्चापाङ्गतो नीत्वा नीलद्रव्य विलोक्य च । सुखं निरोधयत् पश्चात् नेत्रवस्तिविधिस्त्वयम् ॥ निद्रेन्द्रियौघशान्तिश्च क्रियालाघवमेव च । सम्यक् रोगे सुखसुप्तिर्द्दृष्टं वर्णपाटवम् ॥ शोकाद्युपातगुरुता स्नेग्ध्यं स्यादतितर्पिते । रुक्षाविलं सरक्तञ्च नेत्रं स्याद्धीनतर्पितं ॥ रुक्षे स्निग्धः क्रमश्चात्र प्रयोज्यः सम्प्रदायतः ।" तोड़ । See सु.उ.१८अ. ।

**नेत्रविभूषणम्** । क्ली । नीलाञ्जने । वै.निघ. ।

**नेत्रवैमल्यकारी** (इन्) । पुं । खर्परधाती । वै.निघ. ।

**नेत्राभिष्यन्दः** । पुं । नेत्रसर्व्वगतरोगे । নেত্রশূল বা চোক উঠা । स चतुर्विधः वाताभिष्यन्दः, पित्ताभिष्यन्दः, कफाभिष्यन्दः रक्तजश्चेति । अयं रोगः प्रायेणाधिमन्थादिसर्व्वविधनेत्ररोगाणामाकरः । लक्षणं यथा—"प्रायेण सर्व्वे नयनामयास्ते भवन्त्यभिष्यन्दनिमित्तमूलाः । वातात्पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः । प्रायेण जायते घोरः सर्व्वनेत्रामयाकरः ॥ निस्तोदनस्तम्भनरोमहर्षसङ्घर्षपारुष्यशिरोभितापाः । विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥ दाहप्रपाकौ शिशिराभिनन्दा धूमायनं वाष्पसमुच्छ्रयश्च । उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥ उष्णाभिनन्दा गुरुताक्षिशोफः कण्डूपदेहावतिशीतता च । स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति ॥ ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च । पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ॥" सु.उ.६अ. ।

**नेत्रामयः** । पुं । नेत्ररोगे । रा.नि.व.२० ।

**नेत्रामयहरः** । पुं, स्त्री । खर्परे । वै.निघ. ।

**नेत्राम्बु** । क्ली । अश्रुणि । চক্ষের জল । अम. ।

**नेत्रारिः** । पुं । स्नुहीवृक्षे । নয়না গাছ । रा. नि.व.८ ।

**नेत्रार्शः** । क्ली । अक्षिजातार्शसि । तत्र वर्त्मावरोधः वेदनास्रावो दर्शननाशश्च । सु.नि.२अ. ।

**नेत्रास्थि** । क्ली । नयनाधिष्ठाने घोणाख्यास्थिद्वये । च.शा.७अ. ।

**नेत्री** । स्त्री । नाड्यां । श.र. ।

**नेत्रोदकम्** । क्ली । नेत्रजले । अश्रु ।

**नेत्रोपमः** । पुं । वातामे । বাদাম । भा. ।

**नेत्रोपमफलः** । पुं । वातामवृक्षे । भा. ।

**नेत्रौषधी** । स्त्री । अजशृङ्ग्याम् । তীত পুষ্পী, কোঁগা । प.मु. । र.मा. । क्ली । नेत्रहितौषधमात्रे । पुष्पकाशीषे । नीलाञ्जने । नील शीशाकस् । रा.नि.व.१३ ।

**नेत्रवर्गः** । पुं । चक्षुर्हितकरद्रव्यगणे । यथा—"द्विधा रसाञ्जनञ्चोक्तं त्रिफला लोध्रकद्वय । कुमारिका च विमला गणोऽयं नेत्रसंज्ञकः ॥" अर्क चि. ।

**नेदिष्ठः** । पुं । अङ्कोटवृक्षे । जटा. ।

**नेपः** । पुं । उदके । जल ।

**नेपा** । स्त्री । नवमल्लिकायाम् । সেউতী । रा.नि.व.१० । कस्तूर्य्याम् । वा.उ.५४. । मनःशिलायाम् । वै.निघ. हिक्का.चि.धूमे ।

**नेपालः** । पुं । कणगोधी । वै.निघ. । [ नि.व.१३ ।

**नेपालकम्** । क्ली । ताम्रधातौ । তামা । रा.

**नेपालनिम्बः** । पुं । किरातत्तिक्ते । চিরাতা । चिरइता नेपालनिंबु, चिराइते इति च लोके । तत्पर्यायः,—नेपालः, तृणनिम्बः, ज्वरान्तकः, नाडीतिक्तः, निद्रारिः, सन्निपातरिपुः, सन्निपातनुत् । गुणाः—"नेपालनिम्बः शीतोष्णो योगवाही लघुस्तथा । तिक्तोऽतिकफपित्तास्रशोफतृष्णाज्वरापहः ।" रा.नि.व.९ ।

**नेपालमूलकम्** । क्ली । गजदन्ताकारे मूलकभेदे । भा.पू.१भ.शा.व. ।

**नेपालशृङ्गी** । स्त्री । नेपालदेशीयशृङ्गीविषे । নেপালদেশীয় মিঠা বিষ । गुणाः—"नेपालशृङ्गी नेपाली हन्ति सा कफजान् गदान् । वातजांस्त्रिविधांश्चापि सन्निपातोद्भवं ज्वरम् । आमवातं महाघोरं हृद्रोगमपि दारुणम् ।" चनि. ।

**नेपालि(लो)का** । स्त्री । सोमलतायाम् । वै.निघ. । मनःशिलायाम् ।

**नेपालीयम्** । क्ली । ताम्रे । वै.निघ. ।

**नेपालेक्षुः** । पुं । पुण्ड्रकेक्षौ । পুঁড়ি ইক্ষু । रा.नि.व.१४ ।

**नेमिः (मी)** (इन्) । पुं । शक्रखदिरे । रा.नि.व.८ । चक्रबाह्यपरिधौ । च.द.१४. । तिनिशवृक्षे । अम. । र.मा. ।

**नेमिवृक्षः** । पुं । श्वेतखदिरवृक्षे । रा.नि.व.८ ।

**नैऋतवायुः** । पुं । दक्षिणपश्चिम-कोणवाहिसमीरणे । तद्गुणाः—"नैऋतो न विदाहकृत् ।"

**नैकुम्भम्** । क्ली । जैपालबीजे । शा.की. । पुं । जैपालवृक्षे ।

**नैगमेषः** । पुं । पितृग्रहसंज्ञके बालरोगे । तदाविष्टे लक्षणं यथा—"यः फेनं वमति विनम्यते च मध्ये सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः । ज्वर्य्येत प्रततमथो वसासगन्धिर्निःसंज्ञो भवति हि नैगमेषजुष्टः ॥" नैगमेषस्तु पार्व्वत्या सृष्टो मेषाननो ग्रहः । कुमारधारी देवस्य गुहस्यात्मसमः सखा । सु.उ.३७ष. ।

**नैगमेषापहृतः** । पुं । नागोदरे । নাগোদর । सु.शा.१०ष. ।

**नैचिकी** । स्त्री । उत्तमायां गवि । अम. ।

**नैचुलम्** । क्ली । हिज्जलबीजे । च.सू.२अ.वमन. ।

**नैदानिकः** । त्रि । निदानशास्त्रकुशले ।

**नैपालः** । पुं । नेपालनिम्बे । চিরেত । रा.नि.व.९ । [ गुणा ।

**नैपालमूलकम्** । क्ली । बृहन्मूलके । বড়

**नैपालिकम्** । क्ली । ताम्रधातौ । रा.नि.व.१३ ।

**नैपाली** । स्त्री । मनःशिलाभेदे । নেপালি মনছাল । मे. । सु.चि.२अ. । मनःशिलायां । र.मा. । रा.नि.व.१३ । नील्यां । श.र. । नवमल्लिकायाम् । সেউতী । वसन्ती नेवारीति लोके । भा. । रा.नि.व.१० । शेफालिकायाम् । मे. । इक्षुभेदे, नेपालेक्षौ । गुणाः—वातकरः कफपित्तघ्नः कषायो विदाही च । सु.सू.४५अ. ।

**नैयग्रोधम्** । क्ली । वटवृक्षफले । বটফল । अम. ।

**नैर्झरजलम्** । क्ली । निर्झरवारिणि । ঝর্ণার জল । "शैलसानुस्रवद्वारिप्रवाहे निर्झरो झरः । स तु प्रस्रवणश्चापि तत्रत्यं नैर्झरं जलम् ।" भा. ।

**नैषधकः** । पुं । निषधदेशीये शालिधान्यभेदे । गुणाः—शालिवत् । च.सू.२७अ. ।

**नोदयन्ती** । स्त्री । नवमल्लिकायां । र.मा. ।

**नोमाली** । स्त्री । नवमल्लिकायाम् ।

**न्यक्कारुः** । स्त्री । विष्ठाकीटे ।

**न्यक्कारिका** । स्त्री । पतङ्गविशेषे, विष्ठाकीटे । हारा. ।

**न्यग्रोधः** । पुं । वटवृक्षे । वट. गाछ । रा.नि.व.२३।११ । सु.सू.३८अ.न्यग्रोधादि: । सुतश्रेण्याम्. आखुकर्णीलतायाम् । गूनाकाणी । रा.नि.व.२३ । शमीवृक्षे । मे. । विषपर्ण्यां । मोहननामौषधौ । विश्व. । [ विशेषं । अ.सा. ।

**न्यग्रोधपरिमण्डला** । स्त्री । सुन्दरीस्त्री-

**न्यग्रोधपुटपाकः** । पुं । वटवल्कादिसाध्य-पटपाके । यथा—"न्यग्रोधादेस्तु कल्केन पूरयेद्-गौरतित्तिरि: । निरन्त्रमुदरं सम्यक् पुटपाकेन सत्पचेत् ॥" अस्य रसो मधुना सर्वातिसारे हित: । शाङ्ग.म.ख.१अ. । [ इन्दुरकाणी ।

**न्यग्रोधा** । स्त्री । आखुकर्णीलतायाम् ।

**न्यग्रोधादिगणः** । पुं । तदादिद्रव्यवर्गे । यथा—"न्यग्रोधपिप्पलसदाफलरोध्रयुग्म जम्बु-द्वयार्ज्जुन-कपीतन-सोमवल्क-प्लक्षाम्रवञ्जुल-पियाल-पलाशनन्दिकोलीकदम्बविरलामधुकं मधुकम् ।" इति द्रव्याणि । अन्य:—"न्यग्रोधोदुम्बराश्वत्थप्लक्ष-मधुक-कपीतन-ककुभकोशाम्रचोरकपत्रजम्बूद्वय-पियाल-मधूक-रोहिणी-वञ्जुल-कदम्ब वदरी-तिन्दुकी-सल्लकीरोध्रसावरोध्रभल्लातकपलाशनन्दीवृक्ष श्चेति । गुणा:—"न्यग्रोधादिर्गणो व्रण्यः सग्राही भग्न-साधकः । रक्तपित्तहरो दाहमेदघ्नो योनिदोष-हृत् ॥" वा.सू.१५अ. । सु.सू.३८अ. ।

**न्यग्रोधिका** । स्त्री । आखुकर्णीलतायाम् । रा.नि.व.३ ।

**न्यग्रोधी** । स्त्री । द्रवन्त्याम् । बड़ दन्ती । रा.नि.व.५ । आखुकर्णीलतायाम् । सुतश्रेण्याम् रा.नि.व.४ । इन्दुरकाणीति कश्चित् । अम.भ. ।

**न्यङ्कुः** । पुं । शम्बरमृगे । शाम्बर इति भाषा हिं बारहसिङ्गा । मांसगुणा:—स्वादु लघु वृष्यं त्रिदोषघ्नञ्च । भा.मांसव. । मणिविशेषे । मे. ।

**न्यङ्कुभूरुहः** । पुं । आरग्वधवृक्षे । वै.निघ. । श्योणाकवृक्षे । शोणापाठा । त्रिका. ।

**न्यच्छम्** । क्ली । क्षुद्ररोगभेदे । तल्लक्षणं— "मण्डलं महदल्पं वा श्यामं वा यदि वा सितं । सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥" सु.नि.१३अ. ।

**न्यच्चः** । पुं । गण्डके । गण्डार । वै निघ. । सर्हिषं । क्ली । घासे, तृणे । मे. ।

**न्याय्यम्** । क्ली । भर्ज्जिततण्डुले । मूड़ि । श.च. ।

**न्यादः** । पुं । भोजने । आहारे । अम. ।

**न्युब्जः** । पुं । रोगे । व्यथायाम् । कुष्ठे । वै.निघ. । हे.च. । त्रि । कुब्जे । कुँजो । मे. । रुजाभुग्ने । अम. । क्ली । कर्म्मरङ्गे । कामराङ्गा । मे. ।

**न्यूनपञ्चाशद्भावः** । पुं । जन्मना उन्मादग्रस्ते । पागल । का.पुराणं ।

**न्यूनाङ्गः** । त्रि । हीनाङ्गे । खञ्जे । [ अ.चि. ।

**न्यूनेन्द्रियः** । त्रि । असम्पूर्णेन्द्रिये, खञ्जादौ ।

---

## प

**पः** । पुं । वायौ । पर्णे । एकाक्ष. को. ।

**पर्कटी** । स्त्री । प्लक्षवृक्षे । पाकुड़ गाछ । वै.निघ ।

**पक्ष(क्ष्म)पीडः** । पुं । वर्द्धनवृक्षे । हिं पखौडा । तत्पर्य्याया,—पक्ष्मकल्यः, पक्षराधका, वर्द्धनः । गुणा—दृष्टिजननविधौ शस्तः कटुः जीर्णज्वरघ्नश्च । रा.नि.व.८ ।

**पक्तृ(क्तृ)** । त्रि । स्वयं पाककर्त्तरि । पुं । वह्नौ ।

**पक्तिः** । स्त्री । गौरवे । पाके । मे. । पाकशक्ती । च.द.शिराव्यधे ।

**पक्तिशूलः** । पुं, क्ली । परिणामशूलरोगे । रा.नि.व.२० । See अन्नद्रवशूलः ।

**पक्वः** । त्रि । कठिने घने वा (वस्तुनि) । र.मा. । परिणते । पाका । अम.भ. । क्ली । छिन्नतण्डु-लादौ । पुराणम् । [ पाचके । वै.निघ. ।

**पक्वकृत्** । पुं । निम्बवृक्षे । श.च. । त्रि. ।

**पक्वपात्रम्** । क्ली । पक्वशरावे । वा.उ.५अ. ।

**पक्वमांसम्** । क्ली । पाकसिद्धमांसे । पाक करा मांस । गुणा:—हितं बलवर्द्धनं वीर्य्यवर्द्धनञ्च । रा.नि.व.१७ । वृहद्दरे । मद.व.६ ।

श. क्वाथार्थं—दशमूलं प्र.२प. त्रिफला प्र. २ प. हरिद्रा दारुहरिद्रा कुटजत्वक् सप्तपर्णत्वक् अपामार्गमूलं नीलीमूलं कटुकी आरग्वधफलमज्जा काकोदुम्बरिकामूलं कुष्ठं दुरालभा च एषां प्र.२प. वारि ६४ श. शे. १६ श.। कल्कार्थं—भार्गीमूलं पाठामूलं त्रिकटु त्रिवृता हिङ्गुलबीजं गजपिप्पली तुवरीमूलं (अग्रहग्रमूल) मूर्व्वामूलं दन्तीमूलं भूनिम्बं चित्रकमूलं श्यामालता अनन्तमूलं मञ्जिष्ठा गन्धतृणं (ग्रानकर्पूर) मदनफलम्, एषां प्र. २ तो. गोमयरसः गोमूत्रम् अम्लदधि दुग्धम् एषां प्र.४श. यथाविधि पचेत्। च.द.। च.चि.३५अ.।

**पञ्चगुप्तः** । पुं । कच्छपे। श.र.।

**पञ्चगुप्ता (सिः, रसा)** । स्त्री । स्पृक्कायाम् । गिड़िः शाक। रा.नि.व.१२।

**पञ्चजटा** । स्त्री। पञ्चमूले। च.द.। "पञ्चजटाशृतदुग्धंजमस्तम्!"

**पञ्चजनः** । पुं । पुरुषे। वै.निघ.।

**पञ्चतत्त्वम्** । क्ली । चित्यग्निजीमरुद्व्योमसु पञ्चभूतेषु । मद्यमांसमत्स्यमुद्रामैथुनेषु । तन्त्रम् ।

**पञ्चता (त्वम्)** । स्त्री, क्ली। मृत्यौ। अम.।

**पञ्चतिक्तः (क्ताः)** । पुं । पञ्चविधतिक्तद्रव्यगणे, तत्कषाये वा । तद्यथा—कण्टकारी गुडूची शुण्ठी कुष्ठं किरातसिक्तश्च। च.द.पि.श्लेष्म.ज्व.चि.। अन्यः—निम्बमूलत्वक् पटोलपत्रं वासात्वक्कण्टकारी गुडूची चेति। भा.।

**पञ्चतिक्तघृतम्** । क्ली । कुष्ठाधिकारे घृतम्। गव्यघृतं ४ श.। क्वाथार्थं—निम्बमूलत्वक् पटोलपत्रं कण्टकारी गुडूची वासामूलम्, एषां प्र. १० प. वारि ६४ श.शे. १६ श.। कल्कार्थं—त्रिफला १ श. यथाविधि पचेत्। भैष.। अन्यत् विस्फोटाधिकारे—गव्यघृतं ४ श.। क्वाथार्थं—पटोलपत्रं सप्तपर्णमूलत्वक् निम्बमूलत्वक् वासामूलत्वक् गुडूची त्रिफला एषां प्र. ६ प. २ तो. वारि ६४ श. शे. १६ श.। कल्कार्थं त्रिफला १ श. यथावत्पाच्यम्। रस.र.।

**पञ्चतिक्तघृतगुग्गुलुः** । पुं । कुष्ठाधिकारे । गव्यघृतं ४ श.। क्वाथार्थं—निम्बत्वक् (निमछाल) गुडूची (गुलञ्च) वासामूलं (वासकमूल) पटोलपत्रं कण्टकारी, एषां प्र. १० प. जलं ६४ श. शे. ८श.। कल्कार्थं—पाकनादीमूलं विड़ङ्गं देवदारु गजपिप्पली यवक्षारः सर्ज्जिक्षारः (साजिमाटी) शुण्ठी हरिद्रा शतपुष्पा चव्यं (चई) कुष्ठं (कुड़) ज्योतिष्मती (लताफट्की) मरिचम् इन्द्रयवः यमानी चित्रकमूलं (चितामूल) कटुकी भल्लातकं (भेला मूटि) वचा पिप्पलीमूलं मञ्जिष्ठा अतिविषा (आतइच) त्रिफला वनयमानी, एषां प्र. २ तो. शुद्धगुग्गुलुः ५ प.। (गुग्गुलुः पोट्टलं बद्धा दोलायन्त्रेण कल्कैः सह घृतं पक्तव्यम्)। पाके सति कल्कं छानयित्वा पुनर्गुग्गुलुना सह पक्त्वा गृहीतव्यम्। सा.कौ.।

**पञ्चतृणम्** । क्ली । कुशकाशशरदर्भेक्षुरूपतृणपञ्चमूले। "कुशः काशः शरो दर्भ इक्षुश्चैव तृणोद्भवम्। पञ्चतृणमिदं ख्यातं तृणजम्पञ्चमूलकम्॥" प.प्र.३ख.। अन्यच्च—"शालीक्षुकुशकाशौ स्यात् शरेण तृणपञ्चकम्। एषां मूलं तृपादाहपित्तास्रघ्नं वस्तिशुद्धिकृत्॥" भा.।

**पञ्चथः** । पुं । कोकिले। वै.निघ.।

**पञ्चदीर्घम्** । क्ली । पञ्चशरीरावयव-दैर्घ्यजनित शुभलक्षणे। तद् यथा—"बाहू नेत्रद्वयं कुक्षिर्द्वे तु नासे तथैव च। स्तनयोरन्तरञ्चैव पञ्चदीर्घं प्रचक्षते॥"

**पञ्चनखः** । पुं । व्याघ्रे। रा.नि.व.१९। कच्छपे। जटा.। गजे। त्रिका.। व्याघ्र-शरभ-शार्द्दूल-गोधाकच्छपशरटसिंहेषु। भक्ष्यपञ्चनखाः—"शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः।" स्मृतिः।

**पञ्चनखरः** । पुं । गोधायाम्। (गोसाप)। वै.निघ.।

**पञ्चनिदानम्** । क्ली । रोगज्ञानस्य पञ्चविधोपायेषु। यथा—"निदानं पूर्व्वरूपाणि रूपाण्युपशयस्तथा। सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम्॥" मा.नि.।

**पञ्चनिम्बम्** । क्ली । समभागत्वक्पत्रफलपुष्पमूलरूपे निम्बपञ्चके। "निम्बस्य पत्रत्वक्पुष्पफलमूलैर्विमिश्रितैः। पञ्चनिम्बं समाख्यातं तत्तिक्तं निम्बपञ्चकम्॥" रा.नि.व.२२।

**पञ्चपचा** । स्त्री । दारुहरिद्रायाम् ।

**पञ्चपटु** । क्ली । पञ्चविधलवणभेदे।

**पञ्चपत्रः** । पुं । चण्डालकन्दे। रा.नि.व.७।

**पञ्चपत्रिका** । स्त्री । गोरक्ष्याम्। रा.नि.व.५।

**पञ्चपर्णि(र्णी)का** । स्त्री। गोरक्ष्यां, गोरक्षचिञ्चायाम्। रा.नि.व.५।

**पञ्चपल्लवम्।** क्ली। आम्रजम्बूकपित्थबीजपूरबिल्वपत्रेषु। আম, জাম, কয়েৎ, টাবা ও বিল্বপত্র। "आम्र-जम्बू-कपित्थानां बीजपूरकबिल्वयोः। गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम्॥" प.म.३८.।

**पञ्चपित्तम्।** क्ली। मत्स्यमहिषवराहमयूरच्छागपित्तेषु। গোসাপ, মহিষ, শূকর, ময়ূর, ছাগ ইহাদের পিত্ত। "वराहच्छागमहिषमत्स्यमायूरपित्तकं। पञ्चपित्तमिति ख्यातं सर्व्वेष्वेव हि कर्म्मसु॥" वै.सं.प.। तेषां शुद्धि:—मत्स्यादिपित्तं निम्बटावैर्विभावितं शुद्धिमायाति। सा.कौ.।

**पञ्चप्राणाः।** पुं। प्राणापानव्यानोदानसमानाख्येषु पञ्चविधदेहान्तर्वायुषु। सु.।

**पञ्चबला।** स्त्री। बलातिबलानागबलाराजबलामहाबलासु। वै.निघ.।

**पञ्चबुद्धीन्द्रियम्।** क्ली। पञ्चज्ञानेन्द्रियेषु। स्पर्शनं रसनं घ्राणं दर्शनं श्रोत्रञ्चेति। च.।

**पञ्चभद्रम्।** क्ली, पुं। गुडूचीपर्पटमुस्तकिरातविश्वभेषजेषु। গুলঞ্চ, ক্ষেৎপাপড়া, মূতা, চিরাতা ও শুঁট। "गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम्। पञ्चभद्रम्।" सि.यो.च.द.ज्व.चि.।

**पञ्चभूतम्।** क्ली। चित्यर्जीमरुद्वीमसु। च.।

**पञ्चभृङ्गम्।** क्ली। देवताड़शमीभङ्गातालीशनिर्गुण्डीषु। দেবতাড়া, শাঁই, সিদ্ধি, তালীশপত্র ও নিশিন্দা। वै.निघ.।

**पञ्चमम्।** क्ली। मैथुने। तन्त्रम्।

**पञ्चमकारम्।** क्ली। मद्यमांसमत्स्यमुद्रामैथुनरूपे मकारपञ्चके। तन्त्रम्।

**पञ्चमास्यः।** पुं। कोकिले। श.र.। [व.१८।

**पञ्चमुखः।** पुं। सिंहे। पिङ्गलसिंहे। रा.नि.

**पञ्चमुखी।** स्त्री। वासकक्षुपे। বাসক গাছ। रा.नि.व.४। जवापुष्पभेदे।

**पञ्चमुष्टिः (कः) (ष्टी)।** पु, स्त्री। सान्निपातिकज्वरे यूषविशेषे। আহারদ্রব্য বিশেষ। स च यवबदरीफलकुलत्थमुद्गकाष्ठामलकानामेकैकां मुष्टिं गृहीत्वाष्टगुणतोये पक्वः। च.द.सन्निपातज्व.चि. "यवकोलकुलत्थानां मुद्गमूलकशुण्ठ्योः। एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले। पञ्चमुष्टिकयूषोऽयं वातपित्तकफापहः। शूले प्रशस्यते गुल्मे कासे श्वासे क्षये ज्वरे॥" ८ जीवके। वै.निघ.। भ.चय.चि.मूर्च्छाप्रभावां। स्पृक्कायाम्। वै.निघ.।

**पञ्चमूत्रम्।** क्ली। मूत्रपञ्चके, तच्च गर्दभीगोऽजाव्युष्ट्रागोमहिषीणामित्त्रितमूत्रे। "गवाजनागां मेषीणां महिषीणाञ्च मिश्रितम्। मूत्रेण गर्दभीनाञ्च तन्मतं मूत्रपञ्चकम्॥" रा.नि.व.२२। गुणास्तन्मध्ये मग्याः।

**पञ्चमूलम् (ली)।** क्ली, स्त्री। पञ्चानां मूलानां समष्टौ। तानि च बृहत्स्वल्पतृण-शतावरी-जीवन-बला-गोक्षुर-गुडूच्यादिकानि नवविधानि प्रत्येकं पञ्चपञ्चमूलात्मकानि भवन्ति। १। "बिल्वश्योनाकगाम्भारीपाटलागणिकारिका।" इति बृहत्पञ्चमूलम्। च.द। सु.सू.३८.। २। शालपर्णी पृश्निपर्णी बृहती कण्टकारिका गोक्षुरश्च। स्वल्पपञ्चमूलम्। गुणा.—श्रमरोहरन्। वल्यग्निदीपनम्। अर्श.चि.। See लघुपञ्चमूलं। ३। कुशकाशदर्भशरेक्षुमूलात्मकं तृणपञ्चमूलं पित्तकासक्षीरपाने ग्राह्यम्। सि.यो. कास-चि.श्रीकण्ठः। ४। शतावरीविदारीकन्द-जीवन्ती-विषाणी-जीवकात्मकं शतावर्य्यादिपञ्चमूलं। गुणा.—स्तन्यकरं गुरु हृद्यं वल्यं शीतलं कान्तिदमाग्नेयञ्च। ५। जीवकर्षभकमेदामहामेदाजीवन्तीषु। जीवकादिपञ्चमूलं। गुणाः—हृद्यं चक्षुष्यं धातुवर्द्धनं वल्यं दाहपित्तज्वरतृष्णाघ्नञ्च। ६। बलापुनर्नवैरण्डमुद्गपर्णीमाषपर्णीषु। बलादिपञ्चमूलं। गुणाः—भेदकं शोफघ्नं ज्वरघ्नञ्च। वै.निघ.। ७। गोक्षुरवदरीन्द्रवारुणीकासमर्द्दसर्पपेषु। गोक्षुरादिपञ्चमूलं। ८। गुडूचीमेषशृङ्गीशारिवाविदारीहरिद्रासु। वल्लीपञ्चमूलं। ९। करमर्द्दविकङ्कतकसैरीयक (दाँती) शतवरीगृध्रनखीषु। इति कण्टकपञ्चमूलं। सु.सू.३८.। गुणाः—तत्तत्पर्य्याये मग्याः।

**पञ्चमूल्यादिः।** पुं। ज्वरातिसारे कषायः। "पञ्चमूली-बला-बिल्व-गुडूची मुस्त-नागरैः। पाठाभूनिम्बह्रीवेरकुटजत्वक्फलैः शृतम्॥" च.द.।

**पञ्चरत्नम्।** क्ली। स्वर्णमौक्तिकमाणिक्यहीरकराजपट्टेषु। अन्यच्च—"कनकं हीरकं नीलं पद्मरागञ्च मौक्तिकम्। पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्व्वदर्शिभिः॥" रत्नानाञ्चाप्यभावे तु स्वर्णं कर्षार्द्धमेव च। सुवर्णस्याभावे तु आज्यं ज्ञेयं विचक्षणैः॥" हेमा.।

**पञ्चरसलोहम्।** क्ली। वर्णलोहे। वै.निघ.।

**पञ्चरसा** । स्त्री । हरीतक्याम् । मद.व.१। आमलक्याम् । तारा. ।

**पञ्चरक्षकः** । पुं । पक्षीवृक्षे । रा.नि.व.८।

**पञ्चराजिफलः** । पुं । पटोललतायाम् । रा.नि.व.४ ।

**पञ्चलवणम्** । क्ली । काच-सैन्धव-सामुद्र-(करकच)-विड्-सौवर्चललवणेषु समभागेषु । "काचसैन्धवसामुद्रविड्सौवर्चलैः समैः । स्यात् पञ्चलवणम् ।" रा.नि.व.२२। "सौवर्चलं सैन्धवञ्च विड्मौद्भिदमेव च । सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ॥" प.प.२श्र. । तद्गुणाः—"मधुरं कटविष्मूत्रं स्निग्धं सूक्ष्मं बलापहम् । वीर्य्योष्णं दीपनं तीक्ष्णं कफपित्तविवर्द्धनम् ॥" शार्ङ्ग.म.६अ. ।

**पञ्चलक्षणः** । त्रि । वातपित्तकफसन्निपातागन्तूनां लक्षणयुक्ते । व्रणस्य गन्धवर्णस्राववेदनाकृतिरूपलक्षणयुक्ते । सु चि.१अ. ।

**पञ्चलोह(क)म्** । क्ली । लौहाष्टकलौहे । रे.च. । सुवर्णरजततामवङ्गनागरूपेषु पञ्चसु धातुषु । "सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलोहकम् । वङ्गनागसमायुक्तं तन्याहुः पञ्चलोहकम् ।" इति प्रथमम् । समभागस्वर्णरजतताम्रवृत्तकृष्णायसेषु । "सुवर्णं रजतं ताम्रं वृत्तं कृष्णायसं समम् । ग्रहाङ्गमिति वा द्रव्यं द्वितीयं पञ्चलोहकम् ॥" इति द्वितीयम् । रा.नि.व.२२। वा.उ.३९अ. ।

**पञ्चवक्त्रः** । पुं । पञ्चमुखरुद्राक्षे । धातुः ।

**पञ्चवक्त्ररसः** । पुं । रसोऽयं सन्निपातज्वरे हितः । "गन्धेश-टङ्क-मरिचं विषं धत्तूरजैर्द्रवैः । दिनं सम्मर्द्दितं शुष्कं पञ्चवक्त्रो रसो भवेत् । आर्द्रकस्य रसेनैष दातव्यो रक्तिकामितः ॥" भा. ।

**पञ्चवटी** । स्त्री । बिल्वाश्वत्थवटाशोकोदुम्बरेषु । वै.निघ. ।

**पञ्चवर्णकः** । पुं । धुस्तूरकवृक्षे । वै.निघ. ।

**पञ्चवर्द्धनः** । पुं । पलाण्डुवृक्षे । रा.नि.व.८ ।

**पञ्चवल्कलम्**, **पञ्चवेतसम्** } क्ली । वटाश्वत्थोदुम्बरप्लक्षवेतसवल्कलेषु । বট, অশ্বথ, যজ্ঞডুমুর, পাকুড় ও বেতস ছাল । "न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्व्वैरेकत्र मिलितैः पञ्चवेतसमुच्यते ।" रा.नि.व.२२। शिरीषपिप्पलवटप्लक्षवेतसेषु । वा.उ.३६अ. । गुणाः—"त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित् ।" भा. । अपिच "न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षपादपाः । पञ्चैते क्षीरिणां वृक्षास्तेषां त्वक् पञ्चवल्कलम् । क्षीरवृक्षा हिमा वर्ण्या योनिरोगव्रणापहाः । रूक्षाः कषाया मेदोघ्ना विसर्पाश्मयनाशिनः । शोफपित्तकफास्रघ्नाः स्तन्या भग्नास्थियोजकाः ॥"

**पञ्चवीजम्** । क्ली । कर्कटीत्रपुषदाड़िमपद्मकपिकच्छुजेषु पञ्चवीजेषु । কাঁকুড়, শশা, দাড়িম, পদ্ম ও আলাকুশীর বীজ । राजिकाजमोदाजीरकतिलखसखसेषु । রাইশরিষা, যমানী, জীরা, তিল ও পোস্ত ।

**पञ्चवुद्धीन्द्रियम्** । क्ली । चक्षुःश्रोत्रघ्राणजिह्वास्पर्शेन्द्रियरूपे इन्द्रियपञ्चके ।

**पञ्चशस्यम्** । क्ली । धान्यतिलमुद्गयवश्वेतसर्षपेषु ।

**पञ्चशाखः** । पुं । हस्ते । रा.नि.व.१८ ।

**पञ्चशिखः** । पु । सिंहे । त्रिका. ।.

**पञ्चशुक्लः** । पुं । सौम्यकीटजातौ । सु.कल्प.८अ. । See कीटः ।

**पञ्चशूरणम्** । क्ली । शूरणपञ्चके अत्यम्लपर्णीकाण्डीरमालाकन्दशूरणारण्यशूरणात्मके । "अत्यम्लपर्णीकाण्डीरमालाकन्दद्विशूरणैः । प्रोक्तो भवति योगोऽयं पञ्चशूरणसंज्ञकः ॥" रा.नि व.२२ ।

**पञ्चशैरीषम्** । क्ली । शिरीषवृक्षस्य फलपत्रत्वङ्मूलपुष्पेषु समभागेषु । "शैरीषं कुसुमं मूलं फलं पत्रं त्वगित्ययं । कीटारिः कथितो योगः पञ्चशैरीषकाभिधः ॥" रा.नि.व.२२ ।

**पञ्चसर्पिणी** । स्त्री । ओषधिविशेषे । लक्षणं—"मण्डलैः कपिलैर्युक्ता सर्पाभा पञ्चसर्पिणी । पञ्चारत्निप्रमाणा ।" सु.चि.३०अ. ।

**पञ्चसार(राख्य)पानकम्** । क्ली, पुं । पानकभेदे । পানাবিশেষ । स चाभिनवकृत्पावस्य: कदलीपनसमिश्रोऽम्लरसमिश्रय । तदुक्तं—"द्राक्षामधूकखर्ज्जूरकाश्मर्य्यैः सपरूषकैः । तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् ।" वा.सू.५अ. । काश्मीरमधुखर्ज्जूरमृद्वीकाफालसाफलं । तेषां जलं गृहीत्वा तु एकीकृत्य पिबेदमून् । चातुर्जातेन्दुमरिचशर्करायार्द्रकादिकान् । यत्नेन गालयित्वा तत् पञ्चसाराख्यपानकम् । गुरु हृद्यं धातुकरं पित्ततृट्श्रमदाहनुत् ।" वै.द्रव्यगुणः ।

**पञ्चसाराम्बु** । क्ली । खर्ज्जूराद्यम्बुनि । "मधु-

खर्जूरमृद्वीकापद्मकसिताभया ।" वा.चि.२अ. ।

**पञ्चसिद्धौषधी** । स्त्री । पञ्चकन्दात्मकसिद्धौषधिषु । "तैलकन्द-सुधाकन्द-क्रोड़कन्द-रुदन्तिकाः । सर्पनेत्रयुताः पञ्च सिद्धौषधिक संज्ञकः ॥" रा.नि.व.२२ । See सिद्धौषधी ।

**पञ्चसुगन्धिकम्** । क्ली । कर्पूरकङ्कोललवङ्गजातीफलपूगेषु । "कर्पूरकङ्कोललवङ्गपुष्पगुवाकजातीफलपञ्चकेन । समांशभागेन च योजितेन मनोहरं पञ्चसुगन्धिकं स्यात् ॥" रा.नि.व.२२ ।

**पञ्चक्षारम्** । क्ली । यवपलाशसर्ज्जतिलमुष्ककजक्षारेषु । "यवमुष्ककसर्ज्जानां पलाशतिलयोस्तथा । क्षारैश्च पञ्चभिः प्रोक्तं पञ्चक्षाराभिधो गणः ॥" रा.नि.व.२२ । पञ्चलवणे । वै.निघ. ।

**पञ्चक्षीरवृक्षः** । पुं । वटाश्वत्थोडुम्बरपर्कटीगर्दभाण्डेषु । বট, অশ্বত্থ, যজ্ঞডুমুর, পাকুড়, গয়নুও । सि.यो.यक्ष्म.चि.सर्पिर्गुड़े । अन्यः— उदुम्बरवटाश्वत्थवेतसप्लक्षेषु वर्त्तते । "उदुम्बरो वटोऽश्वत्थो वेतसः प्लक्ष एव च ।" प.प्र.१ख. । See क्षीरवृक्षः ।

**पञ्चाङ्गम्** । क्ली । योगविशेषः । स चैकस्य वृक्षस्य समभागमिलितत्वक्पत्रफलमूलपुष्पात्मकः । "त्वक्पत्रकुसुमं मूलं फलमेकस्य शाखिनः । एकत्र मिलितं तच्चेत् पञ्चाङ्गमिति संज्ञितम् ॥" रा.नि.व.२२ । पुं । कच्छपे । श.मा. ।

**पञ्चाङ्गगुप्तः** । पुं । कच्छपे । त्रिका. ।

**पञ्चाङ्गिकपञ्चगणः** । पुं । स्वल्पमहत्पञ्चवल्लीकण्टकसंज्ञकेषु पञ्चमूलेषु । सि.यो.तृष्णा.चि. ।

**पञ्चाङ्गीबन्धः** । पुं । पञ्चाङ्गुलाकारव्रणबन्धविशेषे । "चिबुके चापि पञ्चाङ्गी हनुसन्धौ विसन्धिते । स्वेदयित्वा स्थिते सन्धौ कुर्य्यात्पञ्चाङ्गुलाकृतिम् ॥" सु.शा.७. । सु.चि.३अ. ।

**पञ्चाङ्गुलः** । पुं । श्वेतैरण्डे । एरण्डवृक्षे । रा.नि.व.८ । क्ली । तेजपत्रे । वै.निघ. ।

**पञ्चाङ्गुली** स्त्री । तक्रारीवृक्षे । रा.नि.व.५ । ऊर्द्ध्वजत्रुजव्रणस्य बन्धनविशेषे । सु.सू.१८अ. ।

**पञ्चाज्यम्** । क्ली । छागदध्यादिपञ्चके । वै.निघ. २भ.जीर्णज्व.चि. ।

**पञ्चात्मा** । पुं । शरीरान्तर्वायौ । यथा—"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।" निदा. ।

**पञ्चाननः** । पुं । शिवे । सिंहे । मे. ।

**पञ्चाननरसः** । पुं । हृद्रोगाधिकारे रसः । पाठः—"मृतकान्तौ द्रवैर्धात्र्या मर्दयेद्गोस्तनोद्भवैः । यष्टिखर्ज्जूरसलिलैर्दिनं हृद्रोगजिद्रसः । धात्रीचूर्णं सिताक्षौद्र पिबेद्रोगापनुत्तये ॥" रस.चि. ।

**पञ्चामृतम्** । क्ली । दुग्धादिपञ्चविधद्रव्यसमवाये । गुड़ूचीगोक्षुरतालमूलीमुण्डिकाशतावरीणां मिलितसमभागे । "गुड़ूची गोक्षुरश्चैव मुषली मुण्डिका तथा । शतावरीति पञ्चानां योगः पञ्चामृताभिधः ॥" গুলঞ্চ, গোক্ষুর, তালমূলী, মুণ্ডীরী, শতমূলী । रा.नि.व.२२ । इदमौषधं पञ्चामृतमुच्यते । द्वितीयं देवपूजनार्थम् । घृतमधुशर्करादधिदुग्धेषु । দুগ্ধ, দধি, ঘৃত, চিনি, মধু ।

**पञ्चामृतपर्पटी** । स्त्री । ग्रहण्यधिकारे । गन्धकं ८ तो. रसः २ तो. लौहं १ तो. अभ्रं ४ मा. ताम्रं ४ मा. पर्पटीवत् पाकः । रस.र. ।

**पञ्चामृतपिण्डः** । पुं । अश्वस्य बलपुष्टिकरपिण्डविशेषे । "कटुका च जयन्ती च ममरी सुरसा घनः । पञ्चामृतमयः पिण्डः...... ॥" नकुल. ११अ. ।

**पञ्चामृतयूषः** । पुं । कुलत्थादिपञ्चद्रव्यकृतयूषविशेषे । কুলথ, মুগ, অড়হর, মাষকলাই, বরবটী (বা রাজশিম্বীর বীজ) । यथा—"कुलित्थमुद्गाढ़कमाषकाणां निष्पावयुक्तश्च कृतोऽत्र यूषः । सन्दीपनः पाचनवातवृद्धिकरो लघुः स्यादरुचिप्रणाशः । ज्वरं बलासं श्वयथुमङ्गमर्दं चौषैत पञ्चामृतयूषकोऽयम् ॥" वै.निघ. ।

**पञ्चाम्रम्** । क्ली । तदाख्य-द्रव्यपञ्चके । यथा—"अश्वत्थमेकं पिचुमर्द्दमेकं न्यग्रोधमेकं दश पुष्पजातीः । द्वे द्वे तथा दाड़िममातुलुङ्गे पञ्चाम्र वापी नरकं न याति ॥"

**पञ्चाम्ल(फल)म्** । क्ली । १ । समभागमिश्रितकोलदाड़िमतिन्तिड़ीचुक्रकाम्लवेतसेषु । কুল, দাড়িম, তেঁতুল, চুকা, অম্লবেতস । २ । समभागमिलितजम्बीरनारङ्गाम्लवेतसतिन्तिड़ीबीजपूरकेषु । গোঁড়া, নারঙ্গা, অম্লবেতস, তেঁতুল, টাবালেবু । ३ । "कोलदाड़िमवृक्षाम्लचुक्रकैः साम्लवेतसाः । फलपञ्चाम्लमुद्दिष्टमम्लपञ्चफलं स्मृतम् ॥" ४ । "जम्बीरनारङ्गसहाम्लवेतसैः सतिन्तिड़ीकैश्च सबीजपूरकैः । समांशभागेन तु सेवितैरिदं द्वितीयमुक्तञ्च फलाम्लपञ्चकम् ॥" रा.नि.व.२२ । भा. ।

५ । "कोलदाड़िमहचाम्लचुक्रीकाचुक्रिकारसः। पञ्चाम्लको मुने लेपः सदा तृष्णां नियच्छति॥" शा.को.।

**पञ्चारविन्दम्।** क्ली। अरविन्दस्य मृणाल-विसकेसरपत्रबीजेषु। वा.उ.३८अ.।

**पञ्चालकः।** पुं। अग्निप्रकृतिकीटविशेषे। सु.कल्प.८अ.। See कीटः।

**पञ्चावस्थः।** त्रि। मृते।

**पञ्चाविकम्।** क्ली। गोपीदधिदुग्धघृतमूत्र-गलेषु। वै.निघ.२भ.जीर्णज्व.चि.।

**पञ्चास्यः।** पुं। सिंहे। अम.।

**पञ्चेन्द्रियम्।** क्ली। इन्द्रियपञ्चके। चक्षुः, कर्ण, नासा, जिह्वा, त्वक्। वाक्पाणिपादपायू-पस्थेषु।

**पञ्चोपविषम्।** क्ली। स्नुह्यर्ककरवीरलाङ्गलि-विषमुष्टिकेषु। मनसा, आकन्द, करवी, विषला-ङ्गलि, विषमुष्टि। 'स्नुह्यर्ककरवीराणि लाङ्गली विषमुष्टिकं। एतान्युपविषाण्याहुः।' रा.नि.व.२२।

**पञ्चोषणम्।** क्ली। पञ्चकोले। पिप्पली-पिप्पलीमूलचव्यचित्रकशुण्ठीषु। वै.निघ. ज्व. चि. अर्कादिः।

**पञ्चोष्माणः।** पुं। शरीरान्तःपञ्चविधपाच-काग्निषु। यथा—"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः। पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यमी। पार्थिवाः पार्थिवानेवं शेषाः शेषांश्च देहगान्॥" शा.को.।

**पञ्जरः (लः)।** पुं। पटोले। कोलकन्दे। रा.नि.व.७। क्ली। शरीरे। शरीरास्थिसमूहे। रा.नि.व.७। क्ली। शरीरे। शरीरास्थिसमूहे। त्रिका.।

**पञ्जरास्थि।** क्ली। पञ्जरस्य चतुर्विंशत्यस्थिषु। च.शा.७अ.।

**पटम्।** क्ली। सूक्ष्मे। गन्धतृणे। र.मा.। पुं। कार्पासे। वै.निघ.। प्रियालवृक्षे। मे.। रस.र. बाल.चि.।

**पटच्चरम्।** क्ली। जीर्णवस्त्रे। वै.निघ.।

**पटदः।** पुं, स्त्री (दा)। कार्पासक्षुपे। र.मा.।

**पटरकः।** पुं। गुन्द्रतृणे। रा.नि.व.८।

**पटरञ्जनम्।** क्ली। पतङ्गे। रक्तचन्दने।

**पटलः।** पुं। कासमर्दवृक्षे। कार्पासवृक्षे। वै.निघ.। पटोलवृक्षे। त्वचि। त्वक्। भा.। क्ली। दृष्ट्यावरकच्छदिरूपे नेत्ररोगे, तिमिरादौ। मा.नि.। तच्चतुर्विधम्। तत्र प्रथमं बाह्यं पटलं रक्तरकाश्रयम्, द्वितीयं मांसाश्रयं, तृतीयं मेदः-संश्रयं, चतुर्थञ्च कालकास्थिसंश्रयम्। "अधस्तादुप-रिष्टाद्वा पटलं यस्य जायते। रुणद्धि नयने सद्यः ......॥" न.द.३०अ.। See तिमिरः।

**पटवासः।** पुं। पिष्टातके। आबीरे।

**पटाकः।** पुं। पक्षिभेदे।

**पटालुका।** स्त्री। जलौकायाम्। त्रिका.।

**पाटिः(का)।** स्त्री। कुम्भिकायां। मे.। वस्त्रे।

**पटीरम्।** क्ली। मूलके। भा.म.३भ.अग्नि.चि.। चन्दने। प.मु.। पुं। खदिरवृक्षे। उदरे। उणा.। वंशलोचने। सन्निपाते। वै.निघ.।

**पटुः (कः)।** पुं। पटोललतायाम्। प.मु.। कारवेल्ल्यां। উচ্ছে গাছ। रा.नि.व.३। शिम्बी। रा.नि.व.१८। चीनकर्पूरे। चोरकनामगन्धद्रव्ये। रा.नि.व.१२। लवणे। मे। क्ली। पटोलपत्रे। विश्व.। पांशुलवणे। प.मु.। जीरके। वचायां। वच। छिक्किन्याम्। হেঁচেতা। वै.निघ.। क्ली। (कं) पटोलविशेषे। त्रि। रोगमुक्ते। रा.नि.व.२०।

**पटुतूल (तृण) कम्।** क्ली। लवणतृणे। रा.नि.व.८।

**पटुत्रयम्।** क्ली। लवणत्रये, विट्सैन्धवसौवर्चल-लवणेषु। वै.निघ.२भ.संग्रहण्या चि.।

**पटुपञ्चकम्।** क्ली। लवणपञ्चके। পঞ্চলবণ। See पञ्चलवणम्।

**पटुपत्रिका।** स्त्री। चौरिकायां। क्षुद्रक्षुपक्षुपे। रा.नि.व.४।

**पटुपर्णिका।** स्त्री। क्षीरिणीक्षुपे। থিরুই। रा.नि.व.४।

**पटुपर्णी।** स्त्री। स्वर्णक्षीर्याम्। সোণাথিরুই, শেয়ালকাঁটা। अम.। [व.६।

**पटुभेदनिका।** स्त्री। कृष्णजीरके। रा.नि.

**पटोलिका।** स्त्री। नागवल्लीभेदे। पीटकुलि-केति ख्याते। रा.नि.व.११। See नागवल्ली।

**पटूत्तमम्।** क्ली। सैन्धवलवणे। रा.नि.व.६।

**पटेरकम्** । क्ली । मुस्तकवृक्षे । वै.सं. ।

**पटोटजम्** । क्ली । छत्राके । श.र. ।

**पटोलः** । पुं । Trichosanthes dioica Roxb.) स्वनामख्यातफलशाकविशेषे । পলতা লতা । हिं परवल । मं. कडिपडवळ, कडुपडौलन कं मोगवल्ली । तें कोम्मुपोटल । गुर्ज. पुरनिहारवेपिलवर्णी । ता.-कौन्नुपडले । कान्यकुब्जे नोरहड़ी । तत्पर्य्यायाः,—कुलकं, तिक्तकः, पटुः, पटुकः, कर्कशदलः, कुलजः, वाजिमान्, लताफलः, राजफलः, राजपटोलः, वरतिक्तः, अमृताफलः, तिक्तभद्रकः, कटुफलः, कटुकः, कटुः, कर्कशच्छदः, राजनामा, अमृतफलः, पाण्डुः, पाण्डुफलः, बीजगर्भः, नागफलः, कुष्ठारिः, कासमर्द्दनः, पञ्चरः, राजीफलः, ज्योत्स्नी, कच्छुघ्नी । गुणाः—"पटोलः कटुतिक्तोष्णः रक्तपित्तबलासजित् । कफकण्डूतिकुष्ठासृग्ज्वरदाहाशिनाशनः ॥" रा.नि.व.३ । तन्मूलादिगुणाः—"पटोलस्य भवेन्मूलं विरेचनकरं सुखात् । नालं श्लेष्महरम्पत्रम्पित्तहारि फलं पुनः । दोषत्रयहरम्प्रोक्तं तद्वच्चिक्ता पटोलिका ॥" भा. । फलं रक्तपित्तघ्नम् । मि.वी.र.पि.चि. । पत्रं पित्तघ्नं, नालं कफघ्नं, फलं त्रिदोषघ्नं, मूलं विरेचनम् । रा.नि. व.७ । क्ली । पाण्डुफले । পটোল । वा.सू.१५ अ. ।

**पटोलकः** । पुं । शुक्तौ । श.मा. ।

**पटोलपत्रम्** । क्ली । वल्लीशाकभेदे । পলতা-নতি । रा.नि.व.७ । See पटोलः ।

**पटोलादिः** । पुं । पटोलचन्दनकुचन्दनमूर्व्वागुडूचीपाठाकटुरोहिणीकृते पञ्चद्रव्यकषाये । गुणाः—"पटोलादिर्गणः पित्तकफारोचकनाशनः । ज्वरोपशमनो वण्यः छर्द्दिकण्डूविनाशनः ॥" सु. । अन्यः—पटोलवारिवाकुस्तपाठाकटुकरोहिणीसाधितकषाये । अयं ज्वरतन्त्रज्वरशमनः । वा.चि.१ अ. । अन्यच—पटोलनिम्बत्रिफलामृद्वीकामुस्तवत्सकजाते कषाये । अयं पर्वेणुक्ते हितः । अपरः—पटोलरक्तचन्दनमूर्व्वातिक्तापाठागन्धाभिः । च.द. ।

**पटोलिका (लौ)** । स्त्री । स्वादुपटोलनामफलशाकविशेषे । স্বাদুপটোল, পোরল, বা ধুন্দুল । हिं मिठपौडलि । तत्पर्य्यायाः,—ज्योत्स्ना, ज्योत्स्नी, जाली । मे. । गुणाः—स्वादुः पित्तघ्नी रुचिकृत् ज्वरघ्नी बलकरी दीपनी पाचनी च । रा.नि.व.७ । च.द.ज्वर.चि. ।

**पट्टः** । पुं । पेषणशिलायाम् । अयमन्नपट्टश्चि । পঁঠৌ । सु.सू.५८ । पट्टशाके । পাটশাক । श.मा. ।

**पट्टर(ङ्ग)म् (रञ्जक[न,क]म्) (रागम्)** । क्ली, पु । पत्राङ्गचन्दने । বকম কাঠ । रा.नि.व. १२ ।

**पट्टशाकः** । पुं । (Corchorus capsularis or C. olitorius.) शाकविशेषे । পাটশাক, নালিতাপাতা । हिं पटुया । गुणाः—रक्तपित्तहरः विष्टम्भी वातकोपनश्च । भा. ।

**पट्टिकः** । पुं । ताम्रवर्णरोध्रे । श.टी.रा. ।

**पट्टिका (ख्यः)** । स्त्री, पुं । ताम्ररोध्रे । রক্তবর্ণ লোধ । अम. ।

**पट्टिकारो(ल)ध्रः** । पुं । स्वनामख्यातलोध्रे, रक्तरोध्रे । পাটিয়া লোধ । तत्पर्य्यायाः,—क्रमुकः, लाक्षाप्रसादः, लाक्षाप्रसादनः, पट्टिका, पट्टिलोध्रः, पट्टिलोध्रकः, पट्टी, वल्कलोध्रः, बृहद्दलः, जीर्णबुध्नः, बृहद्वल्कः, शीर्णपत्रः, अक्षिभेषजः, शावरः, श्वेतलोध्रः, गालवः, बहुलत्वचः, वल्कः, स्थूलवल्कलः, जीर्णपत्रः, बृहत्पत्रः । गुणाः—ग्राही लघुः पित्तरक्तपित्तातिसारशोथघ्नश्च । भा. । कषायः शीतलः वातकफरक्तविषघ्नः चक्षुष्यः । तत्र वल्करोध्र एव श्रेष्ठः । रा.नि.व.६ ।

**पट्टिलः** । पुं । (Coesalpinia bonduccella.) वृक्षविशेषे । পূতিকরঞ্জ । जटा. ।

**पट्टिलोध्रः (कः)** । पुं । पट्टिकालोध्रे । श.र. ।

**पट्टी (ट्टिन्)** । पुं, स्त्री । लोध्रवृक्षे । श.टी.भ. । रक्तरोध्रे । रा.नि.व.६ ।

**पणः** । पुं । कपर्द्दे । वै.निघ.२भ.मधुरत्व.चि. विसूचिकाकषाये । ५गुञ्जामाने । प.प्र. ।

**पणदा** । स्त्री । मण्डमायाम् । रा.नि.व.२३ ।

**पणशः (सः)** । पुं । (Artocarpus integrifolia.) कण्टकिफलवृक्षे । কাঁঠাল গাছ । हिं कटहर । मं फणस । कं हलसिन । तें पनस्, पनस । ता. पिला । तत्पर्य्यायाः,—कण्टकिफलः, कण्टाफलः, चाम्पेयः, मुरजफलः, पनसः, फलसः, चम्पकालुः, चम्पाकोषः, चम्पालुः, रसालः, मृदङ्गफलः, पानसः, महासर्ज्जः, फलिनः, फलवृक्षकः,

कण्टाफलः, मूलफलदः, अपुष्पफलदः, पूतफलः। गुणाः—फलं मधुरं पिच्छिलं गुरु हृद्यं बलवीर्य्यवृद्धिकरं श्रमदाहशोषघ्नं रुचिकरं ग्राहि दुर्ज्जरञ्च। तद्वीजम् ईषत्कषायं मधुरं वातलं गुरु तत्फलविकारघ्नं त्वग्दोषघ्नञ्च। बालपनसफलन्तु नीरसं हृद्यञ्च। मध्यपक्वं तत् दीपनं रुचिदं लवणादियुक्तञ्च। रा.नि.व.११। पक्वफलं रक्तवर्द्धकं मधुरं शीतलं दुर्ज्जरं वातपित्तघ्नं श्लेष्मशुक्रबलकरञ्च। तद्वीजं रक्तपित्तघ्नं स्वादु फलतुल्यगुणञ्च। तदपक्वफलं कषायं स्वादु वातलं शीतलञ्च। राज.। तन्मज्ज (भूँति) गुणाः—शुक्रलं त्रिदोषघ्न विशेषेण गुल्मिना न हितम्। रा.नि.व.११। अस्य क्वाथः मांसग्रन्थिशोफे, तन्मज्ज (भूँति) अण्डवृद्धौ, कोमलपल्लवः चर्म्मरोगे च हितः।

**पणास्थिकम्।** क्ली। वराटके। कड़िनिका.। हे.च.।

**पणिकावर्त्तः।** पुं। राजावर्त्तमणौ। प.सु.। See आवर्त्तः।

**पण्डः (कः)।** पुं। नपुंसके। अम.।

**पण्यविलासिनी।** स्त्री। नखीनामगन्धद्रव्ये। रा.नि.व.१२।

**पण्या।** स्त्री। ज्योतिष्मतीलतायाम्। लताफटकी। वै.निघ.।

**पण्यान्धः (न्धा)।** पुं, स्त्री। स्वनामख्याततृणे। मं पणधे। कं हमजेमुरु। तत्पर्य्यायाः,—पणधा, पणन्धा, पणधा, कङ्गुणी। सा दीर्घा मध्या ह्रस्वा च इति त्रिधा। एतासु मध्यमा रसवीर्य्यविपाकेषु गुणाधिका। अपरद्वय समवीर्य्यं, तिक्तं क्षारं धारणञ्च, तत्कालशस्त्रघातव्रणरोपणञ्च। रा.नि.ष.८।

**पतगः।** पुं। पक्षिणि। अम.।

**पतङ्गः (मः)।** पुं। पक्षिणि। अम.। जलमधूकवृक्षे। रा.नि.व.१६। रक्तशालौ। मे.। वा.सू.६अ.। च.सू.२७अ.। क्ली। पारदे। मे.। पत्तङ्गचन्दने। वकम काठ। श.च.।

**पतङ्गमः।** पुं। पक्षिणि। व्याकरणम्।

**पतङ्गिका।** स्त्री। पुत्तिकानाममधुमक्षिकायाम्। अम.। तत्पर्य्यायौ,—पुत्तिका, पूत्तिका।

**पतङ्गा।** स्त्री। शालिधान्यभेदे।

**पतत्रम्।** क्ली। पक्षे। अम.।

**पतत्रिः (त्री)।** पुं। पक्षिणि। अम.।

**पतत्रीरः।** पुं। श्येनपक्षिणि। बाज। श.र.।

**पतसः (सः)।** पुं। पक्षिणि। पतङ्गे। उणा.।

**पताका।** स्त्री। चिह्ने। नाटा.।

**पतिः।** पुं। मूले। गतौ। अम.।

**पतिकाविरम्।** क्ली। पित्तलाख्यमिश्रधातुभेदे।

**पतिम्वरा।** स्त्री। कृष्णजीरके। श.च.।

**पतिश्यायः।** पुं। प्रतिश्याये। हि.।

**पतेरः।** पुं। पक्षिणि। आढ़के। उणा.। गर्त्ते।

**पत्।** पुं। पादे। रा.नि.व.१८।

**पत्त(त्र)ङ्गम्।** क्ली। Caesalpinia sappan.) रक्तकाष्ठविशेषे, पत्राङ्गे। वकम् काठ। हिं पतङ। तें ओकनुकट्टु। उत्. वकमी। गुर्ज. पारस. ता. वट्टङ्गी। र.मा.। भा.उ.वाग्डी.। तत्पर्य्यायाः,—पत्ताङ्ग, रक्तकाष्ठं, सुरङ्गदं, पत्तान्यं, पट्टरङ्ग, पट्टरङ्गकं, भार्य्यावृक्षः, रक्तकं, लोहितं, रङ्गकाष्ठं, रोगकाष्ठं, कुचन्दनं, पट्टरञ्जनकं, सुरङ्गम, रक्तसारं, रञ्जनं, पत्तूरम्। गुणाः—"पत्तङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रनुत्। हरिचन्दनवद्वेद्यं विशेषाद्दाहनाशनम्। चन्दनानि च सर्व्वाणि सदृशानि रसादिभिः। गन्धेन तु विशेषोऽस्ति पूर्व्वः श्रेष्ठतमो गुणैः। भा.। रक्तचन्दने। श.र.। सु.चि.२१अ.। "पत्तङ्गं रक्तचन्दनम्।" भा.क्षुद्र.रो.चि.कुङ्कुमाद्यतैले। काष्ठक्वाथः रजोबाहुल्यकारी मलसंग्राही च। पुं। भृङ्गराजे। भीमराज। र.मा.। केशराजे। কেশুত্তে।

**पत्तूरः (रा)।** पुं, स्त्री। शालिञ्चशाके। र.मा.। च.द.सि.यो.क्रमि.चि.। सु.चि.१९अ.। जलपिप्पल्याम्। पर्कटीवृक्षे। वै.निघ.। शमीवृक्षे। भैष. ने.रो.चि.। क्ली। कुचन्दने। भा.। सु.सू. ३९अ. वातशमने। पत्तङ्गे। वै.निघ.।

**पत्रम्।** क्ली। छदे। পাতা। अम.। तेजपत्रे। रा.नि.व.६। सु.सू.३८अ.एलादिः। वा.चि.१अ.। "पत्र कटुकरोहिणी।" पक्षिपक्षे। मे.।

**पत्रकः।** पुं। पलाशवृक्षे। रा.नि.व.२३।

**पत्रकल्वाम्।** क्ली। गन्धवृद्ध्यर्थम् उष्ण एव सन्निपत्य पक्वतैले यत् कर्पूरमृगनाभ्यादिकं दीयते। गन्ध नशना देउया। "पक्वे तैलेऽम्बुना एव सम्यग्-

यत् पेष्य वर्त्तितम्। दीयते गन्धवृद्ध्यर्थं पत्रकल्कं तदुच्यते ॥" च.द वा.व्या.चि.महासुगन्धितैले।

**पत्रकीट:**। पुं। शालिञ्चशाके।

**पत्रगुप्त:**। पुं। स्नुहीवृक्षभेदे। তেকাঁটাসিজু। श.च.।

**पत्रघ(ध)ना**। स्त्री। सातलायाम्. सेहुण्डे। মনসা গাছ। रा.नि.व.८।

**पत्रजासव:**। पुं। पटोलतालपत्रीत्यासवे। च.सू.२५अ.।

**पत्रतण्डुला (ली)**। स्त्री। यवतिक्तायाम्। रा.नि.व.७।

**पत्रतरु:**। पुं। विट्खदिरवृक्षे। रा.नि.व.८।

**पत्रतालकम्**। क्ली। वंशपत्रहरिताले। वै.निघ.।

**पत्रदारक:**। पुं। क्रकचे। করাত। त्रिका.।

**पत्रद्रुम:**। पुं। ताड़ीवृक्षे।

**पत्रनाड़िका**। स्त्री। ताम्बूलीशिरायाम्, पत्रशिरायाम्। जटा.।

**पत्रनामकम्**। पुं। तेजपत्रे। वै.निघ.।

**पत्रपरशु:**। पुं। अस्त्रविशेषे। ছেনী।

**पत्रपाल:**। पुं। वृहच्छुरिकायाम्। हे.च.।

**पत्रपाली**। स्त्री। अस्त्रविशेषे। কাঁচি। हला.।

**पत्रपिशाचिका**। स्त्री। वारिवायां। টোকা, পেকে। त्रिका.। हारा.।

**पत्रपुष्प:**। पुं। Ocymum pilosum) रक्ततुलसीवृक्षे। श.च.।

**पत्रपुष्पक:**। पुं। भूर्जवृक्षे। श.मा.।

**पत्रपुष्पा**। स्त्री। Ocymum Sanetum) तुलसीवर्गविशेषे। श.मा.। क्षुद्रपत्रतुलस्यां। र.मा.।

**पत्रभद्रा**। स्त्री। वृहज्जीवन्त्याम्।

**पत्रमाल:**। पुं। वेतसवृक्षे। वै.निघ.।

**पत्रयौवनम्**। क्ली। नवाङ्कुरे। जटा.।

**पत्ररथ:**। पुं। पक्षिणि। अम.।

**पत्रलम्**। क्ली। पत्तलदुग्धे। वै.निघ.। द्रप्से। পাতলা দই। हे.च.।

**पत्रवर्ण:**। पुं। सप्तपर्णवृक्षे। रा.नि.व.१२।

**पत्रवल्ली**। स्त्री। पत्ररघनायाम्। हे.च.।

रुद्रजटायाम्। पलाशीलतायाम्। रा.नि.व.३।

**पत्रविषम्**। क्ली। विषपत्रिकादौ। तानि च विषपत्रिकालम्बावरदारुककरम्भमहाकरम्भानीति पञ्च। गुणा—"जृम्भाङ्गोद्वेष्टनश्वासा ज्ञेया पत्रविषेण तु।" सु.कल्प.२अ। "जृम्भणं वेपनं श्वास: नृणां पत्रविषैर्भवेत्।" भा.।

**पत्रवृश्चिक:**। पुं। तन्नामकाग्निप्रकृतिककीटे। सु.कल्प.८अ। See कीट:।

**पत्रशङ्ख:**। पुं। सप्तपर्णवृक्षे। 'ছাতিম।

**पत्रशाक:**। पुं,क्ली। भक्ष्यशाकवृक्षमात्रे। तच्च षड्विधम्। "पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा। शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम्॥" राज.। पत्रशाकगणो यथा—काकमाचीकासमर्द-पुनर्नवा-पूतिका पटोलपत्र मेघनाद-शालिञ्च-हिल-मोचिकापालङ्कसुनिषण्णकमिति। "द्विवास्तूकं द्वि: पीतकौ त्रिसर्षपस्तण्डुलीयक। द्विधा पालक्यपि द्वेधा पट्या कालशाककम्। करवी लोणिका घोली चुच्चुशाङ्गेरिचुक्रिका। सुनिषण्णकगोजिह्वा-द्रोणपुष्पीपटोनकम्। शतपुष्पा मेथिरा च कुञ्जर-लोलाकण्टक:। धान्यकं द्विशकवर्त्ती जीवन्ती काकमाचिका। पर्पट: कासमर्दश्च द्विधा राजगिरीतक:। ......द्विधा कोष्ठ: पत्रशाकगणस्त्वयम्॥" भर्क.। [हारा.।

**पत्रशिरा**। स्त्री। पर्णनाड्यां। পাতের শিরা।

**पत्रश्रृङ्गी**। स्त्री। मूषिककर्णिकायाम्। इन्दूर-कानी। वै.निघ.। [रा.नि.व.३।

**पत्रश्रेणी**। स्त्री। मूषिकपर्ण्याम्। द्रवन्त्याम्।

**पत्रश्रेष्ठ:**। पुं। विल्ववृक्षे। रा.नि.व.११।

**पत्रसुन्दर:**। पुं। शीघ्रसुन्दरके। শীঘ্রশাক।

**पत्रसूचि:**। पुं। कण्टके। त्रिका.।

**पत्रहिमम्**। क्ली। हिमे। दुर्दिने। त्रिका.।

**पत्राख्यम्**। क्ली। तेजपत्रे। श.च.। तालीशपत्रे। रा.नि.व६।

**पत्राङ्गम्**। क्ली। Soymida febrifuga or Caesalpinia Sappan. Syn. Swietenia febrifuga.) Rohan tree. स्वनामख्यातसप्तविधचन्दनान्यतमचन्दने। पत्तङ्ग। वक्म्, রোহন্। हिं यम. पत्तङ्। तैं चेयमनु। गुणा:—कटु-रुक्षाम्ल-शीतं वात-पित्त-ज्वरोन्माद-

विस्फोटकघ्नश्च । रा.नि.व.१२ । अस्य त्वक्क्वाथः उदरामये रक्तातिसारे च परिषेके हितः । रक्तचन्दने । अम. । भूर्जपत्रे । पद्मकाष्ठे । मे. । See पत्तङ्गम् ।

**पत्राढ्यम्** । क्ली । तृणाढ्यतृणे । गन्धतृणविशेष । पर्वततृणे । रा.नि.व.८ । पत्राङ्गचन्दने । रा.नि.व.१२ । पिप्पलीमूले । रा.नि.व.६ । वंशपत्रहरिताले । तालीशपत्रे । वै.निघ. ।

**पत्राम्ला** । स्त्री । चुक्रिकायाम् । चूका पालङ् । भा । See चुक्रा ।

**पत्रालुः** । पुं । इक्षुदर्भतृणे । रा.नि.व.८ । काशालौ । रा.नि.व.७ ।

**पत्रावलिः (ली)** । स्त्री । गैरिके । श.च. । ईश्वरीलतायाम् । वै.निघ. ।

**पत्रिकम्** । क्ली । तेजपत्रे ।

**पत्रिका (त्त्रा)** । स्त्री । जातीपत्र्याम् । जवित्री । वै.निघ.२भ.कृमि.चि.सुवर्चिकादिचूर्णे ।

**पत्रिकाख्यः** । पुं । कर्पूरभेदे । रा.नि.व.१२ ।

**पत्रिकापत्रम्** । क्ली । तालीशपत्रे । वै.निघ. ।

**पत्रिणी** । स्त्री । नवाङ्कुरे । पल्लवे । श.च. ।

**पत्री (इन्)** । पुं । शालवृक्षे । र.मा. । पक्षिणि । वृक्षे । श्येनपक्षिणि । मे. । स्त्री । दमनकक्षुपे । दन्ती । च.द महासुगन्धतैलं । गङ्गापत्री । रा.नि.व.१० । दुरालभायाम् । खदिरवृक्षे । तालवृक्षे । जातापत्र्याम् । वै.निघ. । महातेजपत्रे । च.द.वा.व्या.चि.महाराजप्रसारणीतैले ।

**पत्रैला** । स्त्री । एलायाम् । वै.निघ. ।

**पत्रोपस्करः** । पुं । कासमर्दक्षुपे । हारा. ।

**पत्रोर्णः** । पु । श्योणाकवृक्षे । अम. । पीतलोध्रे । वै.निघ. । अशोकवृक्षे । क्ली । धौतकौषेये । अम. ।

**पत्राभासः** । पुं । पुष्पकलिकायाम् । वै.निघ. ।

**पथिका** । स्त्री । कृष्णद्राक्षायाम् । रा.नि.व.११ ।

**पथिद्रुमः** । पुं । शुक्लखदिरे । रा.नि.व.८ । खदिरश्च जटा. ।

**पथ्यम्** । क्ली । पादाहारे । "पादाहारं पथ्यमाहुः ।" रा.नि.व.२० । सैन्धवे । वै.निघ. । सामुद्रलवणे । हितभोजने । श.च. । पुं । हरीतकीवृक्षे । श.मा. । तण्डुलीयशाके । वै.निघ. ।

**पथ्यकरी** । स्त्री काकमाची । रा.नि.व.१६ ।

**पथ्यका** । स्त्री । मेथिकायाम् । वै.निघ. ।

**पथ्यकारी (इन्)** । पुं । षष्टिकधान्ये । रा.नि.व.१६ ।

**पथ्यभोजनम्** । क्ली । हितभोजने । भा. ।

**पथ्यशाकः** । पुं । तण्डुलीयशाके । नटिया शाक । रा.नि.व.५ ।

**पथ्यसुन्दरः** । पुं । हरीतकीवृक्षे ।

**पथ्या** । स्त्री । हरीतक्याम् । भा.पू १भ. । रा.नि.व.११ । च.द.वि.ज्व.चातुर्थके । चिर्भटायाम् । वन्ध्याकर्कोटक्याम् । मृगादन्याम् । रा.नि.व.२३ ।

**पथ्यापथ्यम्** । क्ली । रोगाणां हिताहितद्रव्ये ।

**पथ्यापथ्यविधिः** । पुं । रोगाणां पथ्यापथ्यनिर्णयग्रन्थे ।

[ वस्तुनि । मे. ।

**पदम्** । क्ली । पादे । रा.नि.व.१८ । वाक्ये ।

**पदकम्** । क्ली । निष्कमितस्वर्णे । वै.निघ. ।

**पदगण्डीरः** । पुं । श्लीपदरोगे ।

**पदन्यासः** । पुं । गोक्षुरक्षुपे । श.च. ।

**पदरथी (इन्)** । पुं । पादुकायाम् । त्रिका. ।

**पदरोहिणी** । स्त्री । वन्दाके । वान्दरा । वै.निघ. ।

[ याम । वै.निघ. ।

**पदवी** । स्त्री । भिण्डीक्षुपे । सॅाटी । नागबला-

**पदाकः** । पुं । सर्पे । वै.निघ. ।

**पदाङ्गी** । स्त्री । रक्तलज्जालुकायाम् । वै.निघ. । हंसपाद्याम् । रा.नि.व.५ ।

**पदारोही (इन्)** । पुं । वटवृक्षे । मद.५व. ।

**पदार्थः** । पुं । द्रव्यगतरसवीर्यादौ । स पञ्चविधः—"द्रव्यं रसो गुणो वीर्यं विपाकः शक्तिरेव च । पदार्थाः पञ्च तिष्ठन्ति स्वं स्वं कुर्वन्ति कर्म च ॥" भा. । "योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः ।" सु.उ.६५अ. ।

**पदिका** । स्त्री । रक्तलज्जालुकायाम् । हंसपाद्याम् । लज्जालुकायाम् । रा.नि.व ५ ।

[ २७अ. ।

**पदेन्द्राभः** । पुं । विष्किरपक्षिविशेषे । च.सू.

**पद्धिमम्** । क्ली । पादशीतलतायाम् । व्याक. ।

**पद्मम्** । पं, क्ली । Nelumbium Speciosum, Salvadora Indica.) कमल । पद्म । रा.नि.व.१० । हिं कमल । तें तम्मिपुव्वु । ता. अम्बल । तत्पर्य्यायाः,—नलिनं, अरविन्दं,

नलीनपलं, सहस्रपत्रं, कमलं, शतपत्रं, कुशेशयं, पङ्केरुहं, तामरसं, सारसं, सरसीरुहं, बिसप्रसून, वारिजं, राजीव, पुष्कर, अम्भोरुहं, कवारं, आम्यपत्र, वनशोभन, सरोरुह, जलजन्म, जलरुट्, जलरुह, सरोजं, सरोजन्म, सरोरुट, पङ्केज, पङ्कजं, अम्भोजं, अम्बुजं, सरसिज, श्रीवास, श्रीपर्णं, इन्दिरालयं, जलेजातं, अब्जं, कञ्जं, नलं, नालिकं, नालीकं, वनजं, अम्लानं, पुटकं, अब्जः। गुणाः—बीजं वान्तिहरं। पत्रशय्या शीतला ज्वरे दाहहरं। पुष्पं गुदभ्रंशहरं। "यत्र तु पद्मनिर्व्यस्ति तत्र प्रायः पद्मकेशरं ग्राह्यम्।" सि. यो.पि.श्लेष्मज्व.चि.श्रीकण्ठः। सि.यो.सन्निपातज्व. अभ्यङ्गे। च.द.वा.पि.ज्व.चि.। See कमलम्। श्वेतकमले। च.सू.४अ.। शौषधनी। रा.नि.व. १३। पुष्करमूले। रा.नि.व.६। भा.नि.। वै.निघ.२ भ.ज्व.चि.गुडूच्यादिः। नलि। वै.निघ.। पद्मकाष्ठे। धरणि.। व.निघ.अ.सा.चि.पद्मादिचूर्णे। भैष. कुष्ठ-चि.कन्दर्पसारतैले। धुस्तूरवृक्षे। पद्मकेसरे। च.द.गर्भाधिकारे मधुकादिः। पुं। गुग्गुलुविशेषे। "पद्मोमाणिक्यसम्भवः।" दर्वीकरसर्पभेदे। सु. कल्प.४अ.।

**पद्मकम्।** क्ली। पद्मकाष्ठे। পদ্মকাষ্ঠ। धरणि.। हिं पद्माक। तें एणुगुसदवि। तत्पर्य्यायाः,—पद्मकाष्ठं, पीतं, पीतव, मालेयं, शीतलं, हिमं, शुभं, केदारजं, रक्तं, पाटलापुष्पसन्निभं। गुणाः—'पद्मकं तुवरं तिक्तं शीतलं वातलं लघु। विसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्तहृत्। गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत्॥' भा.। शीतलं तिक्तं रक्तपित्तघ्नं मोहदाहज्वरभ्रान्तिकुष्ठविस्फोटघ्नञ्च। अपिच,—पद्मकं पद्मगन्धि स्यात् तथा पद्माह्वयं स्मृतं। पद्मकं तुवरं तिक्तं शीतलं वातलं लघु॥ विसर्पदाहविस्फोट-कुष्ठ-श्लेष्मास्रपित्तहृत्। गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत्॥ रा.नि.व.१२। तत्प्रशस्तं यथा—"पद्मकं सरलं भद्रकीटदोषविवर्जितम्।" भैष.। कुष्ठे। कूड़। रा.नि.व.१२। च.सू.८अ.। तन्नामकलूतादिकीटविषघ्नागदे। वा.उ.३७अ.।

**पद्मकण्टकः।** पु। तन्नामकक्षुद्ररोगभेदे। পদ্মকাঁটা রোগ। लक्षणम्—"ते पद्मकण्टका ज्ञेया यैः पद्ममिव कण्टकैः। चीयते नीरुजैर्वृत्तैः शरीरं कफवातजैः॥" वा.उ.३१अ.।

**पद्मकन्दः।** पुं। कमलकन्दे। পদ্মের গেঁড়ো वा शालूक। हिं कमलकन्द। तत्पर्य्यायाः,—शालूक, शालूकं, पद्ममूलं, कटाह्वयं, जलालुकं। गुणाः—कटुः विष्टम्भी रूक्षः रुच्य. कफघ्नः कषायः कासपित्तघ्नः तृष्णादाहघ्नश्च। रा.नि.व.१०। शालूकं शीतलं वृष्यं पित्तदाहास्रगुरु दुर्ज्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम्। संग्राहि मधुरं रुच्यं भिषाख्यमपि तद्गुणम्॥" भा.। स्त्री (न्दा)। जलपर्णिविशेषे। वै.निघ.।

**पद्मकर्कटः (टी)।** पुं, स्त्री। कमलाक्षे। পদ্মবীজ। वै.निघ.। रा.नि.व.१०। [निघ.।

**पद्मकर्णिका।** स्त्री। कमलकर्णिकायाम्।

**पद्मकादिगणः।** पुं। पद्मकपुण्डरीकवृद्धितुगर्द्धिशृङ्ग्यमृतादशजीवनसंज्ञकपे। गुणाः—स्तन्यकराः वातपित्तघ्नाः प्रीणनादिगुणयुक्ताश्च। वा. सू.१४। १५अ.।

**पद्मकाष्ठम्।** क्ली। स्वनामख्यातसुगन्धकाष्ठे। পদ্মকাষ্ঠ। रा.नि.व.१२।

**पद्मकाह्वयम्।** क्ली। पद्मकाष्ठे। च.द.वा.व्या. चि.एकादशशतीमहाप्रसारणीतैले। "फाल्गुनीद्विनिशाचौद्रसर्पिर्भिः पद्मकाह्वयम्।"

**पद्मकिञ्जल्कः।** पुं। पद्मकेसरे। वै.निघ.।

**पद्मकी (इन्)।** पुं। भूर्ज्जवृक्षे। श.मा.।

**पद्मकीटः।** पुं। अग्निप्रकृतिकीटविशेषे। सु. कल्प.८अ.। See कीटः।

**पद्मकेश(स)रः।** पुं, क्ली। पद्मकिञ्जल्के। পদ্মরেণু। रा.नि.व.१०। च.द.वा.पि.ज्व.चि.। "त्रिफलां पद्मकेशरम्।" सु.सू.३८अ. प्रियङ्ग्वादिः। च.सू.४अ.। गुणाः—मलसंग्राहि शीतलं दाहघ्नम् अर्शसः स्रावहरञ्च। राज.। [भा.।

**पद्मगन्धकम् (गन्धि)।** क्ली। पद्मकाष्ठे।

**पद्मचारटी।** स्त्री। स्थलकमलिन्याम्। স্থলপদ্ম। वै.निघ.। नवनीतखोट्या। च.द.विष-चि.।

**पद्मचारिणी।** स्त्री। भार्ग्यां। বামনহাটী। प.मु.। शमीवृक्षे। हरिद्रायां। लाक्षायां हडौ। मे.। रा.नि.व.२३। (Hibiscus mutabilis.) स्थलपद्मायाम्। या उत्तरापथे स्वनाम्ना ख्याता। तत्पर्य्यायाः,—अव्यथा, अतिचरा, पद्मा, चारटी। गुणाः—"पद्मानुणा कटुस्तिक्ता कषाया कफवातजित्। मूत्रकृच्छ्राश्मशूलघ्नी श्वासकासविषापहा।" भा.।

**पद्मतन्तुः** । पुं । मृणाले । रा.नि.व १० ।

**पद्मतीर्थम्** । क्ली । पुष्करमूले । वै.निघ. ।

**पद्मदशनः** । पुं । सर्ज्जरसे । वै.निघ. । श्रीवास । लोवान् इति भाषा । श.च. ।

**पद्मनाड़िका** । स्त्री । स्थलपद्मिन्यां । वै.निघ. ।

**पद्मनालम्** । क्ली । कमलनाले । पद्मेर डाँटा । रा.नि.व.१० । [ १६ ।

**पद्मनेत्रः** । पुं । जलचरपक्षिभेदे । रा.नि.व.

**पद्मपत्रम्** । क्ली । आमगन्धे । रा.नि.व.२३ । पुष्करमूले । रा.नि.व.६ । पद्मदले । पद्मेर पाता । वै.निघ. ।

**पद्मपला** । स्त्री । स्थलपद्मिन्याम् । वै.निघ. । कर्पूर-हरिद्रायाम् ।

**पद्मपर्णम्** । क्ली । पद्मपत्रे । वै.निघ. । पुष्करमूले । अ.टी. ।

**पद्मपुष्करजम्** । क्ली । पुष्करमूले । रा.नि व.६ ।

**पद्मपुष्पः** । पुं । पारिभद्रकवृक्षे । पिकाङ्गपक्षिणि । वै.निघ. । ( Webera Corymbosa. ) -कर्णिकारवृक्षे । कनके फूल । श.च. ।

**पद्मबन्धुः** । पुं । भ्रमरे । सूर्य्ये ।

**पद्ममधु** । क्ली । पद्मपुष्पाहृतमाक्षिके । पद्मेर मधु । गुणाः,—अरविन्दाहृतः शीतो मकरन्दोऽतिबृंहणः । त्रिदोषशमनः सर्व्वनेत्रामयनिसूदनः ॥

**पद्ममुखी** । स्त्री । कण्टकार्य्याम् । वै.निघ. । दुरालभायाम् । श.च. ।

**पद्ममूलम्** । क्ली । पद्मकन्दे । शालूक । रा.नि. व.१० । चि क्ष.क.गर्भ.चि. ।

**पद्मरक्ता** । स्त्री । पद्मगन्धावृक्षे ।

**पद्मरजः** । क्ली । पद्मकेसरे । वा.सू.२अ.प्रिय-ङ्ग्वादः । "पद्मादजो योजनवल्ल्यनन्ता ।"

**पद्मरागः** । पुं । रक्तवर्णे माणिक्यभेदे । See माणिक्यम् ।

**पद्मरेणुः** । पुं । पद्मकेसरे । वै.निघ. ।

**पद्मलाञ्छनः** । पुं । सूर्य्ये । मे. ।

**पद्मवती** । स्त्री । स्थलपद्मिन्याम् । वै.नि. । कमलिन्यां । पद्मेर झाड़ । रा.नि.व.५ ।

**पद्मवर्णः** । त्रि । लोहितवर्णे । भा.४अ. । "पद्मवर्णो महापद्मः ।"

**पद्मवर्ण(क)म्** । क्ली । पद्मकाष्ठे । वै.निघ. । पुष्करमूले । जटा. ।

**पद्मबीजम्** । क्ली । कमलबीजे । पद्मेर बीचि । हिं कमलगाट्टा । पद्माच इति महाराष्ट्रकर्णाटयोः ख्यातम् । तत्पर्य्यायाः,—पद्माक्षं गालोड्यं, कन्दली, भेण्डा, क्रौञ्चादनी, क्रौञ्चा, श्यामा, पद्मकर्कटी । गुणाः—कटु स्वादु पित्तघ्नं छर्दिकरं दाहरक्तशमनं पाचनं रुच्यञ्च । रा.नि.व.१० । "पद्मबीजं हिमं स्वादु कषायं तिक्तकं गुरु । विष्टम्भि वृष्यं रुच्यञ्च गर्भसंस्थापकं परम् । कफवातकरं बल्यं ग्राहि पित्तास्रजित्...... ॥" भा. ।

**पद्मबीजाभम्** । क्ली । मखान्नफले । माखना इति भाषा । भा. ।

**पद्मिवृक्षः** । पुं । पद्मकाष्ठतरौ । रा.नि.व.२३ । नन्दीवृक्ष । रा.नि.व.१२ ।

**पद्मशायिनी** । स्त्री । जलचरपक्षिभेदे । वै.निघ. ।

**पद्मा** । स्त्री । पद्मचारिण्याम् । स्थलपद्म । रा. नि व २३ । च.वि ८अ. । वा.सू.१५अ. । भार्ग्याम् । वामनहाटी । च.सू.४अ. । चि ३अ. । च.द.गर्भस्रावे । भा.म.४अ. गर्भ-चि. । सु चि.२अ. । "समङ्गा रजनी पद्मा ।" तन्नामकौषधौ । या पद्माकारा पद्मगन्धा पद्मवद्रक्ता च । 'पद्माकारा पद्मरक्ता पद्मगन्धा । च.चि.१अ.कन्दर्पसारतैले । मञ्जिष्ठायाम् । मृणाले । वै.निघ. । लवङ्गे । अम. । मनसादेव्यां । मे. । फञ्जिकायां । श.र. । कुसुम्भपुष्पे । र.मा. ।

**पद्माकरः** । पुं । तड़ागे । अम. ।

**पद्माटः** । पुं । चक्रमर्दक्षुपे । चाकन्दा । भाव. । भैष सु.रो.चि.व्र.खदिरवट्यां । क्ली । तद्बीजे । महाभल्लातकगुड़े ।

**पद्मान्तरम्** । क्ली । पद्मपत्रे । वै.निघ. ।

**पद्मालया** । स्त्री । लवङ्गलतायाम् । अम. ।

**पद्मावती** । स्त्री । स्थलपद्मिन्याम् । जटा. । मनसादेव्यां । श.र. ।

**पद्माङ्ग(य)म्** । क्ली । पद्मकाष्ठे । भा. । वै. नि व.२अ.सर्व्वज्व.चि सुदर्शनचूर्णे । च.द.म.रो.चि. बृहत्खदिरवट्यां । [ नि.व.५ ।

**पद्माह्वया (ह्वा)** । स्त्री । स्थलपद्मिन्यां । रा.

**पद्माक्षम्** । क्ली । पद्मबीजे । रा.नि.व.१० ।

**पद्मिनी** । स्त्री । पद्मषण्डे, कमलिन्यां । পদ্মের ঝাড় । गुणाः—मधुरा तिक्ता कषाया शिशिरा पित्तघ्नी कृमिघ्नी शोषश्रमभ्रान्तितापकान्तिहृच्च । रा.नि.व.१० । "मूलनालदलोत्पन्नफलैः समुदिता पुनः । पद्मिनी प्रोच्यते ।" भा.पू.व. । पद्मे । विश्व. । मृणाले । श.मा. । हस्तिन्यां । ध.नि. ।

**पद्मिनीकण्टकः** । पुं । क्षुद्ररोगे । পদ্মকাঁটা । "कण्टकैराचितं वृत्तं कण्डूमत्पाण्डुमण्डलं । पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥" सु.नि.१३अ.

**पद्मी** (द्मन्) । पुं । गजे । अम. । [ र.मा. ।

**पद्मोत्तम(र)विकासः** । पुं । कुसुम्भपुष्पवृक्षे ।

**पद्मोत्तरः** । पुं, क्ली । कुसुम्भवृक्षे. तत्पुष्पे । रा.नि.व.४ । स्त्री । कुसुम्भबीजे । वै.निघ. ।

**पद्मोद्भवा** । स्त्री । मनसादेव्याम् । पुराणम् ।

**पनशः (सः)** । पुं । बहि कण्टकमहाफलवृक्षे पणसवृक्षे । কাঁটাল গাছ । हिं कटहल । भा. । तत्पर्यायाः,—कण्टकिफलः, कण्टाकालः. आशयः, सुरजफलः, पलसः, फलसः, चम्पकालुः, चम्पकोषः, चम्पालुः, रसालः. हृदयफलः, पानस , महासर्जः. फलिनः, फलवृक्षकः, स्थूलः, कण्टाफलः, मूलफलदः, अपुष्पफलदः, पूतफलः । गुणा —"पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहं । तर्पणं बृंहणं स्वादु मांसलं श्लेष्मलं भृशं ॥ बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतक्षयान् । आमं तदेव विष्टम्भि वातलं तुवरं गुरु । दाहकृन्मधुरं बल्यं कफमेदोविवर्द्धनं ॥ पनसोद्भूतबीजानि वृष्यानि मधुराणि च । गुरुणि बद्धवर्चांसि सृष्टमूत्राणि संवदेत् । मज्जा पनसजो वृष्यो वातपित्तकफापहः ॥ मण्डलिसर्पविशेषे । सु.कल्प.४अ. ।

**पनसतालिका** । स्त्री । कण्टकीफलवृक्षे । কাঁঠাল গাছ । श.मा. ।

**पनसा (सिका)** । स्त्री । कर्णगतक्षुद्ररोगभेदे । কাণের ফোড়া । लक्षणं—"कर्णस्याभ्यन्तरे जाता पिडकामुग्रवेदनाम् । स्थिरां पनसिकां तान्तु विद्याद्वातकफोत्थिताम् ॥" भा. । [ मे.

**पन्नगः** । पुं । सर्पे । पद्मकाष्ठे । ओषधिविशेषे ।

**पन्नगकेशरः** । पुं । नागकेशरवृक्षे । रा.नि.व.६ ।

**पन्नगी** । स्त्री । सर्पिण्याम् । मनसादेव्याम् । सर्पिणीक्षुपे । रा.नि.व.५ । [ च. । त्रिका. ।

**पन्नद्धा (द्धी)** । स्त्री । चर्म्मपादुकायाम् । हे. ।

**पन्नूरः** । पुं । शालिञ्चशाके । वा.चि.१अ. ।

**पपोता** । स्त्री । (Carica Papaya.) स्वनामख्यातफलविशेषे । পেঁপে । हिं पपीया । तें बप्पाय । ता. पप्पयी गुणाः—मधुरा पाचनी हिमा वातानुलोमिनी प्लीहघ्नी ।

**पपुः** । स्त्री । उपमातरि, धात्र्याम् । उणा. ।

**पमरा** । स्त्री । सल्लकीनामगन्धद्रव्ये । राज. ।

**पयः** । क्ली । जले । दुग्धे । मे. । बालके । বালা । भा.म.१भ.चित्तभ्रमज्व.चि । "पाठा पटोली पयः ।"

**पयःकन्दा** । स्त्री । क्षीरविदार्य्यां । ভুঁই কুমড়া । रा.नि.व.७ ।

**पयःपालिनी** । स्त्री । बालके । उशीरे । वै.निघ.२भ.वि.ज्व.चि. ।

**पयःपेटी** । स्त्री । नारिकेले । प.मु. ।

**पयःप्रसादम् (दि)** । क्ली । निर्मलीबीजे । निर्म्माली । भा. । [ नि.व.५ ।

**पयःफेना (नी)** । स्त्री । दुग्धफेनीक्षुपे । रा.

**पयःसात्म्यम्** । क्ली । तक्रे । वै.निघ. ।

**पयस्यः** । पुं । विडाले । श.च. । क्ली । पयोविकारे घृतादौ । अम. ।

**पयस्या** । क्ली । क्षीरकाकोल्याम् । रा.नि.व.२३ । सु.सू.३९अ.पित्तशमने । भा.३ खंडे चि. योनिरो.चि. । श्वेतविदारीकन्दे । শুক্ল ভুঁই কুমড়া । च.सू.४अ. बृंहणे । सु.चि.१७अ. । कुटुम्बिनीक्षुपे । भा.४भ.पूतना.चि. । "नवा पयस्या गोलोमी ।" स्वर्णक्षीर्य्याम् । मे. । च.वि.८अ. । अर्कपुष्प्याम् । र.मा. । सु.चि.१७अ. । दुग्धिकायां । मे. । आमिक्षायाम् । हे.च. ।

**पयस्वलः** । पुं । छागे । रा.नि.व.१९ ।

**पयस्विनी** । स्त्री । रात्रौ । मे. । क्षीरकाकोल्याम् । प.मु. । रा.नि.व.३ । दुग्धफेनीक्षुपे । रा.नि.व.५ । क्षीरविदार्य्याम् । रा.नि.व.७ । काकोल्याम् । रा.नि.व.४ । जीवन्त्याम् । भा. । ज्योतिष्मतीलतायाम् । शुक्लालाब्वाम् । मञ्जिष्ठायाम् । वै.निघ. । छाग्याम् । रा.नि.व.१९ । दुग्धवत्याम् ।

**पयस्वी** । स्त्री । क्षीरकाकोल्याम् । वै.निघ. ।

**पया** । स्त्री । शुण्ठ्याम् । वै.निघ. ।

**पयोगतः**
**पयोघनः** } पुं । करकायाम । शिल ।

**पयोदः** । पुं । मुस्तके । भैष हृद्दकिङ्किणीतैले । च द शूल-चि,नारिकेलखण्डे ।

**पयोधजः** । पुं । समुद्रफेने ।

**पयोधरः** । पुं । स्तने । रा.नि.व.१८ । नागरमुस्तके । दुग्धी । वै.निघ. । नारिकेलवृक्षे । कशेरौ । मे. ।

**पयोधि(ब्धि)क[ज]म्** । क्लौ । लवणे । "लवणन्तु पयोधिजम् ।" रा.नि.व.२२ । समुद्रफेने । वै निघ. ।

**पयारः** । पुं । खदिरवृक्षे । श.च. ।

**पयोलता**
**पयोविदारिका(री)** } स्त्री । क्षीरविदार्याम् । शुक्ल भूँई-कूमड़ा । रा नि.व.७ ।

**पयो(ष्टि)ष्णिः** । पुं । पेचके । वै.निघ. ।

**पयोष्णी** । स्त्री । भारतवर्षीयनदीविशेषे । सा च विन्ध्याचलदक्षिणे प्रसिद्धा । जलगुणाः—सर्व्वरोगघ्नं रुच्यं पवित्रं लघु बलकान्तिजनकं पापघ्नं सुखदञ्च । रा.नि.व.१४ ।

**पयोहेतु** । क्लौ । देघनि । वै.निघ. ।

**परकः** । पुं । केशराजे । वै.निघ. ।

**परग्रन्थिः** । पुं । सन्धौ, सन्धिस्थाने, अङ्गुलिपर्व्वणि, पर्व्वावधौ । हारा. ।

**परञ्जः** । पुं । फेने । तैलनिष्पेषणयन्त्रे । घानि । छुरिकाफले । मे. ।

**परट्टक्** । पुं । काके । वै.निघ. । [ वै.निघ. ।

**परद्रव्यहा** । स्त्री । ग्रन्थिपर्णे । গেঁঠেলা ।

**परपत्रिका** । स्त्री । क्षुद्रचुञ्चुक्षुपे । रा.नि.व.४ ।

**परपुष्टः** । पुं । कोकिले । रा.नि.व.१९ ।

**परपुष्टमहोत्सवः** । पुं । आम्रवृक्षे । श.मा. ।

**परपुष्टा** । स्त्री । कोकिलायाम् । वै.निघ. । वन्दायाम् ।

**परभृतः (त्)** । पुं । कोकिले । काके । भाम. ।

**परमदः** । पुं । सुरापानजन्यरोगभेदे । लक्षणम्—"श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च । लिङ्गं परस्य च मदस्य वदन्ति तज्ज्ञाः तृष्णा रुजा शिरसि सन्धिषु चापि भेदः ॥" मा.नि. ।

**परमपूतिकः** । पुं । अहिफेने । प.मु. ।

**परमा** । स्त्री । सुगन्धद्रव्यविशेषे, गन्धशट्याम् । तदालेपनं ज्वरघ्नं रक्षोघ्नञ्च । राज. । च.द.बा.व्या. चि.महाराजप्रसारणीतैले ।

**परमाणुः** । पुं । रजस्त्रिंशत्तमे, भागे । "जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः । तस्य त्रिंशत्तमोभागः ॥" प.प्र.१ख. ।

**परमान्नम्** । क्लौ । क्षीरिकायाम्, पायसे । পায়েস্, পরমান্ন । तन्साधनप्रणाली यथा—"शुद्धेऽर्द्धपक्वे दुग्धे तु घृताक्तांस्तण्डुलान् क्षिपेत् । ते सिद्धा क्षीरिका दुर्जरा बल्या धातुपुष्टिप्रदा गुरुः । विष्टम्भिनी हरेत् पित्तरक्तपित्ताग्निमारुतान् ॥" भा. ।

**परमायुः** । क्लौ । जीवितकाले । यथा—"शतं वर्षाणि विंशत्या निशाभिः पञ्चभिः सह । परमायुरिदम्प्रोक्तं नराणां करिणामिह ॥" श.मा. ।

**परमायुधः** । पुं । असनवृक्षे । श.च. ।

**परमृत्युः** । पु । काके । त्रिका. ।

**परमेश्वरः** । पुं । पारदे ।

**परमेष्टः** । पुं । महानिम्बवृक्षे । र.मा. ।

**परमेष्ठिनी** । स्त्री । ब्राह्मीक्षुपे । वामनहाटी । रा नि.व.४ ।

**परसः** । पुं । Eclipta prostrata.) नीलभृङ्गराजे । কেশরাজ । त्रिका. । [ रसे ।

**परला** । स्त्री । पटोलवृक्षे । र.र.कुष्ठशैलेन्द्र-

**परलोकैषणा** । स्त्री । परलोकस्य गवेषणायां । च.सू.११अ. ।

**परवासिका (नी)** । स्त्री । वन्दायाम् । পরগাছা ।

**परशम्** । क्लौ । प्रस्तरविशेषे । পরশ পাথর । पराशम ।

**परशुच्छिन्नः** । पुं, स्त्री । कुठारिया इति ख्याते वृक्षे । কোদালে, কুড়লে । संग्रह: लौहचालने । कन्दगुडूच्याम् ।

**परशुरामः** । पुं । रसराजशिरोमणिकारे ।

**परा** । स्त्री । वन्ध्याकर्कोटक्याम् । हड्ल्याम् ।

**पराकपुष्पः (ष्पी)।** पुं। धूलीकदम्बवृक्षे। रा.नि.व.९। श्वेतापामार्गे। रा.नि.व.४।

**परागः।** पुं। पद्मकेसरे। कर्पूररजसि। वै.निघ.। पुष्परेणौ। अम.। चन्दने। मे.।

**परागपुष्पः।** पुं। धूलीकदम्बे। वै.निघ.।

**पराचीनः।** त्रि। पराङ्मुखे। भा.उ.९८प.।

**पराञ्जः।** पुं। तैलनिष्पीडनयन्त्रे। फेने। श.र.।

**पराश्रयः।** छत्रपत्रके। उलूके। श.च.। कासघ्न। व.निघ.।

**परादिगुणाः।** पुं। परापरत्वादौ। यथा—"परापरत्वे बुद्धिश्च संख्या संयोग एव च। विभागश्च पृथक्त्वञ्च परिमाणमथापि च। संस्कारोऽभ्यास इत्येते गुणाः ज्ञेयाः परादयः॥" च.।

**परानसा।** स्त्री। औषधप्रयोगे, चिकित्सायां। श.च.।

**परान्नम्।** क्ली। परान्ने। पाकराजः।

**परापरम्।** क्ली। परूषकफले। भा.।

**पराभिधम्।** क्ली। कुङ्कुमे। वै.निघ.।

**परामृतम्।** क्ली। वर्षोपले। त्रिका.।

**पराकः।** पु। कारवेल्लके। त्रिका.।

**पराकः।** पुं। पापाये। त्रिका.। [निघ.।

**परार्द्धम्।** क्ली। चन्दने। कुङ्कुमे। उशीरे। वै.

**परावतम्।** क्ली। परूषकफले। रा.नि.व.११।

**परावरम्।** क्ली। परूषकफले। रा.नि.व.११।

**परावेदी।** स्त्री। बृहत्याम्। व्याकुड़। कोषान्तरम्। [तन्त्रकारः।

**पराशरः।** पुं। तन्नामकायुर्वेदतन्त्रकारे। See

**पराश्रया।** स्त्री। माधवीलतायाम्। वै.निघ.। वन्दायां। पत्रमाड़ा। श.च.। [सु.सू.३३प.।

**परासङ्गः।** पुं। अवरोधे। शोणितरोधे।

**परिकर्त्तनम्।** क्ली। अधश्छेदे। सु.सू.८प.। छेदनवदनुभवे। वा.टी.चि.१प.।

**परिकर्त्तिका।** स्त्री। कर्त्तनवत्पीड़ायां। च.चि.३प.। वमनविरेचनव्यापद्विशेषे। सु.चि ३४प.।

**परिकर्म्म।** क्ली। अभ्यङ्गे। परिचर्य्याकरणे। वै.निघ.। कुङ्कुमादिना कायप्रसाधने। अम.भ.।

**परिकर्म्मी।** त्रि। सर्व्वकार्य्यकर्त्तृषु, परिचारकेषु। सु.सू.५प.।

**परिक्रमसहः।** पुं। छागे। त्रिका.।

**परिगर्भिकः (भवः)।** पुं। बालरोगविशेषे। एड़ँगा लागा। इति भाषायां लोके। "मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि। कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः। युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम्। रोगं परिभवाख्यञ्च तत्र युञ्ज्यात् दीपनम्॥" भा.। [भ.।

**परिग्रहः।** पुं। स्त्रियाम्। मूले। कन्दे। अम.

**परिघः।** पुं। तन्नामकमूढगर्भविशेषे, यत्र गर्भः परिघ इव योनिमुखमावृत्य तिष्ठेत्। यथा—"यस्तां स्थितः स परिघः परिघेन तुल्यः।" सु.नि.८प.।

**परिचरः।** पुं। भृत्ये, सेवके। र.मा.।

**परिचरकर्म्म।** क्ली। सेवाकार्य्ये।

**परिचर्य्या।** स्त्री। सेवायाम्। अम.। श.र.।

**परिचारकः।** पुं। सेवके। अम.। लक्षणं—"स्निग्धो जुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे। वैद्यवाक्यकृदश्रान्तो युग्यः परिचारकः॥" भा.।

**परिच्छदः।** पुं। परिधानवस्त्रे, आच्छादने। आगवतं। परिवारे। हे.च.।

**परिजातः।** पुं। श्वेतशवाहत्ते।

**परिणतः।** त्रि। परिपक्वे। अम.।

**परिणामः।** पुं। परिपाके। विकारे। वै.निघ.।

**परिणामज(शूल)म्।** क्ली। पक्तिशूले। रा.नि.व.२०।

**परिणाहः।** पुं। वर्त्तुलतायाम्। सु.सू.७प.। विस्तारे। अम.।

**परितापः।** पुं। रोगे। वै.निघ.। कम्पे। विश्व.। उष्णतायाम्। च.।

**परितिक्तः।** पुं। निम्बवृक्षे। वै.निघ.।

**परिदरः।** पुं। दन्तमूलगतमुखरोगे। लक्षणं—"दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति चाप्यसृक्। पित्तासृक्कफजो व्याधिः ज्ञेयः परिदरो हि सः॥" सु.नि १६प.।

**परिधूमायनम्।** क्ली। धूमोद्गारे। ধোঁওয়া ঢেকুর। सु.नि.६प.।

**परिपचनम्।** क्ली। तैलपाचनिकायाम्। च.सू.१५प.।

**परिपाकः** । पुं । परिणामे । भा. ।

**परिपाकिनी** । स्त्री । त्रिवृतायाम् । श.च. ।

**परिपिष्ट(क)म्** । क्ली । शीसके । रा.नि.व.१३ ।

**परिपुटनम्** । क्ली । पाककरणे । वै.निघ. ।

**परिपुष्करा** । स्त्री । कर्कटीभेदे, गोडुम्बायाम् । राजगोमुक । श.च. ।

**परिपूतम्** । क्ली । अपतुषधान्ये । मनुः । त्रि । पवित्रीकृते ।

**परिपेलम्** । क्ली । कैवर्त्तमुस्तके । प.मु. । वि.च.८८. ।

**परिपेलवम्** । क्ली । कुटन्नटे, जलमुस्तायाम् । কেওট মূতা । वा.सू.१५अ.रोध्रादिः । "शैलवाल-परिपेलवमोचाः ।" मुस्तायां । ज.द.१२अ. ।

**परिपेल्लम्** । क्ली । जलजाततृणविशेषे, जल-मुस्तायाम् । জলের মূতা, কেওট মূতা । मं जलमंडवी । कं वलिगडड । गुणाः—"कटूष्णं कफ-वातघ्नं व्रणघ्नं दाहघ्नम् आमशूलघ्नं रक्तदोषघ्नञ्च । रा.नि.व.६ ।

**परिपोटः (कः)** । पुं । कर्णपालीगतरोगे । কাণের পাতার রোগ । लक्षणं—"सौकुमार्य्या-च्चिरोत्सृष्टसहसाभिप्रवर्द्धिते । कर्णशोफो भवेत् पाल्यां सरुजः परिपोटवान् ।" सु.चि.२५अ. । लग्नभेदे । वा.उ.२९अ. ।

**परिपोषणम्** । क्ली । हिङ्गुनि । ज.द.१२अ. ।

**परिप्लुता** । स्त्री । योनिरोगविशेषे । लक्षणं यथा—"परिप्लुतायां भवति ग्राम्यधर्म्मे रुजा भृशम् ।" सु. । तथा—"पित्तलाया नृसंवासे क्षवथूद्गारधारणात् । पित्तसंमूर्च्छितो वायुर्योनिं दूषयति स्त्रियाः । शूनाः स्पर्शाक्षमाः सार्त्ति नील-पीतमसृक् स्रवेत् । श्रोणिवङ्क्षणपृष्ठार्त्तिज्वरार्त्तायाः परिप्लुता ॥" च. । वा.उ.३३अ. । मदिरायाम् । हे.च. ।

**परिभवः** । पुं । पारिगर्भिकरोगे । এঁড়েলাগা ।

**परिभाव्यम्** । क्ली । कुष्ठौषधे । কুড় ।

**परिभाषा** । स्त्री । वैद्यकमानादिविषयकग्रन्थे ।

**परिमण्डलः** । पुं । मशकजातिभेदे । सु.कल्प. ८अ. । See मशकः । त्रि । सम्यग्वर्त्तुले । भा. क्षुद्ररो.चि. । सु.सू.७अ. । [ अम.भ. ।

**परिमलः** । पुं । सुगन्धे । मैथुने । विमर्दने ।

**परिमाणम्** । क्ली । माने । See मानम् ।

**परिमार्ज्जनम्** । क्ली । खाद्यभेदे । मधुमस्तकी । श.च. । परिष्करणे । मधुतैलपाके ।

**परिमोचः** । पुं । मलोत्सर्गे ।

**परिम्लानः** । पुं । रक्तझिण्टीभेदे । वै.निघ. ।

**परिम्लायितिमिरः** । पुं । पित्तजन्यापर-तिमिररोगे । लक्षणं—"पित्तं कुर्य्यात्परिम्लायि मूर्च्छितं पित्ततेजसा । पीता दिशस्तु खद्योतान् भास्करञ्चापि पश्यति । विकीर्य्यमाणान् खद्योतै-र्वृक्षांस्तेजोभिरेव वा ॥" मा.नि. ।

**परिलेही** । पुं । कर्णपालीरोगे । लक्षणम्—"कफासृक्कृमिसम्भूतः सविसर्पान्वितस्ततः लिह्यात् सशष्कुलीं पालीं परिलेहीति स स्मृतः ॥" सु.चि. २५अ. ।

**परिवर्त्तनम्** । क्ली । पार्श्वपरित्यागे । मा.नि. ।

**परिवर्त्तिका** । स्त्री । शूकरोगे, मेढ्रजक्षुद्ररोगे । মূদো । लक्षणम् । "मर्दनात् पीडनाच्चापि तथैवाप्यभिघाततः । मेढ्रचर्म्म यदा वायुर्भजते सर्व्वतश्चरन् । तदा वातोपसृष्टन्तु तच्चर्म्म परिवर्त्तते । सवेदनं सदाहञ्च पाकञ्च व्रजति क्वचित् । मणेरध-स्तात् कोशस्तु ग्रन्थिरूपेण लम्बते ।" इत्यादि । सु. नि.१३अ. । [ हे.च. ।

**परिवापः (नम्)** । पुं, क्ली । मुण्डने । मे. ।

**परिवृंहितम्** । क्ली । वृद्धौ । त्रि । परिवर्द्धिते ।

**परिवेषकः** । पुं । परिवेषणकर्त्तरि । तल्लक्षणम् —"स्नातश्चन्दनचर्चितः सुवसनः स्रग्वी प्रसन्नाननः सृष्टात्मा सुभगः प्रसन्नहृदयः श्रीकान्तपूजारतः । स्वामिस्नेहपरः स्वपाकनिपुणः प्रौढो वदान्यः शुचिर्विप्रो वा परिवेषकस्तु कुलजश्चान्योऽपि वा भूपतेः ॥" पाकराजः ।

**परिवेषणम्** । क्ली । भोजनार्थं भोजनपात्रे अन्नादिदाने ।

**परिव्याधः** । पुं । (Pterospermum acerifolium.) द्रुमोत्पले । ওলট্ কম্বল । प.मु. । जलवेतसे । रा.नि.व.९ । भा. । कर्णिकार-वृक्षे । কনকে ফুলের গাছ । रा.नि.व.९ । आरग्वधवृक्षे ।

**परिव्राजी** । स्त्री । श्रावणीमहाक्षुपे । मुण्डीरी । रा.नि.व.५ ।

**परिशुष्क(मांस)म्।** क्ली। पक्वमांसभेदे। मांसेर व्यञ्जन विशेष। "मांसं बहुघृते भृष्टं सिक्तञ्चैवाम्बुना मुहुः। जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते। भ.च.। राज.। See मांसम्।

**परिश्रु(स्र)तम्।** क्ली। सुरायाम्। वै.निघ.।

**परिश्रमसहः।** पुं। छागे। छागल।

**परिषत्।** स्त्री। सभायाम्। सा द्विधा ज्ञानवती मूढपरिषच्चेति। पुनस्त्रिधा सुहृत्परिषत्, उदासीनपरिषत्, प्रतिनिविष्टपरिषच्चेति। च.वि. ८अ.।

**परि(री)षेकः।** पुं। स्नानादौ। शिरसि धारापातने। मूर्द्धतैलविधिभेदे। भा.। व्रणवेदनोपशमनार्थं सुखोष्णक्वाथसेचने। सु.चि.१अ.। वा.चि १प.।

**परिषेकस्वेदः।** पुं। स्वेदविशेषे। यथा—"वातिकोत्तरवातिकानां पुनर्मूलफलपत्त्रशुङ्गादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वर्षुणिकाः प्रनाडीर्वा पूरयित्वा यथार्हसिद्धदेहमवगाढ़ं वस्त्रावच्छन्नं परिषेचयेत्॥" च.सू.१४प.।

**परि(री)सर्पः (सर्पणम्)।** क्ली। क्षीद्र-रोगभेदे। तन्नामकक्षुद्रकुष्ठभेदे। "शनैः शरीरे पिड़काः स्रवन्त्यः सर्पन्ति यास्तं परिसर्पमाहुः।" सु. नि.५अ.। पुं। दर्वीकरसर्पविशेषे। सु.कल्प ४अ.।

**परिसर्य्या।** स्त्री। सेवायाम्। वै.निघ.।

**परिसिद्धिका।** स्त्री। मण्डविशेषे। वै.निघ.। किट्टिकायाम्। वा.उ.३६अ.।

**परिस्पन्दः (नम्)।** पुं, क्ली। कम्पे। र.च.।

**परिस्यन्दः।** पुं। चरणे, स्पन्दे। विन्दुशः चरणे। चोयान। अ.म.।

**परिस्रावः।** पुं। वमनविरेचनव्यापद्विशेषे। सु.चि.३४प.। मुखस्रावे। नासास्रावे। गुदस्रावे। च.सू.१५प.।

**परिस्रावी (इन्)।** पुं। कफजभगन्दरे। लक्षणं यथा—"कण्डूयनो घनस्रावी कठिनो मन्दवेदनः। श्वेतावभासः कफजः परिस्रावी भगन्दरः॥" मा. नि.। वि। निरन्तरस्रावशीले। मा.।

**परिस्राव्युदरम्।** क्ली। उदररोगभेदे। लक्षणं यथा—शल्यं यदन्नोपहितं तदन्त्रं भिनत्ति यस्यागतमन्यथा वा। तस्मात् स्रुतान्त्रात् सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः। नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यतेऽतीव विदह्यते च। एतत् परिस्राव्युदरम्।" सु.नि.७अ.।

**परिस्रुतः।** त्रि। विन्दुशः चरिते। क्ली। मद्ये। वै.निघ.।

**परिस्रुतदधि।** क्ली। वस्त्रगालितदधनि। छाँका दई। गुणाः—वातघ्नं कफकृत् स्निग्धं वृंहणं पित्तनाशनं। सु.सू.४५अ.।

**परिस्रुता।** स्त्री। द्राक्षामद्ये। वै.निघ.। वारुण्यां। ताड़ी। मे.।

**परिस्रुत्।** स्त्री। मद्यसामान्ये। रा.नि.व.१४।

**परिहारः।** पु। तस्यैव दोषवचनस्य परिहरणं। यथा—"नित्यमात्मनि शरीरस्थे जीवितलिङ्गान्युपलभ्यन्ते। तस्य पुनरपगमान्नोपलभ्यन्ते। तस्मादन्यः शरीरादात्मा नित्यश्चेति।" च.वि.८अ.।

**परिहार्य्यम्।** क्ली। कुष्ठौषधे। कुड़। वै.निघ.।

**परिक्षेपी (इन्)।** पुं। वातपित्तजभगन्दरे। "वातपित्तात् परिक्षेपी परिक्षिप्य गुदं गतिः। जायते परितस्तत्र प्राकारपरिखेव च॥"

**परीतिः।** स्त्री। पुष्पाञ्जने। वै.निघ.।

**परोरः।** पु। कारवेल्ले। स्त्री। तत्फले। उणाः।

**परीवर्त्तः।** पुं। कच्छपे। वै.निघ.।

**परीष्टिः।** स्त्री। परिचर्य्यायाम्। मे.।

**परुः।** पुं। अङ्गुलिसन्धौ। रा.नि.व.१८। वंशग्रन्थौ। बाँशेर गाँइटे। अयं निर्गुणः। रा.नि. व.६। परूषकवृक्ष। वै.निघ.। पर्व्वते। समुद्रे।

**परुद्वारः।** पु। अश्वे। श.मा.।

**परु(रू)षः।** पुं। परूषकवृक्षे। रा.नि.व.११। वंशग्रन्थौ। धामनवृक्षे। वै.निघ. नीलझिण्ट्याम्। श.च.। तन्नामकवायव्यकीटे। सु.कल्प.८अ.। See कीटः। स्त्री (षा)। शतपदीभेदे। सु.कल्प. ८अ.। क्ली। परूषकाफले। भा.। कर्व्वुरवर्णे। रुक्षे।

**परु(रू)षकः।** पुं। (Zylocarpus Granatum or Grewia Asiatica.) स्वनामख्यातफलवृक्षे। फल्सफलेर गाछ, फल्सा। हिं फलूई, गुकरी, फदपा। मं पपका। वेट्टा। तें पुटिकी। स द्विधा ह्रस्वविटपभेदात्। सु.सू.३८ अ.परूषकादिः। वा.सू.१५प.। तत्पर्य्यायाः— परूषकं, नागदलोपमं, गिरिपीलु, परावतं, नीलचर्म्म, नीलमण्डलं, परापरं, अल्पास्थि।

गुणाः—अम्लकटुकं कफरोगहरं वातघ्नं पित्तकरम्। इत्यामपरूषगुणाः। पक्वं तत् मधुरं रुचिप्रदं पित्तघ्नं तर्पणं शोफहरञ्च। तत्फलं मेहपित्तसन्निपातघ्नम्। ऋवि.१७अ.। "परूषकङ्कषायाम्लमामं पित्तकरं लघु। तत् पक्वं मधुरं पाके शीतं विष्टम्भि वृंहणम्। हृद्यं तृट्पित्तदाहास्रज्वरक्षयसमीरहृत्॥" भा.। फलं मलसंग्राहि शैत्यकरं। पत्रं व्रणपिड़कादौ हितम्। त्वक्कषाया शीतला च। द्रव्यगुणान्तरम्।

**परुस्।** क्ली। परूषकफले। फलसा फल। रा.नि.व.११। ग्रन्थौ। अम.।

**परूषकादिः।** पुं। तदादिगणकृतकषाये। स च परूषक-वरा-द्राक्षा-कट्फल-कतकाफल-राजाह्व-दाड़िम शाकात्मकः तृष्णा-वात-मूत्रघ्नश्च। वा.सू.१५अ.।

**परेष्टुका।** स्त्री। बहुवत्सायां गवि। अम.।

**परेधितः।** पुं। कोकिले। श.मा.।

**परोटः।** पुं। घृतसिद्धरोटिकाभेदे। परटो। वै.निघ.।

**परोष्णी।** स्त्री। तैलपायिकायाम्। अम.।

**पर्कटः।** पुं। पश्चात्तापे। क्रौञ्चपक्षिणि। वै.निघ.।

**पर्कटिः (टी)।** स्त्री। प्लक्षवृक्षे। भा.।

**पर्कटी (इन्)।** पुं। प्लक्षवृक्षे। পাকুড় গাছ। तें जुव्विचेट्टु। प.मु.। र.मा.।

**पर्जनी (न्या)।** स्त्री। दारुहरिद्रायाम्। प.मु.। रा.नि.व.६। [अम.।

**पर्णम्।** क्ली। ताम्बूले। रा.नि.व.११। पत्रे।

**पर्णः।** पुं। पलाशवृक्षे। रा.नि.व.१०।

**पर्णकः।** पुं। सुनिषण्णशाके। भा.पू.१भ.शा.व.।

**पर्णकारः।** पुं। वारजीविनि। বারুই।

**पर्णखण्डः।** पुं। ताम्बूलखण्डे। वनस्पतिविशेषे। श.च.।

**पर्णचोरकः।** पुं। चोरनामकगन्धद्रव्ये। গেটেলা। रा.नि.व.१२।

**पर्णपिण्डीतः।** पुं। मदनवृक्षे। वै.निघ.।

**पर्णभेदिनी।** स्त्री। प्रियङ्गुलतायाम्। रा.नि.व.१२।

**पर्णभोजनः।** पुं। छागपशौ। त्रिका.। त्रि। पत्रभोजिमात्रे।

**पर्णमाचलः।** पुं। (Averrhoa carambola.) कर्मरङ्गवृक्षे। श.मा.।

**पर्णमूलम्।** क्ली। ताम्बूलमूले। गारु.२प.।

**पर्णमृगः।** पुं। वृक्षमर्कटिकायां, दपोलि लोके। वानरे। वृक्षमार्जारे। গেছো বিড়াল। तद्वर्गश्च मद्गुमूषिकवृक्षशायिकावकुशपूतिघासवानरप्रभृतिको भवति। तन्मांसं मधुरं गुरु वृष्यं चक्षुष्यं शोषितकरं कासार्शःश्वासनाशनं मूत्रपुरीषानुलोमकञ्च। सु.सू.४६अ.। "वनौकोवृक्षमार्जारवृक्षमर्कटिकादयः। एते पर्णमृगाः प्रोक्ताः।" भा.।

**पर्णलता।** स्त्री। नागवल्लीलतायाम्। रा.नि.व.११।

**पर्णवल्ली।** स्त्री। नागरदेशख्यात पलाशीलतायाम्। रा.नि.व.३।

**पर्णशिरा।** स्त्री। ताम्बूलपत्रशिरायाम्। পাণের শির।

**पर्णसिः।** पुं। पद्मे। वारिगृहे। जलटुङ्गी। शाके। उणा.।

**पर्णाकः।** पुं। सुनिषण्णकशाके। वै.निघ.।

**पर्णाशः (सः) (नः)।** पुं। कृष्णार्जकवृक्षे। तुलसीविशेषे। अम.। च.द.छि.सी.हिक्काश्वासचि.। पर्णादपञ्चके। "व्याघ्री पर्णाससाधितम्।" पारसीकयमान्याम्। वै.निघ.।

**पर्णासिः।** पुं। कृष्णार्जके। वै.निघ.।

**पर्णिका।** स्त्री। स्थलपद्मायाम्। স্থলপদ্ম। रा.नि.व.५। पृश्निपर्ण्याम्। চাকুলিয়া। शालपर्ण्याम्। अग्निमन्थे। গণিয়ারি। वै.निघ.।

**पर्णिनी।** स्त्री। शालपर्ण्याम्। वै.निघ.वि.ज्व.कल्याणघृते। पृश्निपर्णग्रम्। माषपर्ण्याम्। र.मा.।

**पर्णिनीद्वयम्।** क्ली। माषपर्णी मुद्गपर्णी चेति द्वये। छि.यो.रक्तातिसा.चि.कुटजादौ।

**पर्णी (इन्)।** पुं। पलाशवृक्षे। आरग्वधवृक्षे। वै.निघ.। सप्तपर्णवृक्षे। वृक्षे। हे.च.। स्त्री। शालपर्ण्याम्। पृश्निपर्ण्याम्। चि.क.क.।

**पर्णीचतुष्कम्।** क्ली। शालपर्णीपृश्निपर्णीमुद्गपर्णीमाषपर्णीषु। च.द.वा.व्या.चि.मध्यमनारायणतैले।

**पर्णीरम्।** क्ली। ह्रीवेरे। বালা। वै.निघ.।

**पर्णोत्थम्।** क्ली। कर्पूरतैले।

**पर्द्दः (नम्)** । अपानवायुत्यागे । वै.निघ. । केशसमूहे । उणा. । ह.च. ।

**पर्पम्** । क्ली । नववर्षे । तृणाङ्कुरे । उणा. ।

**पर्पटः (कः)** । पुं । (Oldenlandia Corymbosa. Syn. Oldenlandia beflora.) स्वनामख्याते क्षुद्रक्षुपे पत्रशाके वा । क्षेत्पापड़ा । हिं दवनपापड़ा । मं वम्. पित्तपापड़ा । कं पर्पाटक । तत्. नड़पापुड़ा । तत्पर्य्यायाः,— शिपटिः, तिक्तः, चरकः, रेणुः, तृष्णारिः, वरकः, चरकः, शीतः, शीतप्रियः, पांशुः, कल्पाङ्गः, वर्म्मकण्टकः, कृशशाखः, प्रगन्धः, सुतिक्तः, रक्तपुष्पकः, पित्तारिः, कटुपत्रः, वक्रः । गुणाः— शीतलः पित्तश्लेष्मज्वरापहः रक्तदाहारुचिग्लानिमदविभ्रमनाशनः । रा.नि.व.५ । भि.यो पि.ज्व.चि. । "कर्कोटकं पर्पटकम् ।" अपिच "पर्पटो हन्ति पित्तास्रभ्रमतृष्णाकफज्वरान् । संग्राही शीतलस्तिक्तो दाहनुत् वातलो लघुः ॥" भा. । कुष्माण्डवृक्षे । रक्तगन्धदीक्षे । वै.निघ. । चणकमुद्गादिकृतपिष्टकभेदे । पांपर इति भाषा । तत्करणविधिः— "धूमवीरचिताः पिष्टहरिद्रालवणैर्युताः । जीरकस्फिङ्गिकाभ्याञ्च सहलता च वेल्लिताः । पर्पटास्ते महाङ्गारभृष्टाः परमरोचकाः । दीपनाः पाचना रुच्या गुरवः किञ्चिदीरिताः । मौद्गाश्च तद्गुणाः प्रोक्ता विशेषाल्लघवो हिताः । चणकस्य गुणैर्युक्ताः पर्पटाश्चणकोद्भवाः । स्नेहभृष्टास्तु ते सर्व्वे भवेयुः संयुता गुणैः ॥" भा. । "क्षारः पर्पटकः शीतो यवक्षारसमो गुणैः ।" वै.निघ. । वातपित्तज्वरे मन्दज्वरे च हितः ।

**पर्पट(टी)द्रुमः** । पुं । कोङ्कणदेशप्रसिद्धकुम्भीवृक्षे । गुग्गुलुतरौ । रा.नि.व.९ ।

**पर्पटादिः** । पुं । पर्पटचन्दनोदीच्यनागरसिद्धकषाये । "एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः । किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः ॥" च.द. पि.ज्व.चि. । भा. ।

**पर्पटी** । स्त्री । सौराष्ट्रमृत्तिकापरनामसुगन्धद्रव्ये । पञ्चपर्णिका । ह.च. । पद्मावती, पपरी इति च उत्तरदेशप्रसिद्धे सुगन्धद्रव्ये । गुणाः—"पर्पटी तुवरा तिक्ता शिशिरा वर्णकृल्लघुः । विषव्रणहरी कण्डूकफपित्तास्रकुष्ठनुत ॥" भा. । पलङ्कषमाने । प.प्र. । पिष्टकभेदे । पांपर । उणा. ।

**पर्पटीरसः** । पुं । श्लेष्मज्वरे रसः । रसः १ भ. गन्धकः २ भ. भृङ्गराजरसेन मर्द्यः । ताम्रं लौहं भं. रसगन्धयोः पादांशं दत्त्वा एकत्र सम्मर्द्य पर्पटीवत् पचेत् । अथ सप्तधा निर्गुण्ड्यादिरसेन ७दिनानि मर्द्दयित्वा अङ्गारैः स्वेदयेत् । रस.कौ. । र.सा.सं. ।

**पर्प(र्व्व)रीणम्** । क्ली । पर्व्वणि । ओद् । श. र. । पुं । पर्णशिरासे । पर्णशिरायां । मे. । पत्रचूर्णरसे । श.र. ।

**पर्पिकः** । पुं, स्त्री । खञ्जे । व्याक. ।

**पर्य्यगः** । पुं । कटाहे । च.सू.१५अ. ।

**पर्य्यङ्कः** । पुं । खट्वायाम् । अम. ।

**पर्य्यङ्कपादिका** । स्त्री । कोलशिम्ब्याम् । श्वेत आलकुशी । भा.१म.मा.व. ।

**पर्य्यणी** । स्त्री । दारुहरिद्रायाम् ।

**पर्य्ययः** । पुं । क्रमोल्लङ्घने, व्यतिक्रमे । अम. ।

**पर्य्यस्तिका (स्ती)** । स्त्री । पर्य्यङ्के । त्रिका. ।

**पर्य्यागतः** । त्रि । पक्वे । सु.चि.२१अ. ।

**पर्य्याप्तः** । त्रि । यथेष्टे । क्ली । तृप्तौ । मे. ।

**पर्य्याप्तिः** । स्त्री । तृप्तौ । वै.निघ. ।

**पर्य्यायः** । पुं । क्रमे । अनुक्रमे । अम. ।

**पर्य्यायमुक्तावलिः** । स्त्री । द्रव्याभिधानविशेषे ।

**पर्य्युषितम्** । क्ली, पुं । शिलायाम् । वै.निघ. । त्रि । त्रुटे । वासि ।

**पर्य्युषितान्नम्** । क्ली । पूर्व्वदिवसज-जलसिक्तान्ने । पान्ता भात ।

**पर्व्व** । क्ली । वंशग्रन्थौ । बांशेर गिंट । अम. । अङ्गुल्यादिग्रन्थौ । अङ्गुलिर पाव । मे. ।

**पर्व्वकम्** । क्ली । जानुप्रदेशे । आंटु । श.च. ।

**पर्व्वणिका (णी)** । स्त्री । नेत्रसन्धिजरोगे । लक्षणम्—"ताम्रा तन्वी दाहशूलोपपन्ना रक्तान्ज्ञेया पर्व्वणी वृत्तशोफा ।" सु.उ.२अ. । शाकविशेषे । सा च हस्तिशुण्डीति लोके । च.सू.२७अ. ।

**पर्व्वतः** । पुं । वृक्षे । किरातत्तिक्तके । वै.निघ. । शैले । शाकभेदे । मत्स्यभेदे । पान्ता माछ । मे. । तद्गुणाः—"पर्व्वतो वातहा स्निग्धः शुक्रलो बलवर्द्धनः ।" राज. ।

**पर्व्वतकाकः** । पुं । द्रोणकाके । ह.च. ।

**पर्व्वतजा**। स्त्री। गिरिजाम्लद्राक्षाविशेषे, पहाड़ीति लोके। गुणाः—"द्राक्षा पर्व्वतजा लघ्वी साम्ला श्लेष्माम्लपित्तकृत्।" भा.।

**पर्व्वततृणम्**। क्ली। पर्व्वतजाततृणाट्यनामतृण विशेषे। हिं संड। तत्पर्य्यायाः,—तृणाढ्यं, पत्राढ्यं, मृगप्रियम्। गुणाः—बलपुष्टिकरं रुच्यं पशूनां हितञ्च। रा.नि.व.८।

**पर्व्वतनिम्बः**। पुं। महानिम्बे।

**पर्व्वतभेदः**। पुं। करञ्जोड़िपाषाणभेदे। भा.म.३भ.मू.कृ.चि.।

**पर्व्वतभेदी** (इन्)। पुं। पाषाणभेदे। पাথর-কুচি। च.द.मू.र.चि.। "पर्व्वतभेदिपथ्यायाम्।"

**पर्व्वतमोचा**। स्त्री। गिरिकदल्याम्। वनकदल्याम्। বোচে কলা। रा.नि.व.११।

**पर्व्वतवासिनी**। स्त्री। आकाशमांस्याम्। शृङ्गजटामांसी। रा.नि.व.१२।

**पर्व्वताश्रयः**। पुं। महासिंहे। रा.नि.व.१९।

**पर्व्वताह्वयः**। पुं। धाराकदम्बवृक्षे। वै.निघ.।

**पर्व्वतोद्भवम्**। क्ली, पुं। हिङ्गुले। पारदे। वै.निघ.।

**पर्व्वतोद्भूतम्**। क्ली। अभ्रकधातौ। वै.निघ.।

**पर्व्वपुष्पिका (ष्पी)**। स्त्री। हस्तिशुण्ड्याम्। হাতিশুঁড়ে। वा.सू.१५भ.। तच्छाकगुणः—वातपित्तहरः। च.सू.२७भ.। रामदूतीतुलस्याम्।

**पर्व्वभेदः**। पुं। सन्धिभङ्गरोगे। तथा सन्धिवेदनायाम् यथा चालने भङ्गाभङ्गा जायते। च.द.ज्व.चि.।

**पर्व्वमूला**। स्त्री। श्वेतापराजितायाम्। अपराजिता। रा.नि.व.५।

**पर्व्वयोनिः**। पुं। इक्षौ। वेतसे। वंशे। हे.च.।

**पर्व्वरोहम्**। क्ली। पर्व्वणि। গাঁট। पुं। पर्णवृन्ते। পানের বোঁটা।

**पर्व्वरुट्**। पुं। दाड़िमवृक्षे। त्रिका.।

**पर्व्ववल्ली**। स्त्री। वल्लीदूर्व्वायाम्, मालादूर्व्वायाम्। दूर्व्वालता। रा.नि.व.८।

**पर्व्वसन्धिः**। पुं। अङ्गुलिसन्धौ। रा.नि.व.१८।

**पर्व्वितः**। पुं। (Silurus pobda.) पर्व्वतमत्स्ये। পাবদামাছ।

**पर्शुका**
**पर्शू** } स्त्री। पञ्जरास्थनि। अम.। सु.चि.३भ.। च.द.१०भ.।

**पलम्**। क्ली। मांसे। रा.नि.व.१७।१८। च.द.विष.चि.। "कर्कटपलहरितालं।" शुक्तिद्वये, ८ तो.। "शुक्तिभ्याञ्च पलं ज्ञेयम्।" प.प्र.१ख.। कर्षचतुष्टये। अम.। पुं। पलाले। हे.च.। जटामांस्याम्। लाक्षायाम्। वै.निघ.।

**पलक्या**। स्त्री। पालङ्कीशाके। रा.नि,व.७।

**पलङ्कः**। पुं। निष्पावे। शिम्, वर्वटी। रा.नि.व.२३।

**पलङ्करः**। पुं। पित्ते। त्रिका.।

**पलङ्कषः**। पुं। कणगुग्गुलौ। रा.नि.व.१२। निष्पावे। शिम्। प.मु.।

**पलङ्कषा**। स्त्री। श्वेतनिष्पावे। শ্বেত শিম্। रा.नि.व.१६। गोक्षुरके। मे.। च.सू.४अ.संज्ञास्थापने। वै.निघ.अ,स्मा.चि,वचाद्यघृते। गुग्गुलौ। मे.। च.द.सि.यो.महापैशाचघृते। वि.ज्व.अष्टादशाङ्गधूपे, पलङ्कषाद्यघृते। पलाशवीजे। वै.निघ.२भ.कृमिचि.सावित्रवटके। लाक्षायाम्। प.मु.। वा.उ.६अ.महापैशाचघृते। क्षुद्रगोक्षुरके। वै.निघ.। मक्षिकायाम्। रा.नि.व.१९। रास्नायाम्। वै.निघ.२भ.अ.स्मा.चि.पलङ्कषातैले। मुण्डीर्य्याम्। मे.।

**पलङ्गारम्**। क्ली। रक्ते।

**पलप्रियः**। पुं। द्रोणकाके।

**पलभित्**। पुं। पाषाणभेदे।

**पललम्**। क्ली। तिलकल्के। তিলকুটো। हिं तिलकुटि। रा.नि.व.१६। सु.चि.२०अ.। च.द.हृद्रोग.चि.। लक्षणं—"पललन्तु समाख्यातं सैचवं तिलपिष्टकं। पललं मलकृद्वल्यं वातघ्नं कफपित्तकृत्। वृंहणञ्च गुरु हृद्यं स्निग्धं मूत्रनिवर्त्तकम्॥" भा.। मांसे। रा.नि.व.१७।१८। शुष्कमांसे। सु.सू.४३अ.। तिलपुष्पे। वै.निघ.। भृष्टतिलकल्के। वा.उ.३८अ.। पङ्के। मे.।

**पललज्वरः**। पुं। पित्ते। हारा.।

**पललप्रियः**। पुं। द्रोणकाके। দাঁড়কাক।

**पललाशयः**। पुं। अजीर्णे। त्रिका.। गण्डरोगे। श.र.।

**पलसः**। पुं। पनसे। কাঁটাল।

**पलाग्निः**। पुं । पित्ते । हारा. ।

**पलाङ्गः**। पुं । शिशुमारे । শুশোক । हारा. ।

**पलाण्डुः**। पुं । Allium Cepa.) Onion. Fr. Ognon. मूलशाकविशेषे । পেঁয়াজ । हिं पियाज, पियज । मं श्वेतकान्दा । कं उल्लि । तें नीरुल्लिचेट्टु । ता. वेङ्गयम् । बम्. कान्द । पारस्य. बुझिगड्डुलु । तत्पर्य्यायाः,—निकेतनः, नीचभोज्यः, लोहितकन्दः, तीक्ष्णकन्दः, उष्णः, मुखदूषणः, शूद्रप्रियः, दीपनः, क्रिमिघ्नः, मुखगन्धकः, बहुपत्रः, विश्वगन्धः, रोचन, यवनेष्टकः, सुकन्दः, सुकन्दकः, मुकुन्दकः, मुकुन्दकः। रा.नि.व.६ । स श्वेतहारिद्रवर्णभेदेन द्विधा। तयोर्हारिद्रो रक्तो वा राजपलाण्डुरित्युच्यते । गुणाः—कटुः वल्यः गुरुः कफपित्तघ्नः हृद्यः रोचनः स्निग्धः वान्तिघ्नश्च । रा.नि.व.७ । "पलाण्डुस्तु गुणैर्ज्ञेयो रसोनसदृशो गुणैः । स्वादुः पाके रसेऽनुष्णः कफकृन्नातिपित्तलः । हरते केवलं वातं बलवीर्य्यकरो गुरुः ।" भा. । "वातहरः सोष्णभावात् ।" सु.सू.४०अ. । "पलाण्डुर्वातकफहा शुक्रलः शूलगन्धनुत् ।" अवि.१६अ. । वल्यः, ज्वरे उदरे शूले सन्निपातेऽपस्मारे पामायां कर्णशूले वरटादिदंशे च हितः । द्रव्यगुणान्तरम् । "पलाण्डुर्नृपपूर्व्वः स्यात् शिशिरः पित्तनाशनः । कफहृच्छ्वासघ्नश्चैव बहुनिद्राकरस्तथा ॥" See राजपलाण्डुः ।

**पलान्नम्**। क्ली । सुमांसवेसवारादिसिद्धभक्ते । পোলাও । एतत्साधनविधिः यथा—छागमांसस्य शरावः तण्डुलस्य शरावः, घृतस्य शरावचतुर्थांशः त्वगेलालवङ्गानां प्रत्येकं माषत्रयं मरिचतेजपत्रयोः प्रत्येकं तोलकद्वयं कुङ्कुमस्य माषकं, आर्द्रक धान्ययोश्च प्रत्येकं तोलकद्वयं लवणस्य षट्तोलकं द्राक्षायाश्च पलमिति । पाकराजेश्वरः ।

**पलापः**। पुं । करिगण्डे । श.मा. ।

**पलापहा**। स्त्री । नेत्राञ्जने । वै.निघ. ।

**पलार्द्धम्**। क्ली । सुवर्णकद्वये । ४तो. । च.कल्प. १२अ. । [ चक्र. ।

**पलालः**। पुं । निःशस्यधान्यनाले । পোয়াল ।

**पलालजशाकः**। पुं, क्ली । पलालजातशाके । পোয়াল্ ছাতু । गुणाः—"स्वादुपाकरसा रुच्या दीपवान् पलालजाः ।" राज.३प. ।

**पलालदोहदः**। पुं । आम्रवृक्षे । श.मा. ।

**पलाशम्**। क्ली । शंगुके । তেজপত্র । रा.नि. व६ । पर्णे । পাতা । अम. ।

**पलाशः**। पुं । किंशुके । শিমুল । सु.सू.३८अ. अम्बष्ठादिः । च.कृ.२अ.यवागूप्रकरणे । (Butia frondosa.) Butia-gum. स्वनामख्यातमहातरुवर्गीयवृक्षे । পলাশ গাছ । प.मु. । हिं धःरा । मं पलस । कं मुत्तलु । तें । मोदुग । उत्. पराश । बम्. खाकरो । ता. परसन् । तत्पर्य्यायाः,—किंशुकः, पर्णः, वातपोथः, करकः, याज्ञिकः, त्रिपत्रकः, ब्रह्मपादपः, समिद्वरः, त्रिपर्णः, वक्रपुष्पः, पूतद्रुः, ब्रह्मवृक्षकः, ब्रह्मोपनेता, रक्तपुष्पकः, काष्ठद्रुः । गुणाः—कषायोष्णः क्रिमिघ्नः । तद्बीजं पामाकण्डूदद्रुत्वग्दोषघ्नं क्रिमिघ्नं लघूष्णं कटुपाकि पथ्यञ्च । भा. । तत्पुष्पम् उष्णं कटु कुष्ठघ्नञ्च । "कटुतिक्तकषायं स्वादुपाकि ।" रा.नि.व१० । भा. । स च रक्तपीतश्वेतनीलपुष्पभेदेन चतुर्विधः । किंशुकेन गुणसाम्येऽपि सितो विज्ञानदो भवति । तत्तैलं गान्धारीतैलगुणं । भूमिकुष्माण्डे । पारीषवृक्षे । পলাশ পিপুল । शट्यां । मे. । सु.चि.२०अ. ।

**पलाशकः**। पुं । शट्यां । जटा. । लाक्षायाम् । रा.नि.व.१३ । किंशुके । শিমুল । सु.सू.३८अ. मुष्ककादिः । पलाशवृक्षे । श.र. । [ निघ. ।

**पलाशगन्धजा**। स्त्री । वंशलोचनभेदे । टै.

**पलाशच्छदनम्**। क्ली । तमालपत्रे । वै.निघ. ।

**पलाशतरुजः**। पुं । कोमलपलाशपल्लवे । च.द.पि.ज्व.चि.ते । "पलाशतरुजैर्दिहेत् ।"

**पलाशतरुशोणितम्**
**पलाशनिर्यासः** } पुं । तद्वृक्षनिर्यासे । পলাশের আটা ।

गुणाः—"पलाशभवनिर्यासो ग्राही च सपदि द्रुतम् । ग्रहण्यां मुखजान् व्याधीन् कासान् स्वेदातिनिर्गमम् ॥" केचित् । भैष.ने.रो.चि. ।

**पलाशनः**। पुं । शारिकायां । त्रिका. ।

**पलाशपत्नी (र्णी) (वल्ली)**। स्त्री । अश्वगन्धायाम् । रा.नि.व.४ । पलाशीलतायाम् । वै. निघ. । [ नि.व.७ ।

**पलाशलोहिता**। स्त्री । चिञ्चीशाके । रा.

**पलाशबीजम्**। क्ली । पलाशबीजे । পলাশ

आनविशेष। तत्पर्य्यायाः—चक्रलतामः मध्वासः सितवासकः वनेज्यः मन्मथानन्दः मदनेच्छाफलः। कोमलफलगुणाः—अम्लं कटु पित्तदाहकरञ्च। पक्वस्य गुणाः—स्वादु मधुरं पुष्टि-वीर्य्य-बलप्रदञ्च। रा.नि.व.११।

बद्धवल्कः। पुं। दारुचिनीति ख्याते मधुरद्रव्ये। वै.निघ.।

बद्धविट्कता। स्त्री। वायुजन्यरोगे। मल-बद्धता। वै.निघ.।

बद्धशिखा। स्त्री। उच्चटे। वै.निघ.। उच्च-टायाम्। पुं। शिशौ। मे.।

बद्धामयपतिः। पुं। ऋषभकौषधौ। वै.निघ.

बद्धोदरः। पुं। बद्धगुदे उदररोगे। च.चिकि-१३.। See बद्धगुदः।

वधम्। क्ली। मारणे, हत्यायाम्।

वधकः। पुं। व्याधौ। मृत्यौ।

वधत्रम्। क्ली। अस्त्रे।

वधिरः। पुं। वणे। सुगन्धवणे। भीमकर्पूरे। वै.निघ.। त्रि। श्रवणेन्द्रियरहिते। काला। बधिरत्वनिदानमुक्तञ्चैव यथा—"यदा शब्दवहो वायुः स्रोत आवृत्य तिष्ठति। शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते॥" मा.नि.। असाध्यता—"बाधिर्य्यञ्चाजलजश्च वृद्धस्य चिरोत्थञ्च विवर्ज्जयेत्॥" भा.। "श्लेष्मानुगतो वायुः नादो वा समुपेक्षितः। उच्चैः कृच्छ्रात् श्रुतिं कुर्य्यात् बधिरत्वं क्रमेण च॥" वा.उ.१०८.।

वधूः। स्त्री। नार्य्याम्। स्नुषायाम्। दशभूषणाद, पिडिं। अम.। शारिवायाम्। अनन्तमूल। शट्यां। शटी। मे।

वधूकपुष्पः। पुं। असनवृक्षे। पीत शाल।

वधूत्सवप्रसवः। पुं। रक्तझिण्ट्याम्। रा.नि.व.१०।

वध्र(क)म्। क्ली। सीसके। अम.।

वन्दफलः। पुं। करञ्जवृक्षे। श.च.।

वन्दूकम्। क्ली। बन्धुजीवपुष्पे। गुणाः—बन्दूकं श्लेष्मलं ग्राहि च। राज.५म.।

वन्धः। पुं। शरीरे। हे.च.। व्याधौ। मनोव्यथा। मे.।

वन्धकी। स्त्री। पुंश्चल्याम्। अम.। करिण्यां। [मे.।

वन्धनम्। क्ली। संयमने। बाँधा। अम.।

वन्धपत्रः। पुं। हिन्तालवृक्षे।

वन्धुः (न्धूः)(कः)। पुं, स्त्री। बन्धुजीवपुष्पे वान्धुलि फुलेर गाछ। र.मा.। रा.नि.व.१०। मा.म.४म.उ.चि.। (कः) पीतशाले। पियाशाल। मे.। See पीतशालः।

वन्धुकपुष्पः (कः)। पुं। पीतकवृक्षे। पियाशाल। रा.नि.व.९। श्योणाकवृक्षे। शोणा गाछ। च.द. ज्वरकाले।

वन्धुजीवः (वाः)। पु। (Pentapetes Phoenicea. Wil.) पुष्पवृक्षविशेषे। यस्य पुष्पं मध्याह्ने विकसति, पराह्णे च सूर्य्योदये शुष्यति। वान्धुलि फुलेर गाछ। र.मा.। हिं दुपह-रिया, गेजुलिया। मं बांदुआ। कं बंदुरे। तै मक्लिनचेट्टु वेशलिनचेट्टु। बम्. दुपारि। पञ्जा. गुल्दुपहरिया। तत्पर्य्यायाः—रक्तकः रक्तजीवकः बन्धूः बन्धुलः बन्धुजीवः बन्धुजीवकः बन्धूलिः बन्धुरः बन्धूरः सूर्य्यभक्तः उष्ट्रपुष्पः अर्कवल्लभः मध्यन्दिनः रक्तपुष्पः रागपुष्पः माध्याह्निकः। सोऽसितसितपीत-लोहितपुष्पभेदाच्चतुर्विधः।" गुणाः—ज्वरनाशकः ग्रहविनाशकः सूर्य्यप्रसादनश्च। रा.नि.व.१०। कफहृत् ग्राही लघुः वातपित्तघ्नश्च। भा.। सु.सू. ३९म.संशमने।

वन्धुरः। पुं। ऋषभके। रा.नि.व.६। ओषधौ। हंसे। तिलकल्के। बन्धूकवृक्षे। बधिरे। मे.। विड़ङ्गे। हे.च.। बकपक्षिणि। श.र.। सारस-पक्षिणि। वै.निघ.। त्रि। उन्नतानते। अम.।

वन्धुराः। पुं बहु। शक्तु। छातू। मे.।

वन्धुलः। पुं। बन्धुजीववृक्षे। श.र.।

वन्धुवेतसः। पुं। जलवेतसे। वै.निघ.।

वन्धूकपुष्पः। पुं। बन्धुजीवपुष्पवृक्षे। वै.निघ.। पीतशालि। अम.। असनवृक्षे। आसन गाछ। रा.नि.व.९। क्ली। तत्पुष्पे। [श.रा.

वन्धूलिः। पुं। बन्धुजीववृक्षे। वान्धुलि।

वन्ध्या। स्त्री। बन्ध्याकर्कोटक्याम्। रा.नि.व.३। अप्रजस्त्रियाम्। बाँजा। मे.। वायुजन्ये स्त्रीयोनि-रोगविशेषे। तस्यां नारी नष्टार्त्तवा भवति। "वन्ध्या नष्टार्त्तवा ज्ञेया।" भा.म.४म.। कौबेरे। बाला। श.च.।

**वन्ध्याकर्कोटकी** । स्त्री । तिक्तकर्कोटक्याम् । তিৎকাঁকড়ী, তিৎকাকরোল । हिं बांझखखासा, बांभूखसा, बांझ्काकरोल । म वंभ्याकण्टोली । क वनीमडुवागलु । वम. वंझाकटोली । तत्पर्य्याया:,—वन्ध्या देवी नागारातिः नागहन्त्री मनोज्ञा पथ्या दिव्या पुत्रदा सुगन्धा स्कन्दवल्ली ईश्वरी श्रीकन्दा सुकन्दा सर्पदमनी विषकन्दकिनी परा कुमारी भूतहन्त्री योगेश्वरी कान्ता भक्तदमनी विषकण्टकिनी । रा नि.व.३ । सा.कौ.विषाधिकारे । गुणा—लघ्वी कफजित् व्रणशोधिनी सर्पदमनी तीक्ष्णा विसर्पविषघ्नी च । भा.पू.ग.व. । तिक्ता कटुः उष्णा कफघ्नी स्थावरादिविषहरी च । रा.नि.व.३ ।

**वन्ध्याकार्पासी** । स्त्री । वनकार्पास्याम् । वै.निघ. ।

**वस्त्रम्** । क्लो । सीसके ।

**वब्बु(ब्बू)रः (लः) (कः)** । पुं । बर्व्वूरवृक्षे । বাব্‌লা গাছ । उत्. गुइड़ा ।

**वब्बु(ब्ब)र[ल]निर्य्यासः** । पुं । बर्व्वूरनिर्य्यासे । বাব্‌লার আঠা । वै.निघ. ।

**वभ्रः (भ्रु)** । पुं । नकुले । নেউল । मे. । च.सू.२७अ. । मूषिके । रास्नायाम् । वै.निघ. । वातपित्तोल्वण-सन्निपातज्वरे । निदान-लक्षणे— "वातपित्ताधिको यत्र सन्निपातः प्रकुप्यति । तस्य ज्वरो मदुस्तृष्णा मुखशोषः प्रमीलकः ॥ आध्मानारुचितन्द्राश्च कासश्वासभ्रमश्रमाः । मुनिभिर्बभ्रु नामायं सन्निपात उदाहृतः ॥" भा.म.१भ. । धातकपर्णिपि । त्रिका. । सुनिषण्णकशाके । रा.नि.व.४ । त्रि । खलती । हे.च. ।

**वभ्रुदेहः** । पुं । नकुले ।

**वभ्रुधातुः** । पुं । स्वर्णगैरिके । रा.नि.व.१३ ।

**वम्भराली** । स्त्री । मक्षिकायाम् । भ्रमर । वै.निघ. ।

**वरम्** । क्लो, पुं । कुङ्कुमे । वालके । वाला । लाघ । গুড়ত্বক্ । आर्द्रके । रा.नि.व.६ १२। पुं । सिह्लके । गन्धके । [जागरूल ।

**वरजम्बूः** । स्त्री । राजजम्बूनामफलवृक्षभेदे ।

**वरा** । स्त्री । त्रिफलायाम् । गुडूच्याम् । मेदायाम् । ब्राह्म्याम् । हरिद्रायाम् । पाठायाम् । विडङ्गे ।

**वरी** । स्त्री । शतावर्य्याम् । শতমূলী ।

**वर्व्वटः** । पुं । स्त्री । (टी) राजमाषे । বর্বটী ।

**वर्व्वणा** । स्त्री । नीलमक्षिकायाम् ।

**वर्व्वरशाकः** । पुं । भार्ग्याम् । বামুনহাটী ।

**वब्बु(ब्बू)रः(लः)(कः)** । पुं । बर्व्वरवृक्षे । বাবলা গাছ । बाबुर, बाबुल इति भाषा । उत् गुइड़ा । गुणाः—"बर्व्वुरस्तु कषायोष्णः कफकासामयापहः । आमरक्तातिसारघ्नः पित्तार्शोदाहनाशनः ॥" रा.नि.व.८ ।

**वब्बु(ब्ब)र[ल]निर्य्यासः** । पुं । बर्व्वूरनिर्य्यासे । বাবলার আঠা ।

**वर्हम्** । क्लो । मयूरपुच्छे ।

**वर्हिशिखा** । स्त्री । मयूरशिखायाम् । वै.निघ. चर्म्म चि गोजिह्वादिकषाये । लघुधातक्यां । भा. ।

**वर्हिष्ट(ष्ठ)म्** । क्लो । वालके । বালা । वै. निघ.च.सा.चि.पञ्चमूलीबलादिकषाये । उशीरे ।

**वलः** । क्लो । स्थौल्ये । अम. । जटामांस्याम् । लाक्षायाम् । रा.नि.व.२३ । सामर्थ्ये । लक्षणं— "रसादिशुक्रपर्य्यन्तं पुष्टधातुनिमित्तकम् । चेष्टासु पाटवं यत्तु वलं तदभिधीयते ॥" सुश्रुतम् । "तत्तु गर्भस्थस्य षष्ठे मासि जायते ।" सुखबोधः । वलं त्रिविधं सहजं कालजं युक्तिकृतञ्चेति । तत्र सहजं यच्छरीरसत्वयोः प्राकृतं । कालजम् ऋतुविभागजं वयस्कृतम् । युक्तिकृतम् आहारचेष्टायोगजम् । च. सू.११अ. । शरीरे । रूपे । कास्ये । योलै । त्रिका. । रुधिरे । श.च. । शुक्रे । हे.च. । पल्लवे । श.र. । समासे रोपाधिकनामभेदे । "इत्यादिकास्तोत्रयवे- वंशकालविशेषणमिति ।" सा. नि. ।

**वलः** । पुं । काके । अम. । बलभद्रे । श.च. । हस्तिनि । धातौ । वै.निघ. । नखीनामगन्धद्रव्ये । रा.नि.व.१२ ।

**वलःखदिरः** । पुं । खदिरभेदे । পাপড়ীখয়ের ।

**वलकन्दः** । पुं । मालाकन्द । रा.नि.व.७ ।

**वलकरम्** । क्लो । अस्थनि । वै.निघ. । त्रि । वलजनके ।

**वलजम्** । क्लो । फले । मे. । पु । मज्जधातौ । वै.निघ. ।

**वलजा** । स्त्री । Arabian Jasmine.

आरवीयमल्लिकायाम्। यूथिकायाम्। यूँई। मे॰।

**वलदः।** पुं। पर्पटके। क्षेत्रपापड़ा। रा.नि॰ व.४। जीवके। वै.निघ॰। स्त्री। अश्वगन्धायाम्। रा.नि.व ४।

**वलदोनता।** स्त्री। ग्लानौ। क्लान्तौ।

**वलदेवः।** पुं। वायौ। मे॰।

**वलदेवा (वो)।** स्त्री। त्रायमाणालतायाम्। वला लता। मे॰।

**वलनखः।** पुं। व्याघ्रनखे। नखिविशेष। रा॰नि॰व॰१२।

**वलपाण्ड्कर:।** पुं। कुन्दवृक्षे। वै.निघ.।

**वलपुच्छकः।** पुं। काके। वै.निघ॰।

**वलपृष्ठकः।** पुं। रोहितमत्स्ये। वै.निघ.।

**वलभद्रः।** पुं। क्षुद्रकदम्बवृक्षे। रा॰नि.व.२२। लोध्रवृक्षे:। श॰च॰। गवयमृगे। रा॰निघ.१९। त्रि। बलवति। [व.९।

**वलभद्रस्ञकः।** पुं। धूलीकदम्बे। रा.नि

**वलभद्रा (द्रिका)।** स्त्री। त्रायमाणायाम्। वलालता। रा॰नि॰व॰५। वनजातायां गवि। वै.निघ॰। कुमार्य्याम्। मे॰। मायरीटिकायाम्।

**वलमोटा।** स्त्री। वृक्षविशेषे, वलामोटा इत्याम्। जयन्ती गाछ। शॅवरीति लोके। गुणाः—कटुः तिक्ता शीता जयदा कण्ठशोधनी लघुः कफघ्नी मदगन्धिः मूत्रकृच्छ्रविषपित्तवातभूतघ्नी च। रा॰ नि॰व॰४। वै.निघ॰।

**वलयम्।** क्ली। गोलकास्थिभेदे। पुं। गलरोग-भेदे। तल्लक्षणं यथा—"वलास एवायततुन्नतश्च शोफं करोत्यन्नगतिं निवार्य्य। तं सर्व्वथैवाप्रतिवार-वीर्य्यं विवर्ज्जनीयं वलयं वदन्ति॥" मा॰नि॰।

**वलवती।** स्त्री। एलायाम्। वै.निघ॰।

**वलवर्द्धिनी।** स्त्री। जीवके। जटा॰।

**वलवल्लभा।** स्त्री। सुरायाम्। वै॰निघ॰।

**वलवसा।** स्त्री। गन्धके। भा॰।

**वलवान्।** पुं। आहारे। कफे। क्ली। शणवीजे। त्रि। बलिष्ठे।

**वलव्यापत् (त्तिः)।** स्त्री। वलक्षये। लक्षणं —"गौरवं स्तब्धता गात्रे सुखम्लानिर्विवर्णता। तन्द्रा निद्रा वातशोथो वलव्यापत्तिलक्षणम्॥" मा॰म॰१भ॰चि॰।

**वलसम्भवः।** पुं। षष्टिकधान्ये। रा॰नि॰व॰१६।

**वलहा।** (न्)। पुं। कफे। श॰र॰।

**वलक्षः।** पुं। शुक्लवर्णे।

**वलक्षयः।** पुं। वायौ। वै.निघ.।

**वला।** स्त्री। ( Sida cordifolia ) स्वनाम-ख्यातक्षुपविशेषे। বেলেড়া। हिं विज्यन्द। मं वस्. षिकणा। क वेण्णेगरग वलियारा। तें पाचिसीरे, सुप्रुवपुलगमु, करिवेपचेट्टु। तत्-पर्य्यायाः,—वाट्यालकः बलिनी समङ्गा ओदनिका ओदनी भद्रा भद्रौदनी खरककाष्ठिका कल्या-णिनी भद्रबला मोटा पीटी बलाढ्या शीतपाकी वाटिका वाटी वाट्या वाट्याली निलया। सा चतुर्धा बलामहाबलातिबलानागबलाभेदेन। गुणाः —अतितिक्ता मधुरा पित्तातिसारघ्नी बलवीर्य्यदा पुष्टिदा कफरोषशोधनी च। रा॰नि॰व॰४। "बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत्। स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम्॥" भा॰म॰१भ॰। विड़ङ्गायाम्। जयन्त्याम्। रा॰नि.व.२३। महा-समङ्गायाम्। व्रमजशणवृक्षे। वै.निघ॰। स्थूल-वाट्यालके। विका॰।

**वलाका (की)।** स्त्री। वकपङ्क्तौ। त्रिका॰। वकजातीयसङ्घातचारिपक्षिविशेषे। वकविशेष। तत्पर्य्यायाः,—करायिका विसकण्ठिका वकेरुका विषकण्ठा विषकण्ठिका विषकण्ठी शुक्लाङ्गा दीर्घकन्धरा घर्म्मान्तकामुकी श्वेता मेघानन्दा जलाश्रया। एतद्गुणाः श्लवमांसवत्। सु॰सू॰४६अ.।

**वलाटः।** पुं। मुद्गविशेषे। हारि मूग। इ॰च.।

**वलाढ्यः।** पुं। माषे। माष कलाय। रा.नि. व॰१६। स्त्री। वलाक्षुपे। रा नि.व॰४।

**वलात्मिका।** स्त्री। हस्तिशुण्डीक्षुपे। हाति-शुँड़े। श॰र॰। सूर्य्यकमले। राधापद्म। वै.निघ॰।

**वलाद्यघृतम्।** क्ली। हृद्रोगे घृतम्। "घृतं वलानागवलार्ज्जुनानां क्वाथेन कल्केन च यष्टि-कायाः। सिद्ध......।" भा:।

**वलाधिष्ठानम्।** क्ली। वलाधाने। "बलाधि-ष्ठानमारोग्यम्।" च॰सू॰१८॰।

**वलापञ्चकम्।** क्ली। वलातिवलानागवला-महावलाराजवलासु। वै.निघ.।

**वलामोटा।** स्त्री। जयन्त्याम्। रा॰नि॰व॰४। ब्राह्म्याम्। वै.निघ॰। नागदमन्याम्। भा॰।

**वलायः** । पुं । वरुणवृक्षे । श.च. ।

**वलार्ढ्ढम्** । क्ली । ईहार्द्धवले । तल्लक्षणं यथा— "हृदयस्थो यदा वायुः वक्त्रं शीघ्रं प्रपद्यते । मुखस्य शोषं लभते तद्बलार्द्धस्य लक्षणम् ॥" "ललाटे किम्वा नासायां गात्रसन्धिषु कक्षयोः । यदा सञ्जायते स्वेदो बलार्द्धन्तु तदादिशेत् ॥"

**वलालकः** । पुं । पानीयामलके । श.च. ।

**वलाशः** । पुं । कफे । हे.च. ।

**वलासः** । पुं । कफे । वत्रामककण्ठगतमुखरोगे । निदान-लक्षणे—"गले च शोफं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम् । मर्म्मच्छिदं दुस्तरमेतमाहुर्बलाससंज्ञं निपुणा विकारम् ॥" सु-नि. १६प.

**वलासकः** । पुं । शुक्लगत-नेत्ररोगे । लक्षणं यथा—"कांस्याभो भवति शिराहतः स्थितो यो बिन्दुर्वा स तु नीरुजो बलासकाख्यः ।" सु.उ. ४अ. । [वै.निघ. ।

**वलासघ्नी** । स्त्री । तेजोवत्याम् । তেজবল ।

**वलाहम्** । क्ली । जले । वै.निघ. ।

**वलाहकः** । पुं । मुस्तके । र.सा.सं. पिपासाज्वरे । पर्व्वते । मेघे ।

**वलाहकन्दः** । पुं । गुडूचीकन्दे ।

**वलाह्वया** । स्त्री । वाट्यालके । धा.उ.२अ. ।

**वलिः** । पुं । गन्धके । र.सा.सं.गदमुरारिरसे । चग्निमन्थवृक्षे । स्त्री । त्रिवल्याम् । रा.नि.व.१८ । मलद्वारान्तर्वल्याम् । গোগল :- सा त्रिविधा अभ्यन्तराङ्गुलान्तरभूता, यथाक्रमं प्रवाहणी विसर्ज्जनी संवरणी चेति कथ्यते । चतुरङ्गुलायताः सर्व्वास्तिर्य्यगेकाङ्गुलोच्छ्रिताः । "शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः । गजतालुनिभाश्चापि वर्णतः संप्रकीर्त्तिताः ॥" सु.नि.२अ. । लोहमांसे ।

**वलिका** । स्त्री । अतिबलायाम् । रा.नि.व.४ ।

**वलिचन्दनम्** । क्ली । रक्तचन्दने । वै.निघ. ।

**वलिनी** । स्त्री । वाट्यालके । श.च. ।

**वलिपुष्टः** । पुं । काके । अम. ।

**वलिप्रियः** । पुं । लोध्रवृक्षे । श.च. । कदम्बवृक्षे । वै.निघ. ।

**वलिभः** । पुं । वृद्धपुरुषे । अम. ।

**वलिभुक्** । पुं । चटके । काके । वकि । त्रिका. ।

**वलिमान्** । त्रि । जराजन्यवलियुक्ते । अ.टी.भ. ।

**वलिमुखः** । पुं । वानरे । अ.टी.र.

**वलिवसः (सा)** । पुं, स्त्री । गन्धके । वै.निघ. ॥

**वलिष्ठः** । पुं । उष्ट्रे । रा.नि.व.१९ । त्रि । नलवति ।

**वली (इन्)** । पुं । सिंहे । रा.नि.व.१९ । उष्ट्रे । मेषे । वनशूकरे । कफे । महिषे । कुन्दपुष्पवृक्षे । छटा. । माषे । गौरकलाये । हे.च. । पारिभाष्वल्ये । शल्लकीनिर्य्यासे । गन्धके । वै.निघ. । स्त्री (ली) । वली, मांसाङ्कुरे । अ.टी.भ. ।

**वलीनः** । पुं । वृश्चिके । वै.निघ. ।

**वलीमुखः** । पुं । मर्कटे । अम.

**वलीयान् (स्)** । पुं । गर्द्दभे । वै.निघ. ।

**वलीवर्द्दः** । पुं । वृषे । अम. ।

**वलीशकः** । पुं । आम्रातकवृक्षे । वै.निघ. ।

**वलोत्तमा (त्तरा)** । स्त्री । वलायाम् । रा.नि.व.४ । वै.निघ ।

**वल्यः** । त्रि । वलकरे । मे. । क्ली । हृदये । पार्श्वास्थनि । पार्श्वभागे । वै.निघ. । शुक्रे, प्रधानधातौ । मे. । पुं । चिरीपवृक्षे ।

**वल्यवर्गः** । पुं । वलकरमहाकषायवर्गे । स चतुष्कस्य प्रथमो दशकः । यथा—"ऐन्द्र्यर्षभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धास्थिरारोहिणीवलातिवला इति दशेमानि वल्यानि भवन्ति ।" রাখালশসা, আলাকুশী, শতমূলী, মাষাণী, ভূমিকুষ্মাণ্ড, অশ্বগন্ধা, শালপাণি, কট্‌কী, পীত বেলেড়া, শ্বেত বেলেড়া । च.सू.४अ. ।

**वल्या** । स्त्री शिमुडीक्षुपे । अतिवलायाम् । रा.नि.व.४ । अश्वगन्धायाम् । प.मु. । वलायाम् । वै.निघ.२भ. स्वयङ्-चि.सालीशादिचूर्णे । प्रसारण्यां । गन्धभादुलि । रा.नि.व.५ । पाषाणभेदे । পাথরকুচি । व. निघ. ।

**वल्याख्यपञ्चमूलम्** । क्ली । बलाश्वगन्धाशिमुडीपाषाणभेदातिवलासु । अन्यत्—हरिद्रागुडूचीविदारीशारिवामेषशृङ्गीषु । वै.निघ. ।

**वल्लः** । पुं । त्रिगुञ्जापरिमाणे ।

**वल्लकः** । पुं । निष्पावे ।

**वल्लकी** । स्त्री । शल्लकीवृक्षे ।

**वल्लरी।** स्त्री। लतायाम्। मेथिकायाम्।

**वल्लवः।** पुं। पाचके। त्रिका०।

**वल्वजा।** स्त्री। तृणविशेषे। उलू। मं, वम्. मीलु। कं मोटे। गुणाः—मधुरा शीता पित्त दाहतृष्णाघ्नी वातला रुच्या कण्ठशोधनी च। रा. नि.व.८।

**वष्कयः।** पुं। एकवर्षदेशीयवत्से। वै.निघ.।

**वष्कय(यि)नी।** स्त्री। वहुदिनप्रसूतायां गवि। अम.ठो.अ.।

**वस्तः।** पुं। छागे। त्रिका.।

**वस्तकम्।** क्ली। शाकम्भरलवणे। वै.निघ।

**वस्तकर्णः (र्णी (इन्))।** पुं। अजकर्णशालवृक्षे। धुनोव गाछ। रा.नि.व. ९।१२३।

**वस्तगन्धकः।** पुं। स्वरगन्धतुलसीवृक्षे। रा.नि. व.४। वै.निघ.२भ.वा.व्या.चि.। [रा.नि.व.

**वस्तगन्धा।** स्त्री। अजगन्धायाम्। वनयमानी। ४। सु.चि.३०अ.। वै.निघ.२भ.वा.व्या.चि.षड् शीतिगुग्गुलौ। चैत्रयमान्याम्। शाकुनी,। च.द. यक्ष्मा.चि.कल्याणगुडे।

**वस्तगन्धाकृतिः।** स्त्री। पुत्रदात्रीलतायाम्। वै.निघ.।

**वस्तमोदा।** स्त्री। अजगन्धायाम्, वनयमान्याम्। रा.नि.व.६।

**वस्ताण्डम्।** क्ली। छागाण्डे।

**वस्तान्त्री।** स्त्री। अजान्त्रीलतायाम्। रा.नि. व.३। सु.चि.२६अ.। च.द.रूप चि.।

**वस्ताम्बु।** क्ली। छागमूत्रे। भा.म.चित्तविभ्रम. चि.। "वस्ताम्बुपिमिश्रितानि।"

**वहलः।** पुं। इक्षौ। वै.निघ.। त्रि। स्थूले। भा.म.कुष्ठ.चि.।

**वहलगन्धकृत्।** पुं। पवित्रतृणशालिधान्ये। पक्षिराजधान। रा.नि.व.१६।

**वहलत्वक्।** पुं। भूर्जवृक्षे। शुक्लरोध्रे। वै. निघ.।

**वहलदलः।** पुं। कृष्णशोभाञ्जने। कालसजिना। वै.निघ.।

**वहलवर्त्म।** क्ली। नेत्रवर्त्मगतरोगभेदे। लक्षणं— "वर्त्मोपचीयते यस्य पिड़काभिः समन्ततः। सवर्णाभिः समाभिश्च विद्यादवहलवर्त्म तत्॥" सु.उ. ३अ.।

**वहलाङ्गः।** पुं। मेषशृङ्ग्याम्। वै.निघ।

**वहिः।** अ०। वहिर्भागे। वाहिरे। वै.निघ.।

**वहिःकुटीचरः।** पुं। कुलीरके। त्रिका.।

**वहिर्गलगण्डः।** पुं। गलरोगभेदे। स त्रिविधः वातजकफजमेदोजभेदात्। लक्षणं यथा— "प्रवनद्धे ममेटीभिः गलगण्डो भवेद्वहिः। वर्द्धमानः स कालेन मुष्कवल्लम्बते निरुक्॥ कृष्णोऽरुणो वा तोदाढ्यः स वातात् कृष्णराजिमान्। वृद्धम्लानुगतो शोषं कुर्य्याच्च विरसास्यताम्॥ इति। स्थिरः सवर्णः कण्डुमान् शीतस्पर्शो गुरुः कफात्। वृद्धस्लानुगतो नेदं कुर्य्याच्च मधुरास्यताम्॥ मेदसः श्लेष्मवद्धानि हड्डीः सोऽनुविधीयते। देहं हृदयं कुरुते गले शब्दं स्वरेऽल्पताम्।" इति वा.उ.२१अ.।

**वहिर्मृजा।** स्त्री। स्नानादिना वहि.शुद्धौ। वा.चि.५अ.।

**वहुः।** त्रि। अधिके। अधिक। पुष्कले। पृष्ठे। वै-निघ.।

**वहुकः।** पुं। हरिणविशेषे। वै.निघ.। अर्के। दात्यूहे। जलखातके। कर्कटे। मे.।

**वहुकण्टकः।** पुं। क्षुद्रगोक्षुरे। यवासक्षुपे। दुरालभा। भिगुड़ीक्षुपे। रा.नि.व.४। कृष्णपुष्प-क्षुपे। र मा.। हिन्तालवृक्षे। रा.नि.व.९। कण्टक तालवृक्षे। सुहीवृक्षे। मनसा गाछ। पाटलापक्ष-विशेषे। श्वेत पारुल। खर्जूरीवृक्षे। वै.निघ.।

**वहुकण्ट(ण्टि)का।** स्त्री। अग्निदमनीक्षुपे। रा.नि.व.४।

**वहुकण्टा।** स्त्री। कण्टकार्य्याम्। रा.नि.व. ४। कर्कटिकायाम् काँकुड़ गाछ। वै. निघ.।

**वहुकन्दः।** पुं। शूरणे। ओल। वाटुशूरणे। वुनो ओल। स्त्री। कर्कटाम्। रा.नि.व.७।

**वहुकन्या।** स्त्री। गृहकन्यायाम्। घृत-कुमारी। रा.नि.व.।

**वहुकरः।** पुं। उष्ट्रे। त्रिका.। क्षुद्रवदरे। त्रि। सम्मार्जके। अम.। स्त्री। सम्मार्ज्जन्याम्। हे.च.।

**वहुकर्णिका।** स्त्री। आखुकर्ण्याम्। मूषा काणी गता। रा.नि.व.१।

प.मु.। अहल्याम्। रा.नि.व.४। प.द.यथा.भि. मताधारते।

**बहुपुष्पः**। पुं। पारिभद्रवृक्षे। পালিধা মান্দার रा.नि.व.८। निम्बविशेषे।

**बहुपुष्पिका (ष्पा)**। स्त्री। धातकीवृक्षे। रा.नि.व६। भूम्यामलक्याम्।

**बहुप्रजः (जा)**। पुं। शूकरवृक्षे। মূঞ্জ। रा.नि.व.४। वन्यशूकरे। हे.च.। कुक्कुटे। वनहुह्ह। মুষিকে। मद्दकन्दे। वै.निघ.।

**बहुप्रियः**। पुं। यवकर्षे। प.मु.।

**बहुफलः**। पुं। वंशधान्ये। प.मु.। विकङ्कत-वृक्षे। বঁইচ গাছ। रा.नि.व.। तेजःफलवृक्षे। रा.नि.व.११। पटवृक्षे। कदम्बवृक्षे। मे.। कच्छोलि। भ्रमवृक्षे। वै.निघ.।

**बहुफला (ली)**। स्त्री। माषपर्ण्यां। मायाणी। रा.नि.व.३। काकमाच्याम्। গুড়কাউনী। अविपाकदत्याम्। বৃহতীবিশেষ। रा.नि.व.४। काकोदुम्बरिकायाम्। কাকডুমুর। ग्रामयक्ष्मा। मे.। गुञ्जायां। मदार्कदत्याम्, चन्द्रदारवेलाम्। উচ্ছে গাছ। याचदयाम्। কাঁকুড়। त्रपुष्याम्। শশা গাছ। मगीमारी। रा.नि.व.७। भूधात्र्यां। ভুঁই আমলা। भा.। पारिशादत्ये। वै.निघ.।

**बहुफलिका**। स्त्री। भूबदर्याम्। ডেমা কুল, নেটো কুল। रा.नि.व.११।

**बहुफे(पा)नका (णा,ना)**। स्त्री। सप्तलायां। পীতহুর শেহুণ্ড। रा.नि.व.४। शङ्खिन्याम्। শঙ্খহুলী। वै.निघ.।

**बहुबलः**। पुं। सिंहे। रा.नि.व.१९।

**बहुवल्कः**। पुं। प्रियालवृक्षे। পিয়াশাল। रा.नि.व.११।

**बहुबीजः**। पुं। बीजपूरवृक्षे। জামীর গাছ। वै.निघ.। आत्म्यवृक्षे। আতাগাছ। म.प.। स्त्री (जा)। गिरिकदलीवृक्षे। বীচে কলা। रा.नि.व.११।

**बहुमञ्जरी**। स्त्री। तुलस्याम्। रा.नि.व.२१।

**बहुमलः**। पुं। सीसके। সীসা। र.मा.।

**बहुमूत्रता**। स्त्री। बहुमूत्ररोगे। निदा.।

**बहुमूर्त्तिः**। स्त्री। वनकार्पास्याम्। म.च.।

**बहुमूलः (कः)**। पुं। इत्कटे। ওকড়া। र.मा.। शिग्रा.। स्थूलशरे। রামশর। रा.नि.व ८। शिग्रुवृक्षे। रा.नि.व.७। वनकार्पासवृक्षे।

**बहुमूलकम्**। क्ली। उशीरमूले। বেণার মূল। भा.। सोपर्के।

**बहुमूला**। स्त्री। शतावर्याम्। শতমূলী। रा.नि.व.४। आम्रातकवृक्षे। আমড়া গাছ। वै.निघ.। (ली) माकन्याम्। কন্দবিশেষ। रा.नि.व ७।

**बहुरन्ध्रिका**। स्त्री। मेदायाम् (अभावे चद-गन्धा)। रा.नि.व.५।

**बहुरसः**। पुं। इक्षौ। वै.निघ.। स्त्री। महा-ज्योतिष्मतीलतायाम्। বড় লতাফটকী। रा.नि.व.३।

**बहुरसालः**। पुं। आम्रवृक्षविशेषे, राजाम्रे। রাজ আম। रा.नि.व.११।

**बहुरु(रू)हा**। स्त्री। चन्द्रगुड़ूच्याम्। रा.नि.व.३।

**बहुरूपः(कः)**। पुं। सरटे। বহুরূপী। मे.। शालनिर्यासे। ধুনা। अम.। विष्णौ। म.ए.। स्त्री (पा)। वनकार्पास्याम्।

**बहुरेणुः**। पुं। श्वेतकिणिहीवृक्षे। वै.निघ.।

**बहुरोमा (न्)**। पुं। मेषे। हारा.। वन्य-च्छागे। वानरे। वै.निघ.।

**बहुलम्**। क्ली। श्वेतमरिचे। रा.नि.व.६। आकाशे। सं.।

**बहुलगन्धा**। स्त्री। सूक्ष्मैलायाम्। ছোট এলাচ। रा.नि.व.६।

**बहुलच्छदः**। पुं। शोभाञ्जनवृक्षे। লাল সজিনা। मद.व.७। रक्तशिग्रौ। লাল সজিনা। रा.नि.व.७।

**बहुलवणम्**। क्ली। औषरलवणे। रा.नि.व.६।

**बहुलवर्त्म(न्)**। क्ली। नेत्रवर्त्मगतरोगभेदे। See बहलवर्त्म।

**बहुलवल्कलः**। पुं। चारवृक्षे। পিয়াশাল গাছ। रा.नि.व.११। भूर्जवृक्षे। म.प.।

**बहुला**। स्त्री। एलायाम्। प.मु.। च.द.राज-यक्ष्म.चि.सितोपलादौ। नागवल्लीलतायाम्। পাণ লতা। गवाक्ष्याम्। গাই। प.मु। कटुकयाम्।

कट्की। पुष्पलतायाम्। महा शतावरी। बड़ शतमूली। मापपर्ण्याम्। गोलकचे। मे.। हरिद्रायाम्।

**वहुलाङ्कुरः।** पुं। मेषशृङ्गी लतायाम्। মেড়াশিঙা। वै.निघ.।

**वहुलिङ्गा।** स्त्री। स्फोटी। ওকড়া, (পূর্ব্ববঙ্গে কানিয়াবিষর)। प.मु.।

**वहुलिङ्गी।** स्त्री। कुस्तुम्ब्याम्।

**वहुलोहसङ्करभयम्।** स्त्री। स्वर्णे। वै.निघ.।

**वहुवर्णः।** पुं। गोधेरकजातिभेदे। सु.कल्प. ८अ.। See गोधेरः।

**वहुवल्कलः।** पुं। प्रियालवृक्षे। रा.नि.व.११। भूर्ज्जवृक्षे। वै.निघ.।

**वहुवल्कः।** पुं। प्रियालवृक्षे।

**वहुवल्ली।** स्त्री। लताजहस्तिकायां। रा.नि.व.४।

**वहुवारः (कः)।** पुं। (Cordia myxa ; or C. Latifolia.) श्लेष्मान्तकवृक्षे। চালতা গাছ, বোহরী। हिं बहुआर, लसोरा। बम्. भोकर। उत्. बउ। पारस. सगृपिस्तन्। ता. विड़ि। तत्पर्य्यायाः,—शेलुः सेलुः शीतः श्लेष्मातः श्लेष्मातकः उद्दालकः पिच्छिलः भूतवृक्षः। गुणाः—कटुः हिमः मधुरः कषायः स्वादुः पाचकः क्रिमि-शूलहरः कफकरः आम-रक्तास्र-व्रणविस्फोटहरश्च। रा.नि.व.११। "बहुवारो विष-स्फोट व्रण-वीसर्प कुष्ठनुत्। मधुरस्तुवरस्तिक्तः केश्यश्च कफपित्तजित्। फलमाममस्य विष्टम्भि रूक्षं पित्तकफास्रजित्। तत् पक्वं मधुरं स्निग्धं श्लेष्मलं शीतलं गुरु॥" भा. आम्रव.।

**वहुविषाणः।** पुं। मत्स्यभेदे। शफर। वै.निघ.।

**वहुविस्तीर्णा।** स्त्री। कुपिकायाम्। कूचई। श.च.।

**वहुवीजः।** पुं। वीजपूरके। सिताफले। আতা। श.च.। स्त्री। गिरिकदल्याम्।

**वहुवीर्य्यः।** पुं। तण्डुलीयशाकवृक्षे। কাঁটা-নটে। शाल्मलिवृक्षे। मरुवकवृक्षे। गन्धतुलसी। रा.नि.व.५।८।१०। विभीतकवृक्षे। अटा.। स्त्री। भूम्यामलक्याम्। रा.नि.व.५। दूर्व्वायाम्।

**वहुशत्रुः।** पुं। चटकपक्षिणि। श.च.।

**वहुशल्यः।** पुं। रक्तखदिरवृक्षे। रा.नि.व.८।

**वहुशाखः।** पुं स्नुहीवृक्षे। মনসা গাছ। रा.नि.व.८।

**वहुशिखा।** स्त्री। महाराष्ट्रीक्षुपे। কাঁচড়া-দাম। रा.नि.व.४। जलपिप्पल्याम्।

**वहुशूका।** स्त्री। श्यामाशाली। धान्यविशेष। रा.नि.व.१६।

**वहुसन्ततिः।** पुं। वंशभेदे। বেউড় বাঁশ। श.च.।

**वहुसम्पुटः।** पुं। विष्णुकन्दनाम महाकन्द-शाके। विष्णुकन्द। रा.नि.व.७।

**वहुसारः।** पुं। विट्खदिरवृक्षे, खदिरवृक्षे। रा.नि.व.८।

**वहुसिक्थः।** त्रि। बहुसारविशिष्टे।

**वहुसुता।** स्त्री। शतमूल्याम्। শতমূলী। प.मु.।

**वहुसूः।** स्त्री। वराहपत्न्याम्। শূকরী। श.र. बहुप्रसवायां स्त्रियाम्। त्रिका.।

**वहुसूतिः।** स्त्री। बहुप्रसूतायां गवि। अम.। बहुसन्तानप्रसविन्यां स्त्रियाम्।

**वहुस्रवा।** स्त्री। शल्लकीवृक्षे। श.च.। लज्जा-लुकायाम्। লজ্জাবতী। वै.निघ.।

**वहुस्रावः।** पुं। स्नुहीवृक्षे। মনসা গাছ। वै.निघ.। लज्जालुकायाम्।

**वहुस्वनः।** पुं। शङ्खे। पेचके। वै.निघ.।

**वहुक्षारः।** पुं। सर्व्वक्षारे, साबान् इति ख्याते द्रव्ये। वै.निघ.।

**वहुक्षोरः।** पुं। सप्तपर्णवृक्षे। रालातनवृक्षे।

**वहेड़कः।** पुं। विभीतकवृक्षे। বহেড়া গাছ।

**वह्वपत्यः।** पुं। कुक्कुटे। मूषिके। शूकरे। रा.नि.व.१९। मुस्तवृक्षे। मुंज। वै.निघ.।

**वह्नी।** स्त्री। मत्स्याक्ष्याम्। হিঞ্চা বা আন্নী শাক। वै.निघ.।

**वाकुची।** स्त्री। सोमराज्याम्। সোমরাজ, হাকুচ্। गुणाः—दृष्टा वातघ्ना मधुरा गुरुः सरा कफहरी कृमिदोषघ्नी पित्तघ्नी च। वै.निघ.।

**वाड़सः।** पुं। मत्स्ये। वै.निघ.।

**वाड़वेयौ।** पुं। अश्विनीकुमारौ। श.मा.।

चर्पटीरे। "नुयन्त्रं वत्सनाभस्य पलमेकं सुशु-द्धितम्। षट्भागं शतं दत्त्वा चतुर्भागावशेषितम्। पाठा चातिविषा चैव जीरकं पिप्पलीव च। चामुष्टि ग्रलपुष्पा च धातकी मुस्तकं तथा। जातीफलच संचूर्ण्य निषिपेत्तच यत्नतः। बाला-नामामयनाशः रत्नाख्यं सुधाहयम् .....॥" रस.र.।

**बालग्रासिः।** पुं। उल्लुके, चैतकीटे। उँकुन। जटा.।

**बालग्रोभो।** स्त्री। वृक्षविशेषे। वै.निघ.।

**बालक्रीड़नः (कः)।** पुं। कपर्दके। कड़ि। रा.नि.व.१३।

**बालगर्भिणी।** स्त्री। प्रथमगर्भिण्याम्। प्रथम गर्भाडि। जटा.।

**बालग्रहः।** पुं। बालपीड़ाकर-स्कन्दादि-नव-ग्रहेषु। यथा—स्कन्द-स्कन्दापस्मार-शकुनिरेवतीपूत-नान्धपूतनाशीतपूतनामुखमण्डिकानैगमेषा इति पितृग्रहसंज्ञिताः। एत एव पूजादेवीः कुमारान् हिंसुः। सु.उ.२७५.। एते च शरवनस्थस्य स्कन्दस्य रक्षार्थं कृत्तिकोमाग्निभिः सृष्टाः। "पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना। मनुष्य-विग्रहाः पञ्च सप्त स्त्रीविग्रहाः ग्रहाः। स्कन्दो विशाखो मेषाख्यः श्वग्रहः पितृसंज्ञितः। शकुनिः पूतना शीतपूतना दृष्टिपूतना। मुखमण्डिका तद्वत् रेवती शुष्करेवती। तेषां ग्रहीष्यतां रूपं प्रततं रोदनं ज्वरः॥" वा.उ.१५.।

**बालच(चा)तुर्भद्रिका।** स्त्री। बालरोगे अवलेहविशेषे। च.द.। "घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम्। शिशोर्ज्वरातिसारघ्नं कासश्वास-वमीहरम्॥" रस.र.। घनः मुस्तकः॥ See चातुर्भद्रावलेहिका।

**बालचिकित्सा।** स्त्री। कौमारभृत्यायाम्। शिशुचिकित्सा। "गर्भोपक्रमविज्ञानं सूतिकोप-क्रमस्तथा। बालानां रोगशमनं क्रिया बाल-चिकित्सितम्॥" वैद्य.सं.२८.।

**बालजीवनम्।** क्ली। दुग्धे। वै.निघ.।

**बालतनयः।** पुं। खदिरवृक्षे। अम.। बालक-पुत्रे। च.टी.भ.।

**बालतन्त्रम्।** क्ली। कुमारभृत्यायाम्, धात्री-विद्यायाम्। तिका.।

**बालतृणम्।** क्ली। नवतृणे। अम.।

**बालदलकः।** पुं। खदिरवृक्षे। अम.।

**बालधिः।** पुं। सकेशलाङ्गूले। अम.।

**बालधिप्रियः।** पुं। चामरमृगे।

**बालनखः।** पुं। व्याघ्रनखे। नखी। वै.निघ.।

**बालपत्रः (कः)।** पुं। खदिरवृक्षे। रा.नि.व.८। तिका.। दुरालभायाम्। रा.नि.व.४।

**बालपत्रा (त्री)।** स्त्री। दुरालभायाम्। खदिरवृक्षे। वै.निघ.।

**बालपर्णी।** स्त्री। मेथिकायाम्। मेति। वै.निघ.।

**बालपुष्पिका (ष्पी)।** स्त्री। यूथिकायाम्। यूँई। रा.नि.व.१०। जटा.।

**बालभः।** पुं। सुदन्तगजे। रा.नि.व.१९।

**बालभद्रकः।** पुं। खनिजविषभेदे। प्र.प.।

**बालभैषजम्**
**बालभैषज्यम्** } क्ली। रसाञ्जने। रा.नि.व.१३।

**बालभोज्यः।** पुं। चणकवृक्षे। रा.नि.व.१६।

**बालमत्स्यः।** पुं। मत्स्यविशेषे। लक्षणं यथा—नातिस्थूलो वृत्तमुखः शल्कहीनः दन्तवान् श्मश्रुयुक्तः दीर्घकायः सन्ध्यायां रात्रिशेषे च सञ्चरणशीलः। गुणा—पथ्यः बल्यः हृद्यश्च। रा.नि.व.१०।

**बालमूलकम्।** क्ली। अचिरजातकोमलमूलके। कचि मूलो, बागान मूल। गुणाः—कोष्णं तिक्तं तीक्ष्णं मधुरं कटुरसं जीर्णं तत् मूत्रदोषघ्नं श्वासार्शः-कासगुल्मक्षयनेत्ररोगघ्नं कण्ठ्यं बल्यं रुच्यं मला-विकृतिघ्नम् उष्णं शोफघ्नं। आम तत्सयाहि रुच्यं वातकफघ्नम्। पक्वं तत् कटूष्णं पित्तदाहप्रकोप-करञ्च। वैश्वानरेण युक्तं तत् बलकृत् हृद्रोग-शूलप्रशमनञ्च। रा.नि.व.७।

**बालमूलिका।** स्त्री। चामाननवृक्षे। आमड़ा गाछ। वै.निघ.।

**बालमूषिका।** स्त्री। छुछुन्दर्याम्। क्षुद्र-मूषिकायां। छोट इन्दुर। अम.। तत्पर्यायाः,—गिरिका चिक्रः चिक्का नेत्रानकुलः।

**बालमृगः।** पुं। हरिणादिमृगवर्गे। "हरिणैण-कुरङ्गर्क्ष्यपृषतन्यङ्कुशम्बराः राजीवोऽपि च मुण्डी च इत्याद्या जाङ्गलसंज्ञकाः॥" चक्र.चि.।

**वालरसः ।** पुं । वालज्वराधिकारे रसः । "शाणं मृतस्य सूतस्य गन्धकस्य च तत्समं । सुवर्णमाक्षिकस्यापि अर्द्धभागं प्रयोजयेत् । ततः कज्जलिकां कृत्वा लौहपात्रे दृढे नवे । केशराजस्य भृङ्गस्य निर्गुण्ड्याः स्वरसप्लवम् । शुभे शिलामये पात्रे लौहदण्डेन मर्द्दयेत् । शुष्कमातपयोगात्तु गुटिकां कारयेत्ततः । प्रमाणं सर्षपाकारम् वालानाञ्च योजयेत् ॥" পারা ও গন্ধক সমান ভাগ, স্বর্ণমাক্ষিক পারদার্দ্ধ ভাগ; কজ্জলি করিয়া কেশুড়ে, ভীমরাজ ও নিশিন্দাপাতার রস সহ প্রস্তরময় পাত্রে লৌহদণ্ডদ্বারা মর্দ্দন করিয়া, সর্ষপপ্রমাণ বটী করিবে। रस.र. ।

**वालराजम् ।** क्ली । वैदूर्य्यमणौ । श.र. ।

**वालरोगः ।** पुं । शिशूनां रोगे । तस्य निदानलक्षणानि—"धात्र्यास्तु गुरुभिर्भोज्यैः विषमैर्दोषलैस्तथा । दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति । मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः । दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः ॥" सु.शा.१०अ. "वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः । क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः ॥ स्विन्नो भिन्नमलो वालः कामलापित्तरोगवान् । तृष्णालुरुष्णसर्व्वाङ्गः पित्तदुष्टं पयः पिबन् ॥ कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान् । निद्रार्दितो जडः शूनो वक्राक्षश्छर्द्दनः शिशुः ॥ द्वन्द्वजे द्वन्द्वजं रूपं सर्व्वजे सर्व्वलक्षणम् । ज्वराद्या व्याधयः सर्व्वे महतां ये भवन्ति तु (?) । वालानामपि ते तद्वत् बोद्धव्या भिषगुत्तमैः । वालानामेव ये रोगा भवन्ति महतां न च । तालुकण्टकमुख्यांस्तानथास्य यततः ॥" यथा—तालुकण्टकमहापद्मककुकूणकतुण्डिगुदपाकाहिपूतनाजगल्लीपरिगर्भिकदन्तोद्भेदादयः । एषां लक्षणानि स्वस्वपर्य्याय शब्दाद्य । निदा. ।

**वालवत्सः ।** पुं । कपोते । वै.निघ. ।

**वालवर्त्तिः ।** स्त्री । वालनिर्म्मितवर्त्याम् । सु.चि.२अ. ।

**वालवाय(ज)म् ।** क्ली । वैदूर्य्यमणौ । त्रिका. ।

**वालवाह्यः ।** पुं । वन्यच्छागे । हारा. ।

**वालविल्वम् ।** क्ली । कोमलविल्वफले । কচি বেল । वैनिघ.२भ.च.सा.चि.पञ्चादिकषाये ।

**वालवैद्यः ।** पुं । वालचिकित्सके । निदा. ।

**वालव्यजनम् ।** क्ली । चामरे । চামর । यथा—"वालव्यजनमौजस्यं मक्षिकादीन् व्यपोहति ॥" राज.२प. । "शीत-दाह-श्रम खेद-मूर्च्छाघ्नो मलनाशिनः ।" सु.चि.२४अ. ।

**वालसन्ध्याभः ।** पुं । अरुणवर्णे ।

**वालसूर्य्यः ।** पुं । प्राभातिकसूर्य्ये । वन्यच्छागे । वै.निघ. ।

**वालसूर्य्य(क)म् ।** क्ली । वैदूर्य्यमणौ । त्रिका. ।

**वालहाटकः ।** पुं । क्षुद्रधुस्तूरवृक्षे ।

**वाला ।** स्त्री । मूर्व्वालतायां । रा.नि.व.६ । नारिकेलवृक्षे । हरिद्रायाम् । मे. । आम्रातकवृक्षे । यूथ्यां । যূঁই । वै निघ. । पाठायां । नीलझिण्ट्यां रा.नि.व.६।१० । कुमार्य्याम् । কুমারী । श.र. । ह्रीवेरे । বালা । श.च. । भैष.शोथ.चि.वृहच्छुष्कमूलाद्यतैले । षोडशवर्षीयस्त्रियाम् । "वालेति गीयते नारी यावद्वर्षाणि षोडश ।" सा शीतशरत्कालयोः प्रशस्ता दृढा च । राज. ।

**वालाङ्गी ।** स्त्री । दुग्धपुष्प्याम् ।

**वालाङ्घ्रिः ।** पुं । मदपुष्पायाम् । বন নীল । रस.र.विपरीतमल्लतैले ।

**वालार्कः ।** पुं । श्वेतार्कवृक्षे । সাদা আকন্দ-গাছ । प्रातःसूर्य्ये ।

**वालाम्ल(न्) ।** क्ली । वालुकायां । भा.म.३भ.उदर.चि. ।

**वालाची ।** स्त्री । केशपुटमसृतौ । श.च. ।

**वालिका ।** स्त्री । एलायाम् । श.र. । अम्बष्ठायाम् । পাঠা । रा.नि.व.५ । कुमार्य्याम् । घृतकुमार्य्याम् । सुपव्याम् । कन्यायाम् । कर्णभूषणे । शर्करायाम् ।

**वालिकाम्बिका ।** स्त्री । अम्बष्ठायाम् ।

**वालि(ला)शः ।** पुं । शिशौ । मे. । मूत्रकृच्छ्ररोगे । श.र. । क्ली । उपाधाने । श.मा. ।

**वालीकः ।** पुं । "দসেরীতি" ख्याते पक्षिभेदे । तत्पर्य्याय-गुणाः,—"वालीको वर्त्तिपटको वार्त्तिकः संवरः स्मृतः । वालीको मधुरः शीतो रुचश्च कफपित्तनुत् ॥"

**वालुः (का) ।** पुं, स्त्री । कर्पूरे । श.च. । वै.निघ.२भ.श्वास.चि.शृङ्ग्यादिचूर्णे । चिर्भटिकायां । ফুটী । जटा. । सिकतायाम् । वालुका ।

तत्पर्य्याया:—सिकता: सिकता सिता वालिका शर्करा शीतला सूक्ष्मशर्करा प्रवाही सूक्ष्मा रा-मुखा पानीयवर्षिका । गुणा:—लेखनी शीता प्रणोरःक्षतनाशिनी च । भा. । तन्नामख्यातयन्त्रे । वालुकायन्त्र । (का) एलवालुके । छपा. । श.च. ।

**वालुकम्** । क्ली । एलवालुके । अम. । शाक-विशेष । वै.निघ.१भ.अर्श.चि. । वालुकफल । पानीयवालुके । वै.निघ.अर्श.चि.पथ्यापथ्ये । श्वेत-मरिचे ।

**वालुकागड:** । पुं । मत्स्यविशेषे । বেলে-গড়্গড়ে মাছ । हारा. ।

**वालुकात्मिका** । स्त्री । शर्करायाम् । চিনি । श.च. ।

**वालुकायन्त्रम्** । क्ली । औषधपाकार्थयन्त्रभेदे । वालुकायन्त्र । यथा—"भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपके । कूपिकाकण्ठपर्य्यन्तं वालुकाभिश्च पूरिते । भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते । वालुकायन्त्रम्...... ।" भा. ।

**वालुकास्वेद:** । पुं । तप्तवालुकाभिः स्वेदे । গুঁড়ে স্বেদ । यथा—"वातश्लेष्मकृते स्वेदान् कार-येद्रुपनिर्म्मितान् । स्निग्धः स्वेदो निषिद्धोऽत्र विना केवलवातजान् । खर्परभृष्टपटस्थितकाञ्जिकसंसिक्त-वालुकास्वेदः । शमयति वात-कफामय-मस्तक-शूलाङ्गभङ्गादीन् ।" भा. ।

**वालुकिनम्** । क्ली । हिङ्गुले । श.चि. ।

**वालुकी(ङ्की)** । स्त्री । चैत्रकर्कटिकायाम् । चिका. । वालुकर्कटिकायाम् । तत्पर्य्याया:—बहुफला स्निग्धफला चैत्रकर्कटी चैत्रफला काण्डिका मूषला । गुणा:—"वालुकी मधुरा शीता श्रमाध्मान-हृद्भ्रमापहा । पित्तास्रशमनी रुच्या कुरुते कामपीनतां ॥" शरत्पक्वा सा दीपकरी, हेमन्तजा पित्तहरा रुच्या । अर्द्धपक्वा पीनसकरी, पक्वा अतिमधुरा । रा.नि.व.७ ।

**वालुकेलम्** । क्ली । इलायां भूम्याम् वालुका जाते एलवालुके । च.वि.८च. ।

**वालुङ्गिका(ङ्गी)** । त्रि । कर्कट्यां । श.र. ।

**वालूक:** । पुं । विषभेदे । हे.च. ।

**वालेय:** । पुं । गर्दभे । त्रिका. । चाणक्यमूलके । रा.नि.व.७ । सुश्रुते । सु.क.१२च. । भङ्गारवृक्षा । महाकरञ्जा । विश्व. ।

**वालेयशाक:** । पुं । भार्ग्याम् । বামনহাটী । अम. ।

**वालेष्ट: (फल:)** । पुं बदरवृक्षे । কুল গাছ । रा.नि.व.११ ।

**वालेला** । स्त्री । एलायाम् । वै.निघ. ।

**वाल्मीक:** । पुं । वल्मीके । উইঢিপি ।

**वाल्यम्** । क्ली । वालभावे ।

**वाल्वङ्किरा** । स्त्री । दुर्वालभायाम् । কাঁকুড় গাছ । हारा. ।

**वाष्कलम्** । क्ली । रौप्ये । वै. निघ. ।

**वाष्प:** । पुं । अश्रुणि । अम. ।

**वाष्पक:** । पुं । मारिषशाके । নটে শাক । वै.निघ. ।

**वाष्पिका** । स्त्री । जीरकभेदे । वै.निघ. ।

**वाह: (हा)** । पुं, स्त्री । वाहौ । श.टी.र. ।

**वाहु:** । पुं । हस्ते । कफादङ्गुल्यपर्य्यन्तावयवे । तत्पर्य्याया:—भुजः प्रविष्टः दोः दोषः वाहुः शाखः । त्रिका. ।

**वाहुकुण्ठ:** । पुं । खोटके । কোঁপা । चिका. ।

**वाहुज:** । पुं । स्वयञ्जाततिले । मे. ।

**वाहुपिण्डिका** । स्त्री । प्रत्यङ्गभेदे । হাতের গুলি । च.शा.७अ. ।

**वाहुमूलम्** । क्ली । कक्षे । বগল । अम. ।

**वाहुल:** । पुं । कार्त्तिके मासि । अम. । अग्नौ ।

**वाहुल्यम्** । क्ली । पुष्टौ । भा.म.कुष्ठ.चि ।

**वाहुशोष:** । पुं । तन्नामकवातव्याधौ । निदान-लक्षणम्—"अंसदेशस्थितो वायुः शोषयेदंसबन्धनम् । अंसबन्धनशोषः स्याद्वाहुशोषः सवेदनः ॥" मा.नि. ।

**वाह्यायाम:** । पुं धनुस्तम्भभेदे । निदान-लक्षणं—"महाहेतुर्मलो वायुः शिराः सस्नायु-कण्डराः । मन्यापृष्ठाश्रिता वाह्याः सङ्कोच्यानमये-द्बहिः । यत्र तं वहिरायामं प्रवदन्ति भिषग्वराः । तमसाध्यं बुधा: प्राहुः वक्षःकट्यूरुभञ्जनम् । वाह्यायामेऽन्तरायामे विधेयार्द्दितवत्क्रिया ॥" च ।

**वाह्वस्थि** । क्ली । वाहुनलके । হাতের নলি । च.श.७अ. ।

**विंविशि:** । स्त्री । मक्षाद्धिकायाम् । আমা-শয়রোগ । बा.चि.२८.

**ब्रह्मगर्भा** । स्त्री । अजगन्धायाम् । বনযমানী । आदित्यभक्तायां । হুড়হুড়িয়া । रा.नि.व.४ ।

**ब्रह्मघ्नी** । स्त्री । गृहकन्यायाम् । घृतकुमारी । "ब्रह्मघ्नी तु कुमारी स्यात् ।" रा.नि.व.१३ ।

**ब्रह्मचर्य्यम्** । क्ली । अमैथुने । भा.उ.वाजी. । उपस्थनिग्रहादौ । च.सू.१अ. ।

**ब्रह्मचारिणी** । स्त्री । ब्राह्मीशाके । प.मु. । कोङ्कणदेशे करवीरचीनाम्ना प्रसिद्धवृक्षे । रा.नि.व.१० । ब्रह्मयष्टिकायाम् । বামনহাটী । र.मा. । चा.सू.२९अ. ।

**ब्रह्मचारी (इन्)** । पुं । पारिशाख्ये । গয়া অশ্বত্থ । निम्ने । वै. निघ. ।

**ब्रह्मजटा** । स्त्री । दमनकक्षुपे । দনা । रा.नि.व.१० । सुब्रह्मणि ।

**ब्रह्मजा** । स्त्री । ब्राह्म्याम् । रा.नि.व.२३ ।

**ब्रह्मणिका** । स्त्री । अग्निप्रकृतिकीटभेदे । सु.कल्प.८अ. । See कीटः ।

**ब्रह्मण्यः** । पुं । शुभ्रवर्णे । মুঞ্জ । रा.नि.व.८ । पारिशाखल्ये । গয়া অশ্বত্থ । अम. ।

**ब्रह्मतरुः** । पुं । ब्रह्मदारुवृक्षे ।

**ब्रह्मतीर्थम्** । क्ली । पुष्करमूले । কুড়বিশেষ । प.मु. । रा.नि.व.६ ।

**ब्रह्मत्वक्** । पुं । सप्तपर्णवृक्षे । ছাতিম গাছ । वै.निघ. । ब्राह्मणयष्टिकायाम् । বামন হাটী । श.च. ।

**ब्रह्मदण्डः** । पुं । यमान्यां । व.निघ. । भार्ग्याम् ।

**ब्रह्मदण्डी** । स्त्री । Lamprachoenium microcephalum.) स्वनामख्यातक्षुद्रक्षुपे । सं ब्रह्मदण्ड । वम्.ब्रह्मदण्डी । तत्पर्य्यायी,—अजदण्डी, कण्टपत्रफला । गुणाः—कटुः उष्णा कफशोथवातघ्नी च । रा.नि.व.५ । भा.प. । च.द. स्व.चि. । "ब्रह्मदण्डी जटाञ्जलिः ।"

**ब्रह्मदर्भः (र्भा)** । पुं, स्त्री । यमान्याम् । भा. । भैष.अग्निमन्दोपगरसे ।

**ब्रह्मदारु** । क्ली । तूलकाष्ठे । পলাশপিপুল । रा.नि.व.९ । पुं । फञ्जीनामक्षुपे । रा.नि.व.२३ । तत्फले । भा. ।

**ब्रह्मनिष्ठः** । पुं । पारिशपिप्पले । পলাশ-পিপুল । वै.निघ. ।

**ब्रह्मन्** । क्ली । मोचे । च.शा.१अ. । वेदे । अम. ।

**ब्रह्मपत्रम्** । क्ली । पलाशपत्रे । शब्दकल्पद्रुमः ।

**ब्रह्मपत्नी** । स्त्री । वाराहीनामकमहाकन्दशाके । শুয়ার আলু । रा.नि.व.७ ।

**ब्रह्मपर्णी** । स्त्री । पृश्निपर्ण्याम् । रा.नि.व.२३ ।

**ब्रह्मपवित्रः** । पुं, क्ली । सितदर्भे । কুশ । रा.नि.व.८ ।

**ब्रह्मपादपः** । पुं । विशङ्कटवृक्षे । रा.नि.व.९ । पलाशवृक्षे । है.च. ।

**ब्रह्मपुत्रः** । पुं । विषभेदे । प.मु. । तत्स्वरूपं —"वर्णतः कपिलो यः स्यात्तथा भवति सारतः । ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले । ब्राह्मणः पाण्डुरस्तेषु क्षत्रियो लोहितप्रभः । वैश्यः पीतः सितः शूद्रो विष उक्तश्चतुर्व्विधः ॥" भा. ।

**ब्रह्मपुत्री** । स्त्री । भार्ग्याम् । বামনহাটী । रा.नि.व.२३ । वाराहीकन्दे । रा.नि.व.७ ।

**ब्रह्मपुष्पः** । पुं । फणिज्झकक्षुपे । त.द. ।

**ब्रह्मभद्रा** । स्त्री । त्रायमाणायाम् वै.निघ. ।

**ब्रह्मभूमिजा** । स्त्री । सैंहलीपिप्पल्याम् । रा.नि.व.६ ।

**ब्रह्ममण्डूकी** । स्त्री । ब्राह्म्याम् । वै.निघ. । मण्डूकपर्ण्याम् ।

**ब्रह्ममेखलः (ला)** । पुं, स्त्री । मुञ्जतृणे । वै. निघ. ।

**ब्रह्मयष्टिः** । स्त्री । भार्ग्यां । प.मु. । वेत्राख्य-वंशभेदे । বেউর বাঁশ ।

**ब्रह्मरन्ध्रम्** । क्ली । उत्तमाङ्गे मस्तिष्कोपरिभागे । ব্রহ্মতালু । तन्त्रम् ।

**ब्रह्मरसः** । पुं । वातरक्ताधिकारे रसः । पलाश-बीजचूर्णञ्च गोघृतेन समन्वितं । तुल्यं तुल्यं मृतं शुल्वं स्निग्धे भाण्डे निधापयेत् । वर्द्धयेच्च यथाशक्ति अयं ब्रह्मरसो महान् ॥" रस.को. ।

**ब्रह्मरीतिः** । स्त्री । राजरीतौ । ভাল পিতল । रा.नि.व.१३ ।

**ब्रह्मरूपिणी** । स्त्री । महायाम् । বান্দা । वै.निघ. ।

**ब्रह्मवटी** । स्त्री । उदराधिकारे औषधम् । "विडङ्गं दाड़िमं कुष्ठं निम्बत्वग्दहनो वचा । चूर्णं पाठा देवदारु निशा व्याघ्रनखोऽभया । वैश्वयं

रोहिणी चेला विडङ्गप्रत्येककार्षिकम्। जैपालबीजचूर्णञ्च दन्तीमूलं पलं पलम्। ब्रह्मीमण्डुकीरसप्रस्थं पञ्चमाज्यं पुरातनम्। पूर्व्वकल्कयुतं पाच्यं मृदग्निना सुपाचितम्॥" मात्रा बदरप्रमाणा। रस.र.।

**ब्रह्मवर्द्धनम्।** क्ली। ताम्रे। हे.च.।

**ब्रह्मबीजम्।** क्ली। पलाशबीजे। वै.निघ.। कृमि.चि.निम्बादिचूर्णे। ब्रह्मीशाकबीजे। र.सा.सं. कृमि.चि.।

**ब्रह्मवृक्षः।** पुं। पलाशवृक्षे। रा.नि.व.१०। वै.गद.वि.ज्व.चि.। अगस्तिवृक्षे। वै.निघ.। उडुम्बरवृक्षे। यज्ञडुमुर गाछ। र.मा.।

**ब्रह्मशल्यः।** पुं। वर्व्वूरवृक्षे। बाब्ला गाछ। कदरे। श्वेतखदिर। र.मा.।

**ब्रह्मसर्पः।** पुं। सर्पभेदे। तत्पर्य्यायो,—जलाटनः श्रवमाला।

**ब्रह्मसुदुर्लभा।** स्त्री। आदित्यभक्तायाम्। हड़हड़े।

**ब्रह्मसुवर्च्चला।** स्त्री। तन्नामकौषधिविशेषे। या हिरण्यक्षीरति कम्पते पवनञ्च यस्या पद्मपत्रसदृशम्। च.चि.१अ.। सु.चि.४०अ.। See औषधिः। आदित्यभक्ताभेदे। हड़हड़िया। गुणाः—"अन्या तिक्ता कषायोष्णा रसा रुचा लघुः कटुः निहन्ति कफ-पित्तास्र-श्वास-कासारुचि-ज्वरान्। विस्फोटकुष्ठमेहास्रयोनिरुक् क्रमपाण्डुता॥" भा.। ब्राह्म्याम्। वै.निघ.रस.संग्रहणी.चि. ताम्रीशादि चूर्णे।

**ब्रह्मसोमा।** स्त्री। ब्राह्म्याम्। श्वेतहुडहुडाय वै. निघ.।

**ब्रह्मस्थानम्।** क्ली। तूलकाष्ठे। वै.निघ.।

**ब्रह्माय(स)भूः।** पु। घोटके। श.मा.।

**ब्रह्माणी।** स्त्री। रेणुके। र.मा.। राजरीती। रेड़ापितल। रा.नि.व.१३।

**ब्रह्मारण्डः।** पुं। क्षणपिण्डारभेदे। प.मु.।

**ब्रह्मादनी।** स्त्री। रक्तलज्जालुकायाम्। रा. नि.व.५।

**ब्रह्माम्भः।** क्ली। गोमूत्रे। वै.निघ.।

**ब्रह्मी।** स्त्री। स्वनामख्यातशाके। मे.। च.सू. ४अ.। फञ्जिकायाम्। बामनहाटी। मे.। पद्माल मत्स्ये। चिका.।

**ब्रह्मीघृतम्।** क्ली। स्वरभङ्गाधिकारे पक्वघृतम्। समूलपत्रमुत्पाट्य ब्रह्मीम् प्रक्षाल्य वारिणा। उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत्। रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत्। हरिद्रा मालती कुष्ठं त्रिवृता सहरीतकी। एतेषां पलिकैर्भागैः शेषाणि कार्षिकाणि तु। पिप्पल्येलाविडङ्गानि सैन्धवं शर्करा वचा। सर्व्वमेतत् समालोड्य शनैर्मृद्वग्निना पचेत्। एतत्-प्राशितमात्रेण वाग्विशुद्धिः प्रजायते। घृतं सारस्वतं नाम बलवर्णाग्निवर्द्धनम्॥" च.द.रस.र.। पाठान्तरे त्रिवृतो स्थाने त्रिफलामाह। भैष.। पिप्पल्येलास्थाने पिप्पल्योऽथ। गव्यघृतं ४ श.। ब्रह्मीरसः १६श.। कल्कार्थं—हरिद्रा मालतीपुष्पं कुष्ठं त्रिवृता हरीतकी एषां प्र. १ प., पिप्पली एला विडङ्गं सैन्धवम् शर्करा वचा एषां प्र. २ तो.। अन्यत् अपस्माराधिकारे—"ब्रह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च। पुराणं सेव्यमुन्माद-ग्रहापस्मारनुद्घृतम्॥" पुरातनघृतं ४ श. ब्रह्मीरसः १६ श.। कल्कार्थं—वचा कुष्ठं बालकम् (शङ्खादेशात्) एषां प्र. २ प. ५ तो. २ मा. ७ र.। शा.क्री.। रस.र.। च.द.।

**ब्रह्मेण्यः।** पुं। मुञ्जतृणे।

**ब्रह्मोपनेता (तृ)।** पुं। पलाशवृक्षे। पलाश गाछ। रा.नि.व.१०।

**ब्राह्मम्।** क्ली। अङ्कुष्ठमूले। अम.।

**ब्राह्मणः।** पुं। पारिशाखवृक्षे। पलाशपिंपुल। वै.निघ.।

**ब्राह्मणयष्टिः (का)।** स्त्री। भार्ग्याम्। बामनहाटी। रा.नि.व.६।

**ब्राह्मणिका।** स्त्री। स्पृक्कायां। रा.नि.व.१२। पिपीलिकाविशेषे। वरट्याम्। सु.कल्प.८अ.।

**ब्राह्मणी।** स्त्री। भार्ग्यां। बामनहाटी। प.मु.। देवताडे। दुरालभायां। स्पृक्कायां। विश्व.। राजरीतौ। रा.नि.व.१२। वरट्याम्। बोल्ता। चिका.। हे.च.। स्थूलशीर्षायाम् पिपीलिकायाम्।

**ब्राह्मणीयष्टिः।** पुं। बालानां ज्वररोगविशेषे। बामनहाटी। रस.र.बाल.चि.।

**ब्राह्मणेष्टम्।** क्ली। तूलकाष्ठे। वै.निघ.।

**ब्राह्मण्यः।** पुं। मुञ्जतृणे।

**ब्राह्मपिङ्गा।** स्त्री। रौप्ये। वै.निघ.।

**ब्राह्ममुहूर्त्तः।** पुं। अरुणोदयकाले। "ब्राह्म मुहूर्त्ते चोत्तिष्ठेत् चिन्तयेदात्मनो हितम् ॥"

**ब्राह्मिका।** स्त्री। भार्ग्याम्। বামনহাটী। श.र.।

**ब्राह्मी।** स्त्री। Siphonanthus Indica. Herpestis monnieria.) स्वनामख्यातक्षुप विशेषे। ব্রাহ্মীশাক, অধবর্ণী। हिं बरंभी, ब्राह्मी, श्वेतचमनी। तैं सम्बुनीचेट्टु। अश्वविर्णी। बम्. बाम। ता.बोमी। मं ब्रह्ममाण्डूकी। तत्पर्य्यायाः,—मत्स्याक्षी वयस्था सोमवल्लरी सुरसा ब्रह्मचारिणी सरस्वती सौम्या सुरश्रेष्ठा सुवर्च्चला कपोतवङ्का कपोतवेगा वैधात्री दिव्यतेजा. महौषधी स्वायम्भुवि: सोमलता सुरेष्टा ब्रह्मकन्यका मण्डूकमाता मण्डूकी सुरसा मेधा वीरा भारती वरा परमेष्ठिनी दिव्या शारदा। गुणाः—"ब्राह्मी हिमा सरा तिक्ता लघुर्मेध्या च शीतला। कषाया मधुरा स्वादुपाकायुष्या रसायनी। स्वर्य्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकासजित्। विषशोथहरी......॥" भा.पू.व.। हिमा कषायो तिक्ता रक्तपित्तघ्नी बुद्धिप्रज्ञामेधाकरी आयुष्करी च। रा.नि.व.५। महाज्योतिष्मतीलतायां। रा.नि.व.३। मण्डूकपर्ण्याम्। থুলকুড়ি। वा.उ.१८.। भार्ग्याम्। বামনহাটী। रा.नि.व.६। च.शा.८अ.। अजगन्धायाम्, বনযমানী। रा.नि.प.४। च.द. कफज्व.चि.। पञ्चाङ्गकमत्स्ये। পাঁকালমাছ। त्रिका.। हिलमोचिकायाम्। भा.पू. १म.शा.व.। प्रसारिण्याम्। गरुडाङ्गिरा। वाराहीकन्दे। स्पृक्कायां। चटकायाम्। भेक्याम्। सर्पाक्ष्याम्। वै.निघ.।

**ब्राह्मीकन्दः।** पुं। वाराहीनाममहाकन्दशाके। শুয়ার আলু। रा.नि.व.७।

**ब्राह्मीका।** स्त्री। भार्ग्याम्। বামনহাটী।

**ब्रुवङ्गावी।** पुं। पक्षिविशेषे। पिङ्गला पाक्षी। वै.निघ.।

---

## भ

**भः।** पुं। भ्रमरे। एकाक्षरकोषः। भ्रान्तौ। क्लो। नक्षत्रे।

**भक्षिका।** स्त्री। झिल्लीकीटे। ঝিঁঝিঁপোকা। वै.निघ.।

**भङ्कुरः।** पुं। मत्स्यभेदे। ভাকুর মাছ। गुणाः—"भङ्कुरो मधुरः शीतो वृष्यः श्लेष्मकरो गुरुः। विष्टम्भजनकश्चापि रक्तपित्तहरः स्मृतः॥"

**भक्तम्।** क्ली। अन्ने। ভাত। अम.। "सुधौतान्तण्डुलान् स्फीतांस्तोये पञ्चगुणे पचेत्।" See अन्नम्। त्रि। सेवके।

**भक्ताकारः।** पु। दश्याङ्गादिक्तविमर्द्धूपे। कृत्रिमधूप। श.च.। (कारः) त्रि। पाचके। हे.च.।

**भक्ताच्छन्दः।** पुं। क्षुधायाम्। आकाङ्क्षायां। च.द.अर्शः.चि.नागार्ज्जुनयोगे।

**भक्ताजा।** स्त्री। अमृते। वै.निघ.।

**भक्तादमनी।** स्त्री। वन्ध्याककोंटक्याम्।

**भक्तद्वेषः।** पुं। अरोचकरोगे। चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वा तु भोजनं। द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते॥"

**भक्तमण्डः।** पुं। अन्नमण्डे। ভাতের মণ্ড। तत्पर्य्यायाः—मासरं आचामं निस्रावः पिच्छाः। See अन्नमण्डः।

**भक्तविपाकवटी।** स्त्री। अग्निमान्द्यादिनाशके वटीभेदे। "माक्षिकं रसगन्धौ च हरितालं मनःशिला। वृहत्ती वारिवाहा चित्रकश्च महौषधं। पिप्पली मरिच पथ्या यमानी कृष्णजीरकं। रामठं कटुकापाली संभवं साजमोदकं। जातीफलं यवक्षारः समभागं विचूर्णयेत्। आर्द्रकस्य रसेनैव निर्गुण्ड्याः स्वरसेन च। सूर्य्यावर्त्तरसेनैव ज्योतिष्मत्या रसेन तु। चित्रकस्य रसेनापि प्रत्येकं त्रिर्विभावयेत्। पेषयित्वा वटी कार्य्या मुक्ताफलसमप्रभा। भक्षयेच्छायमानेषु लवङ्गेन सुयोजिता॥' কজ্জলি ২ভ. স্বর্ণমাক্ষিক, হরিতাল, মনছাল, তেউড়ীমূল, দন্তীমূল, মূতা, চিতার মূল, শুঁট, পিপুল, মরিচ, হরীতকী, যমানী, কৃষ্ণজীরা, হিঙ্গু, গুড়কাঁউলি, সৈন্ধব, বনযমানী, জায়ফল, যবক্ষার, ইহাদের প্রত্যেক ১ ভ.। আদার রস, নিসিন্দাপত্ররস, হড়হড়ে পাতার রস, লতাফট্কীপাতার রস ও চিতারসে তিন

भावयेदेषां रसैः प्रत्येकशः पलैः । देवराजाशना-ख्यस्य केशराजाख्यकस्य च । शीनराजस्य भङ्गाख्य-राजस्य त्रिफलस्य च । पारिभद्राग्निमन्थस्य वृद्धदारकतुम्बुरोः । मण्डूकपर्णीनिर्गुण्डीपूतिकोन्म-त्तकस्य च । ग्रीष्मसुन्दरकस्याटरूषकस्य क्रमेण तु । रसैव तानपर्ण्याय दशोल्यैर्भावितं भिषक् । द्रवैः किञ्चित् स्थितं चूर्णं मरिचस्य पलञ्चिपेत् । ततश्चैव वटीं कुर्य्यात् चतुर्श्लीणकरत्निका ॥" रस.र. ।

**महामण्डूकः** । पुं । मण्डूकविशेषे, पीत-मण्डूके । সোণাবেঙ । रा.नि.व.१९ ।

**महामत्ता** । स्त्री । महाकरञ्जवृक्षे । डहर-करञ्ज गाछ । रा.नि.व.९ ।

**महामधुफला** । स्त्री । पीतवर्णालावुविशेषे । वै.निघ. । [ व.१९ ।

**महामनस् (नाः)** । पुं । महासिंहे । रा.नि.

**महामांसम्** । क्ली । नरादिमांसे ।

**महामांसी** । स्त्री । रुदन्तीवृक्षे । वै.निघ. ।

**महामार्जारगन्धिका** । स्त्री । वनमुद्गे । मुगानी । वै.निघ. ।

**महामाषः** । पुं । राजमाषे । भा.पू.१भ.धा.व. ।

**महामुखः** । पुं । कुम्भीरे । हे.च. ।

**महामुण्डम्** । क्ली । बोलनामगन्धद्रव्ये । रा.नि.व.१६ ।

**महामुण्डिति(नि)का (ण्डी)** । स्त्री । महाश्रावणिकायां । গোরক্ষমুণ্ডী । रा.नि.व.५ । रस.र.बाल.चि. ।

**महामुनिः** । पुं । तुम्बुरुवृक्षे । रा.नि.व.१५ । क्ली । औषधे । श.र. । धन्याके । धन्य' । जटा. ।

**महामूर्वा (र्वन्)** । स्त्री । ऋद्धौ । वृद्धौ । वै.निघ. ।

**महामूलः** । पुं । राजपलाण्डौ । रा.नि.व.७ ।

**महामूषिकः** । पुं । वृहन्मूषिके । तत्पर्य्यायाः,—मूषी विघ्नेश्वाहनः महाङ्गः शस्यमारी भूफलः भित्तिपातनः । रा.नि.व.१९ ।

**महामृगः** । पुं । महासिंहे । रा.नि.व.१९ । गजे । हे.च. । शरभे ।

**महामृगाङ्कः** । पुं । यक्ष्माधिकारे रसः । पाठः—"शुद्धसूतं मृतं स्वर्णं जम्बीरैर्मर्द्दयेद्दिनं । तेषां द्विगुणितं मुक्तं विभिस्तुल्यञ्च गन्धकं । टङ्कणं गन्धकाद्देश्च सर्व्वं जम्बीरजैरसैः । मर्द्यं याममनु तद्गोलं वस्त्रेरुद्धा विपाचयेत् । दोलायन्त्रे सारनाले यामादुद्धृत्य शोषयेत् । ततोऽपि मृण्मये पात्रे किञ्चिल्लवणपूरिते । तत्पृष्ठे काचकूप्यन्ते गोलके वस्त्रवेष्टिते । स्थिते तु लवणैर्भाण्डे पूरयित्वा तु बन्धयेत् । चूल्यां दिनं पचेत् सिद्धो रसो महामृगाङ्कः ॥" मात्रा २ रतिः ; अनुपानं मधुपिप्पली । रस.कौ. ।

**महामेदः** । पुं । महामेदाशाग् । र.ना । निम्बवृक्षे । वै.निघ. ।

**महामेदा** । स्त्री । स्वनामख्यातकन्दशाके । महामेदा इति सर्व्वत्र । तं महामेदयमेचेद् । तत्पर्य्यायाः,—वसुच्छिद्रा जीवनी पाण्डुरागिणी महामेदः पुरोद्भवा सुरमेदा दिव्या देवगन्धा देवमणिः देवेष्टः महाच्छिद्रा वृत्ताहा । सा लताजाता सुपाण्डुरा च । "महामेदाभिधः कन्दो लताजातः सुपाण्डुरः ।" इति । एतदभावे शारिवा ग्राह्या । गुणाः—हिमा रुच्या कफ-शुक्र-वृद्धिकृत् दाहपित्तघ्नी च । रा.नि.व.५ । महामेदा सुनामेदेति च द्विधा । मेदाद्वयलक्षणम्—"महा-मेदाभिधः कन्दो मोरङ्गादौ प्रजायते । महामेदा सुनामेदा स्यादित्युक्तं मुनीश्वरैः । शुक्लार्द्रकनिभः कन्दो लताजातः सुपाण्डुरः । महामेदाभिधो ज्ञेयो मेदालक्षणमुच्यते । शुक्लकन्दो नखच्छेद्यो मेदो-धातुमिव स्रवेत् । यः स मेदेति विज्ञेयः...... । मेदायुग्मं गुरु स्वादु हृद्यं स्तन्यकफापहम् । वृंहणं शीतलं पित्तरक्तवातज्वरप्रणुत् ॥" भा.पू.१भ. ।

**महामोदः** । पुं । कुन्दपुष्पक्षुपे । कुन्द गाछ । रा.नि.व.१० ।

**महामोहः** । पु । मुचुकुन्दवृक्षे । (ही इन्) । श्वेतधुस्तूरके । वै.निघ. ।

**महाम्लम्** । क्ली । तिन्तिड़ीके । जटा. ।

**महायसलपत्रकः** । पु । काञ्चनवृक्षे । वै.निघ. । [ निघ. ।

**महायावनालः** । पुं । देवधान्यवृक्षे । वै.

**महायोगेश्वरी** । स्त्री । नागदमन्याम् । नागदना । भा. ।

**महायोनिः** । स्त्री । योनिरोगविशेषे । लक्षणं—"दुष्टो विटभ्य योन्यास्यं गर्भकोष्ठञ्च मारुतः ।

**महावभ्रुः** । पुं । विलेशयजन्तुभेदे ।
**महावरा** । स्त्री । मूर्व्वायाम् । दूर्व्वायाम् । श.र. ।
**महावरोहः** । पुं । प्लक्षवृक्षे, ह्रस्वप्लक्षवृक्षे । পাকুড় গাছ । रा.नि.व.११ । [ निघ. ।
**महावर्षाभूः** । स्त्री । श्वेतपुनर्नवायाम् । वै.
**महावल्कः** । पुं । जातीफलवृक्षे । वै.निघ. ।
**महावल्ली** । स्त्री । माधवीलतायाम् । श.च. । श्वेतालाब्वाम् । कटुवल्लिकायाम् । कट्की । रा.नि.व.३ ।
**महावसः** । पुं । शिशुमारे । हे.च. ।
**महावसु** । क्ली । रौप्ये । वै.निघ. ।
**महावातव्याधिः** । पुं । वातरक्ते । स एक एव । मतान्तरे उत्तानावगाढ़भेदेन द्विविधः । सु.चि.५अ. ।
**महावार्त्ताकिनी** । स्त्री । महावार्त्ताकुवृक्षे । বন বেগুন । वै.निघ. ।
**महावास्तु** । क्ली । महायतने । भा.म कुष्ठचि. ।
**महावास्तुपरिग्रहः** । त्रि । व्यापकतया प्रशस्तस्थानग्राहिणि । भा.गुल्म चि. ।
**महाविलम्** । क्ली । अन्तःकरणे । व.निघ. । आकाशे । जटा. ।
**महाविषः** । पुं । तन्नामककन्दविषे । सु.कल्प. २अ. । कालसर्पे । त्रिका. । द्विमुखसर्पभेदे ।
**महाविहङ्गः** । पुं । गरुड़े । चु.द. ।
**महावीजः** । पुं । पियालवृक्षे । পেয়াশাল । क्ली । विटपे । तत्तु मुष्कवङ्क्षणयोरन्तरम् । हे.च. ।
**महावीरः** । पु । एकवीरवृक्षे । रा.नि.व ८ । करवीरपुष्पवृक्षे । করবী গাছ । रा.नि.व.१० । सिंहे । शुक्लाश्वे । मे. । कोकिले । हे.च. । स्त्री (रा) । चीरकाकोल्याम् । र.मा. ।
**महावीर्य्यः** । पुं । वाराहीकन्दे । एकवीरवृक्षे । रा.नि.व.७.८ । स्त्री (र्य्या । महाशतावर्य्याम् । रा.नि.व.४ । शुक्लदूर्व्वायाम् । वनकार्पास्याम् । श.र. । संज्ञायाम् । त्रिका. ।
**महावृषा (ष्या)** । स्त्री । मुषलीभेदे । কাল তালমূলী । वै.निघ. ।
**महावृहती** । स्त्री । महावार्त्ताक्याम् । বন বেগুন । त्रिका. ।
**महावृक्षः** । पुं । स्नुहीवृक्षे । সিজ্ গাছ । र.मा. । सेहुण्डभेदे । करञ्जवृक्षे । सु.सू.३९अ. । तालवृक्षे । महापीलुवृक्षे । वै.निघ. ।
**महावेगवती** । स्त्री । तन्नामकमहौषधी । सु.चि.३०अ. । See ओषधिः । [ निदा. ।
**महाव्याधिः** । पुं । कुष्ठादिमहारोगेषु ।
**महाव्रणम्** । क्ली । दुष्टव्रणे । নালী ঘা । शब्दकल्पे वाराहीतन्त्रम् ।
**महाव्रीहिः** । पुं । व्रीहिविशेषे । षष्टिकधान्ये । ষেটে ধান । वै.निघ. ।
**महाशङ्खः** । पु । नरकपाले, ललाटे । मे. । कर्णनेत्रयोर्मध्यगतास्थनि । तन्त्रम् । वृहत्शङ्खे ।
**महाशठः** । पुं । पीतधुस्तूरवृक्षे । रा.नि.व.१० ।
**महाशणः** । पुं । स्वनामख्यातवृक्षविशेषे । प.मु. । शणवीजे । वै.निघ. ।
**महाशणपुष्पिका (ष्पी)** । स्त्री । शणपुष्पीनामक्षुपविशेषे । আতুশী ফুলের গাছ, শ্বেত অরণ্য শণ । सं साङ्गीकिङ्किणिहिला । वं पाढ़री-क्रिलिहिला । हिं फुल्फुना । तत्पर्य्यायाः,— वृत्तपर्णी श्वेतपुष्पिका श्वेतपुष्पी महाश्वेतघण्टी महाश्वेता महासिता । गुणा,—कषाया उष्णा रसनियामिका मोहनस्तम्भनादौ शस्ता । रा.नि.व.४ ।
**महाशणा** । स्त्री । आरण्यशणे । वै.निघ. ।
**महाशता (वरी)** । स्त्री । वृहच्छतावर्य्याम्, सहस्रमूलीशतावर्य्याम् । हिं कड़हीमूल । तत्पर्य्यायाः,—शतवीर्य्या सहस्रवीर्य्या सुरसा महापुरुषदन्तिका वीरा तुरङ्गिनी बहुपत्रिका बहुपुत्रिका ऊर्द्धकण्टी फणिजिह्वा महावीर्य्या महाशता भूवीर्य्या हेरुः ऋष्यप्रोक्ता सहोदरी । गुणाः—'महाशतावरी मेध्या हृद्या वृष्या रसायनी । शीतवीर्य्या निहन्त्यर्शोग्रहणीनयनामयान् ॥' भा. । हिमा वृष्या मधुरा तिक्ता रसायनी पित्तघ्नी वातकफघ्नी च । रा.नि.व.४ ।
**महाशफरः** । पुं । दार्व्विसमीने । শাকা মাছ্ । तं ओकानीदिइमक्स्यु । तन्मांसगुणाः,—"महा-शफरसंज्ञस्तु तिक्तः पित्तकफापहः । शिशिरो मधुरो रुच्यो वातसाधारणः स्मृतः ॥" भा. ।
**महाशरः** । पुं । स्थूलशरे । রামশর । रा.नि.व.८ ।

तरुणीपुष्पवृक्षे । কাঁটাসেউতী । रा.नि.व.१० । महाबलायाम् । अतिबलायाम् । वै.निघ. ।

**महासारः** । पुं । विट्खदिरवृक्षे । रा.नि.व.८ ।

**महासिंहः** । पुं । शरभापरनामसिंहे । रा. नि.व.१९ ।

**महासीता** । स्त्री । महाशणपुष्पीक्षुपे । শ্বেত বন শণ । रा.नि.व.४ ।

**महासिद्धिकरः** । पुं । कृष्णवनालुके । वै. निघ. ।

**महासुखम्** । क्ली । मैथुने । त्रिका. ।

**महासुगन्धषट्कम्** । क्ली । चन्दन-कस्तूरी-कर्पूर-कृष्णागुरु-मूर्व्वा-कुङ्कुमेषु । वै.निघ. ।

**महासुगन्धा (न्धिः)** । स्त्री । गन्धनाकुल्याम् । रा.नि.व.७ ।

**महासुगन्धितैलम्** । क्ली । मेदोरोगे तैलम् । तिलतैलं ४ श. । कल्कार्थं—चन्दनं कुङ्कुमं वीरण-मूलं प्रियङ्गुः एला गोरोचना कपित्थम् अगुरु मृगनाभिः कर्पूरं जयित्री जातीफलं कक्कोलं पूगफलं लवङ्गं नलुका जटामांसी कुष्ठं रेणुकं तगरं मुस्तं नखी स्पृक्का गन्धवीरः नागदमनी ग्रन्थिपर्णी चोरकः शैलजम् एलवालुकं सरलकाष्ठं सप्तपर्णत्वक् लाक्षा भूधात्री गन्धतृणं धातकीपुष्पं प्रपौण्डरीकं शटी प्र. २ तो. । पाकार्थंजलं १६ श. । তিলতৈল ৪ শ. । কল্কার্থ—রক্তচন্দন, কুঙ্কুম, বেণার মূল, প্রিয়ঙ্গু, এলাইচ, গোরোচনা, শিলারস, অগুরু, মৃগনাভি, কর্পূর, জয়িত্রী, জায়ফল, কক্কোল, গুপারি, লবঙ্গ, নলুকা, জটামাংসী, কুড়, রেণুক, তগর, নাগরমুতা, নখী, পিড়িং, গন্ধবোল, নাগদনা, গেঁঠেলা, চোরপুষ্পী, শৈলজ, এলবালুক, সরলকাষ্ঠ, ছাতিমছাল, লাক্ষা, ভূঁই আমলা, গন্ধতৃণ, ধাইফুল, পুণ্ডরিয়া, শটী প্রত্যেক ২ তো. । জল ১৬ শ. । भा. । [ १२

**महासूक्ष्मा** । स्त्री । बालुकायाम् । रा.नि.व.

**महासोमः** । पुं । सोमलताभेदे । सु.चि.२९प. ।

**महासु (सौ) षिरः** । पुं । दन्तवेष्टगतरोग-विशेषे । तत्र दन्तचालनतालुदारणदन्तमांस-पूतित्वमुखदौर्गन्ध्यादिकं भवति । लक्षणं यथा—"दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते । दन्त-मांसानि पच्यन्ते मुखञ्च परिपाट्यते ।" भा.म. ४भ.मुखरो.चि. । अत्र समरोगान्मरणं भवतीति भोजः । "महासौषिर इत्येवं सप्तरात्रान्निहन्त्यसून् । ससन्निपातज्वरवान् सपूयरुधिरस्रुतिः । महासुषिर इत्युक्तो विशीर्णद्विजबन्धनः ॥" वा.उ.२१अ. ।

**महास्कन्धा** । स्त्री । जम्बूवृक्षे । জাম গাছ । रा.नि.व.११ । [ च. ।

**महास्नायुः** । स्त्री । रक्तवहमहानाड्याम् । हे.

**महास्नेहः** । पुं । छर्द्दिचिकित्सायाम् स्नेहः । ঘৃত ৪ শ. । কল্কার্থ—রাস্না, জীবক (গুলঞ্চ), জীবন্তী, বেড়েলা, কণ্টকারী, পুনর্নবা, বামনহাটী, শালপাণি, বচ, শুঁট, পিপুল, মরিচ প্রত্যেক ৫।০ তো. দধির মাত ১ শ. অম্লবর্গ যথালাভ গ্রহণ করিবে । वा.चि.६अ. । भूरिस्नेहवत्त्वात् घृततैलवसामज्जसु । च.सू.१अ. ।

**महाहविः** । क्ली । गव्यघृते । श.चि. ।

**महाहिक्का** । स्त्री । तन्नामकहिक्कारोगविशेषे । लक्षणं यथा—"मर्म्माण्युत्पीड़यन्तीव सततं या प्रवर्त्तते । महाहिक्केति सा ज्ञेया सर्व्वगात्र-प्रकम्पिनी ॥" निदा. ।

**महाहिगन्धा** । स्त्री । गन्धनाकुल्याम् । रा. नि.व.७ ।

**महाह्रस्वा** । स्त्री । शूकशिम्ब्याम् । আলাকুশী । प.मु. ।

**महाह्वया** । स्त्री । क्षवकारके वृक्षभेदे । ভূতরাজ । तत्पर्य्यायगुणाः,—"भेमी महाह्वया ज्ञेया क्षवणी श्लेष्मवारिणी । वीर्य्योष्णाक्षिशिरः-कर्णरुग्हन्त्री नस्ययोगतः ॥"

**महाह्वारः** । पुं । सावान इति ख्याते द्रव्ये । वै.निघ. ।

**महाह्वोरा** । स्त्री । मञ्जिष्ठायाम् । वै.निघ. ।

**महिः** । स्त्री । पृथिव्याम् ।

**महिका** । स्त्री । हिमे । अम. ।

**महिञ्जकः** । पुं । मूषिके । वै.निघ. ।

**महिरः** । पुं । सूर्य्ये ।

**महिला** । स्त्री । रेणुकायाम् । রেণুকবীজ । रा.नि.व.६ । प्रियङ्गौ । अम. । मदमत्तायाम् स्त्रियाम् ।

**महिलाह्वया** । स्त्री । प्रियङ्गुलतायाम् । अम.

**महिषः ।** पुं । स्वनामख्यातमहाधनग्राम्यपशु-विशेषे । महिष । हि मैंस । तै दुन्नपोतु । तत्पर्य्यायाः,—लुलापः वाहद्विषन् कासरः सैरिभः धीरस्कन्धः पृष्ठशृङ्गी स्कन्धशृङ्गः यमवाहनः विषज्वरन् वंशभीरुः रजस्वलः कालीतनयः लालिकः कृष्णशृङ्गः षयारिः अनूपः रक्ताचः दंशभीरुः क्रोधी कलुषः मत्तः विषाणी बली गवली । स च ग्राम्यारण्यभेदेन द्विविधः । तयोर्वन्यमांसम् बृंहणम् दीपनं बलदञ्च । ग्राम्यमांसं स्निग्धं निद्राकरं पित्तहरञ्च । रा.नि.व.१० ।

**महिषकन्दः ।** पुं । श्वेतालुके । रा.नि.व.७ । तत्पर्य्यायाः,—शुभ्रालुः लुलापकन्दः शुक्लकन्दः महिषीकन्दः । गुणाः—कटुः रुच्यः मुखजाड्यहरः वातघ्नश्चामवातहः ।

**महिष(षी)प्रिया ।** स्त्री । गुण्डतृणे । रा. नि.व.८ ।

**महिषमत्स्यः ।** पुं । मत्स्यविशेषे । तल्लक्षण-गुणाः—कृष्णः दीर्घकायः बलवान् महागन्धश्च । तन्मांसं दीपनं बलवीर्य्यकरञ्च । रा.नि.व.१० ।

**महिषमस्तकः ।** पुं । शालिधान्यविशेषे । शालिधान । भा.पू.१भा.धा.व. । गुणाः—शालिवत् ।

**महिषवल्ली ।** स्त्री । स्वनामख्यातसोमवल्लीसम-लताविशेषे । हि छिरहिटो । मं महिषवेलि । कं ग्राम्यवल्लि । तत्पर्य्यायाः,—सौम्या प्रतिसोम्या वनवल्लिका खण्डशाखा । गुणाः—रसवीर्य्य विपाकेषु सोमवल्लीसमा । रा.नि.व.३ ।

**महिषासुरसम्भवः ।** पुं । भूमिजगुग्गुलौ । रा.नि.व.१२ ।

**महिषाक्षः (क्षः) ।** पुं । स्वनामख्यातगुग्गुलु-विशेषे । महिषाक्ष गुग्गुल । गुग्गुलौ । प.मु. । रा.नि.व.१२ । "भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः ।" भा.म.४भ. । भगन्दरे । च.द.कुष्ठ.चि. ।

**महिषी ।** स्त्री । महिषस्त्रियाम् । तत्पर्य्यायाः —मन्दगमना महाचोरा पयस्विनी लुलापकान्ता कलुषा तुरङ्गद्वेषिणी । औषधद्रव्ये । मे. ।

**महिषीकन्दः ।** पुं । स्वनामख्यातमहाकन्द-विशेषे । महिषीकन्द । यस्य गण्डे इति चनुपदेशे प्रसिद्धः । गुणाः—कटूष्णः कफवातरोगघ्नः रोचनः मुखजाड्यघ्नश्च । रा.नि.व.७ ।

**महिषीघृतम् ।** क्ली । महिषदुग्धोत्यघृते । मैषेर घि । गुणाः—"सवातपित्तशमनं सुशीतं माहिषं घृतम् । मधुरं गुरु विष्टम्भि बल्यं श्लेष्म-गुणात्मकम् ॥" अवि.८म. ।

**महिषीतक्रम् ।** क्ली । महिषीघोले । मईषेर घोल । गुणाः—"माहिषं कफकृत् किञ्चिद्घनं शोफकरं तथा । शस्तं प्लीहार्शोग्रहणीदोषेऽतो-सारिणामपि ॥" अवि.८म. ।

**महिषीदधि ।** क्ली । महिषीदुग्धोत्यदधनि । मईषेर दई । गुणाः—"घन माहिषमुद्दिष्टं मधुरं रक्तदोषकृत् । कफशोफहरं स्नग्धं पित्तकृद्वात-कोपनम् ॥" अवि.८म. ।

**महिषीदुग्धम् ।** क्ली । महिषीचीरे । मईषेर दुध । मैषा दुध । कं ग्राम्यहालु । गुणाः— शोल्यं विपाके गुरु शीतलं बलदं पुष्टिदं हृष्यं पित्तदाहासघ्नञ्च । रा.नि.व.१५ । "स्निग्धं महच्छीतकरं च तन्द्रानिद्राकरं हृष्यतमं श्रमघ्नं । बलप्रदं पुष्टिकरं कफस्य सञ्जीवनं माहिषमुच्यते पयः ॥" अवि.८म. ।

**महिषीमूत्रम् ।** क्ली । महिषीमूत्रे । मईषेर मूत । गुणाः—"सरं सतिक्तं कटुकं कषायं प्रमेहि वातस्य शमं करोति । पित्तप्रकोपं कुरुते सदा च कुष्ठार्शःपाण्डूदरगुल्मनाशनम् ॥" अवि.९म. ।

**मही ।** स्त्री । गाम्भारीवृक्षे । कटुम्बां । विका. । हिलमोचिकायाम् । हिञ्चे । तिका. । नवि । जटा. । मालवदेशप्रसिद्धायाम् नद्याम् । तज्जल-गुणाः—"महीजलन्तु सुस्वादु बल्यं पित्तहरं गुरु ।"

**महीकदम्बः ।** पुं । भूकदम्बे । सु.चि.१०भ. ।

**महीजम् ।** क्ली । आर्द्रके । रा.नि.व.६ । पुं । वृक्षे । वै.निघ. ।

**महीद्रवः ।** पुं । धूलौ । धुलो ।

**महीपदः ।** पुं । किञ्चुलुके । केँचो । वै.निघ. ।

**महीरुटः (रुहः) ।** पुं । वृक्षे । शाकवृक्षे ।

**महीलता ।** स्त्री । गण्डूपदाम् । केँचो । अम. ।

**महीरुहः ।** पुं । शाकवृक्षे । শেগুন গাছ । रा.नि.व.९ ।

**महेन्द्रकदली ।** स्त्री । कदलीवृक्षविशेषे । दूनो कला । गुणाः—उष्णा वातासृग्दरपित्तघ्नी च । रा.नि.व.११ ।

**महेन्द्रलोहम्** । क्ली । अगुरुकाष्ठे । वै.निघ. ।

**महेन्द्रवारुणी** । स्त्री । महाकाललतायाम् । বড় মাকাল । मं वड़िलइन्द्रवारुणी । कं हरियहामेक्कि । तत्पर्य्यायाः,—चित्रफला चित्रवल्ली महाफला महेन्द्री त्रपुषा त्रपुसी आत्मरक्षा विशाला दीर्घवल्ली वृहत्फला वृहद्वारुणी महत्फला महद्वारुणी सौम्या गजचिर्भिटा चित्रदेवी धनुःश्रेणी स्थाणुकर्णी मरुसम्भवा । गुणाः,—गुणैरिन्द्रवारुणीसमा । "रसे वीर्य्ये विपाके च किञ्चिद्दोषगुणाधिका ।" रा.नि.व.३ । इन्द्रवारुण्याम् । राखालशशा । वै.निघ. ।

**महेन्द्राणी** । स्त्री । इन्द्रचिर्भट्याम् । श.र. ।

**महेन्द्री** । स्त्री । महेन्द्रवारुणीलतायाम् । বড় মাকাল । रा नि.व.३ ।

**महेर(रु)णा (रुहा)** । स्त्री । सल्लकीवृक्षे । अम.अ.टी.भ. ।

**महेलिका (ला)** । स्त्री । स्थूलैलायाम् । वै. निघ. । नार्य्याम् ।

**महेशबन्धुः** । पुं । श्रीफलवृक्षे । বেলগাছ । श.च. ।

**महेश्वरः** । पुं । श्वेतमन्दारे । विश्वकोषप्रणेतरि । क्ली । स्वर्णे । रस.कौ.ज्वरान्तकरसे ।

**महेश्वरी** । स्त्री । यवतिक्तालतायाम् । रा.नि.व.३ । राजरीती । পিত্তলবিশেষ । रा.नि.व.१३ । अपराजितायाम् । श.च. । कांस्ये । हे.च. ।

**महैरण्डः** । पुं । स्थूलैरण्डे । रा.नि.व.८ ।

**महैला** । स्त्री । स्थूलैलायां । रा.नि.व.६ ।

**महोटिका (टी)** । स्त्री । वृहतीक्षुपे । ব্যাকুড় গাছ । रा.नि.व.४ । वार्त्ताकी । वै.निघ. ।

**महोत्पलम्** । क्ली । कमले । रक्तपद्मे । पुं । सारसपक्षिणि । अम. ।

**महोदधिवटी** । स्त्री । अजीर्णाधिकारे औषधम् । पाठः—"एकैकं विषसूतञ्च जाती टङ्कं द्विकं द्विकं । कणात्रिकं विश्वषट्कं तथा दग्धकपर्द्दकं । देवपुष्पं बाणमितं सर्व्वं संमर्द्य यत्नतः । महोदधिवटी नाम्ना नष्टमग्निं प्रदीपयेत् ॥" रस.र. । মিঠাবিষ ও রসসিন্দূর এক একভাগ, জায়ফল ও সোহাগার খই প্রত্যেক ২ দুই ভাগ, পিপুল ৩ তিন ভাগ, শুঁঠ ও কড়িভস্ম প্রত্যেক ৬ ছয় ভাগ, এবং লবঙ্গ ৫ পাঁচ ভাগ, একত্র জলসহ মর্দ্দন ।

**महो(हौ)दनी** । स्त्री । शतावर्य्याम् । শতমূলী । वै.निघ. ।

**महोदया** । स्त्री । नागबलायाम् । रा.नि.व.४ ।

**महोदरम्** । क्ली । पिण्डीतगरे । वै.निघ. । स्त्री (री) । महाशतावर्य्यां । भा. ।

**महोद्रेकः** । पुं । महानिम्बे । वै.निघ. ।

**महोन्नतः** । पुं । तालवृक्षे । भा. । नारिकेलवृक्षे । धाराकदम्बे । वै.निघ. ।

**महोन्मदः** । पुं । मत्स्यविशेषे । ফলুই গাছ । श.र. । मद्गे ।

**महोरगम्** । क्ली । तगरपादिके । प.मु. । पुं । महासर्पे ।

**महोक्षः** । पुं । महावृषे । अम. ।

**महौजसी** । स्त्री । तेजोवत्याम् । তেজবল । वै.निघ. ।

**महौषधम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ । भा.त्रिपुरभैरवरसे । च.द.ज्व.चि.अष्टादशाङ्गकषाये । "भूनिम्बदारुदशमूलमहौषधाब्द...... ।" भूम्याहुल्यां । रा.नि.व.४ । वत्सनाभविषे । श्वेतरसोने । वाराहीकन्दे । लशुने । रा.नि.व.७ । अतिविषायां । अम. । पिप्पल्याम् । श.च. ।

**महौषधिः (धी)** । स्त्री । लज्जालुकाक्षुपे । श.च. । श्वेतकण्टकार्य्याम् । रा.नि.व.४ । ब्राह्मीक्षुपे । रा.नि.व.५ । अतिविषायां । कटुकायां । रा.नि.व.६ । विका. । वाराहीकन्दे । रा.नि.व.७ । हिलमोचिकायाम् । हिञ्चे । विका. । नीलदूर्व्वायाम् । रा नि.व.८ । अपराजितायाम् । आदित्यभक्तायाम् । হুড়হুড়িয়া । लशुने । वै.निघ. । महास्नानीयद्रव्यगणभेदे । तद्यथा—"पृश्निपर्णी श्यामालता भृङ्गराजः शतावरी । गुडूची सहदेवा च महौषधिगणः स्मृतः ॥" अपिच,—सहदेवी तथा व्याघ्री बला चातिबला तथा । शङ्खपुष्पी तथा सिंही अष्टमी च सुवर्च्चला । महौषधाष्टकं प्रोक्तं महास्नाने नियोजयेत् ॥"

**मक्षवीर्य्यः** । पुं । प्रियालवृक्षे । रा.नि.व.११ ।

**मक्षिका (क्षी)** । स्त्री । मधुमक्षिकायाम् । মৌমাছি । कीटविशेषे । মাছি । हिं मक्खी ।

उष्मान्तर्दाहविक्षेपो ग्लानिः स्यान्मांसगज्वरे ॥" चिकित्सा तीक्ष्णविरेचनादि। निदा.।

**मांसग्रन्थिः**। पुं। मांसजग्रन्थिरोगे। लक्षणम्—"मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत्। स्निग्धं महान्तं कठिनं शिरानद्धं कफाकृतिम्॥" वा.उ.२९अ.।

**मांसच्छदा**। स्त्री। मांसरोहिण्याम्। तत्पर्य्यायाः,—मांसरोही मांसी रसायनी सुलोमा लोमकरिणी। रा.नि.व.१२।

**मांसजम्**। क्ली। मेदोधातौ। हे.च.।

**मांसजातिः**। स्त्री। मृग-विष्किर-प्रतुद-प्रसह-विलेशय-महामृग-जलचर-मत्स्याद्यासु मांसजातिषु अष्टविधासु। प.सु.।

**मांसजालम्**। क्ली। जालवन्मांसे। মাংস-ঝিল্লি বা জাল। "चत्वारि मांसजालानि, तानि मणिबन्धगुल्फसंश्रितानि परस्परसन्निबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति यैर्गवाक्षितमिदं शरीरम्...।" सु.शा.५अ.।

**मांसतानः**। पुं। कण्ठगत मुखरोगभेदे। लक्षणं यथा—"प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण। स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्वकृतो विकारः॥" सु.नि.१६अ.।

**मांसतेजः**। क्ली। मेदोधातौ। हे.च.।

**मांसदलनः**। पुं। श्लेष्मातके, रक्तरोहितकवृक्षे। श.च.।

**मांसद्रावी** (द्रिन्)। पुं। अम्लवेतसे। টেথকল। रा.नि.व.६।

**मांसधरा**। स्त्री। तन्नामकप्रथमकलायाम्। "यस्यां मांसे शिरास्नायुधमनीस्रोतसां प्रताना भवन्ति।" स्थूलापरनामसप्तमत्वचि। या व्रीहिद्वयप्रमाणा भवति। सु.शा.४अ.।

**मांसपचनम्**। क्ली। मांसपाके। सु.।

**मांसपाकः**। पुं। शूकरोगविशेषे। लक्षण—"शीर्य्यन्ते। यत्र मांसानि यत्र सर्व्वाश्च वेदनाः। विद्यात्तं मांसपाकन्तु सर्व्वदोषकृतं भिषक्॥" सु.नि.१४अ.।

**मांसपुष्टि(ष्पि) का**। स्त्री। भ्रमरारिपुष्पवृक्षे। भ्रमरमारी इति मालवे प्रसिद्धा। रा.नि.व.१०।

**मांसपेशी**। स्त्री। मांसवर्त्तौ। मांसस्यैव भेदः। सु.स.९अ.। "बुद्बुदः प्रकराच्चैव मांसपेशी भवेत्ततः। द्विसप्ताहात् भवेत् पेशी रक्तमांसचिता दृढा। बीजस्यैवाङ्कुराः पेश्यः पञ्चविंशतिरायतः॥" सुखबोधः। मांसपेशीराह—"यथार्थमुष्मणा युक्तो वायुः स्रोतांसि दारयेत्। अनुप्रविश्य पिशितं पेशीर्विभजते तथा॥" मांसपेश्यः शरीरे पञ्चशतसंख्यकाः। तासां चतुःशतानि शाखासु। कोष्ठे षट्षष्टिः। ग्रीवायां ऊर्द्धगाश्चतुस्त्रिंशत्। स्त्रीणान्तु विंशत्यधिकपञ्चशतानि। तास्व गर्भाशयगर्भमार्गयोनिस्तनेषु तिष्ठन्ति। पेशीनाञ्च कर्म्माणि—देहिनां शिरा-स्नाय्वस्थि-पर्व्वसन्धयः पेश्य वृताः सबला भवन्ति। शाखासु तत्संख्या यथा—पादाङ्गुलीषु १५। पादाग्रे १०। पादोपरिकूर्च्चसन्निविष्टाः १०। गुल्फतलयोः १०। गुल्फजान्वोरन्तरे २०। जानुनि ५। ऊरौ २०। वङ्क्षणे १०। एवमेकस्मिन् सक्थिनि १००। एतेनेतरसक्थिबाहू व्याख्यातौ। कोष्ठेषु यथा—गुदे ३। शेफसि १। सेवन्यां १। वृषणयोः २। स्फिचोः १०। वस्तिमूर्द्धनि २। उदरे ५। नाभौ १। पृष्ठोर्द्ध्वमयतः पञ्च पञ्च दीर्घाः। १०। पार्श्वयोः ६। वक्षसि १०। अक्षकांसौ प्रति समन्तात् ७। हृदि २। यकृति २। प्लीह्नि २। उण्डुके २। ग्रीवोर्द्धे ३४। यथा—ग्रीवायां ४। हन्वोः ८। काकलके १। गले १। तालुनि २। जिह्वायां १। ओष्ठयोः २। नासायां २। नेत्रयोः २। गण्डयोः ४। कर्णयोः २। ललाटे ४। शिरसि १। स्त्रीणां अधिका विंशतिः। यथा—गर्भाशये ३। शुक्रार्त्तवप्रवेशिन्यां ३। योनावभ्यन्तरे सुखाश्रिते प्रसृते २। योनिकर्णिके २। स्तनयोः १०। इति। भा.। सु.शा.५अ.।

**मांसफलः**। पुं। तरम्बुजवल्याम्। তরমুজের লতা। रा.नि.व.७।

**मांसफला**। स्त्री। वार्त्ताकाम्। रा.नि.व.७।

**मांसमाषा**। स्त्री। माषपर्ण्याम्।

**मांसरक्ता**। स्त्री। रोहिण्याम्। মাংসরোহিণী। वै.निघ.।

**मांसरज्जुः**। स्त्री। मांसनिबन्धनस्नायौ। ताः चतस्रः। "महत्यो मांसरज्जवश्चतस्रः पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे।" सु.शा.५अ.।

**मांसरसः**। पुं। मांसयूषे। মাংসের ঝোল। गुणा,—"रसो मांसस्य चक्षुष्यो हृद्यः प्राणवर्द्धनः।

वृष्यो वातविकारघ्नः स्मृत्योजःस्वरवर्द्धनः । भग्नविश्लिष्टसन्धीनां कृशानां व्रणिनां हितः ॥” राज. ३प. । तत्पाकविधिः—मांसं १ प. जलं १६ प. शे. ४ प. । यवागूकर्म्मणि—मांसं ४ प. जलं ६४ प. शे. १६ प. । “प्रस्थेऽम्भसि पलं साध्यं मांसं पादस्थिते रसः । कंसाम्बु कुडवं मांसं पक्का पादावशेषिते । तेन क्वाथेन विपचेत् यवागूप्रोक्तकर्म्मसु ॥” नलः ।

**मांसरुहा** । स्त्री । मांसरोहिण्याम् । रा.नि. व.१२ ।

**मांसरोहा (ही)** । स्त्री । मांसरोहिण्याम् । रा.नि.व.१२ ।

**मांसरोहिका** । स्त्री । मांसरोहिणीभेदे । रा.नि.व.१२ ।

**मांसरोहिणी** । स्त्री । स्वनामख्यातसुगन्धद्रव्ये । मांसरोहिणि । तत्पर्य्यायाः,—अग्निरुहा वृत्ता चर्म्मकषा वसा विकषा मांसरोही । अपिच “मांसरोहिण्यग्निरुहा वृत्ता चर्म्मकरी वसा । प्रहारवल्ली विकषा वीरवत्यपि कथ्यते । स्यान्मांसरोहिणी वृष्या सरा दोषत्रयापहा ॥” सा द्विधा परं तुल्यगुणा । गुणाः—शीता कषाया कृमिघ्नी कण्ठशोधनी रुच्या वातदोषहरी च । रा.नि.व.१२ ।

**मांसलः** । पुं । माषनामशिम्बीधान्ये । माषकलाई । रा.नि.व.१६ ।

**मांसलफला** । स्त्री । वार्त्ताकौ । रा.नि.व.७ । तरम्बुजे । वै.निघ. ।

**मांसलिप्तम्** । क्ली । अस्थनि । वै.निघ. ।

**मांसवर्गः** । पुं । जलेशयानूपग्राम्यक्रव्यभुगेकशफजाङ्गलेषु । विशेषास्तत्पर्य्याये गम्याः । सु.सू. ४६अ. ।

**मांसवहस्रोतः** । क्ली । मांसवाहकनाड्याम् । तस्य मूलं स्नायुः त्वक् च । च.वि.५अ. ।

**मांसवारुणी** । स्त्री । हरिणादिमांसकृतवारुणीमद्ये । तत्करणविधिः—एषां मांसन्तु कणशः कृत्वा पूर्व्वद्रवे न्यसेत् । संस्थाप्य मण्डलं पश्चादर्कं निष्काशयेत्ततः । एवं सर्व्वत्र मांसस्य वारुणीकरणक्रिया । पूर्व्वद्रव्यः तक्रादि । मण्डलं ४८ दिनानि । रावणः ।

**मांसशृङ्गाटकम्** । क्ली । मांसकृतखाद्यभेदे । तत्प्रस्तुतविधिर्यथा,—“गुडमांसं तनूकृत्य कर्त्तितं स्वेदितं जले । लवङ्गहिङ्गुलवणमरिचार्द्रकसंयुतम् । एलाजीरकधन्याकनिम्बुरससमन्वितम् । घृते सुगन्धे तद्भृष्टं मांसशृङ्गाटमुच्यते ॥ मांसशृङ्गाटकं रुच्यं बृंहणं बलकृद्गुरु । वातपित्तहरं वृष्यं कफघ्नं वीर्य्यवर्द्धनम् ॥” भा. ।

**मांससङ्कोचः** । पुं । मांसस्य कठिनभावे । भा.म.४भ.विस्फोट.चि. । “हृद्दाहमांससङ्कोचः ।”

**मांससङ्घातः** । पुं । तालुरोगविशेषे । तत्र तालुमध्ये श्लेष्मणा दुष्टः अवेदनो मांससङ्घातो जायते । “दुष्टं मांसं श्लेष्मणा नीरुजञ्च ताल्वन्तःस्थं मांससङ्घातमाहुः ।” भा.म.४भ.मु.रो.चि. ।

**मांससमुद्भवा** । स्त्री । वसायाम् । वै.निघ. ।

**मांससर्पिः** । पुं । राजयक्ष्मणि घृतम् । विलेशयप्रसहमांसं १२॥० श. जलं १२८ श. शे. १६ श. । घृतं ४ श. । कल्कार्थं जीवनीयगणः प्रत्येकं १ प. । एकत्र पाच्यम् । वा.चि.५अ. ।

**मांससारः** । पुं । मेदोधातौ । रा.नि.व.१८ ।

**मांसस्नेहः** । पुं । मेदोधातौ । रा.नि.व.१८ । वसायाम् । वै.निघ. ।

**मांसहासा** । स्त्री । चर्म्मणि । श.र. ।

**मांसाङ्कुरः** । पुं । अङ्कुरवन्मांसेषु, अर्शोवलौ । मा.नि. ।

**मांसारिः** । पुं । अम्लवेतसे । वै.निघ. ।

**मांसार्ब्बुदम्** । क्ली । शूकरोगविशेषे । “मांसदोषेण जानीयादर्ब्बुदं मांससम्भवम् ।” सु.नि.१४अ. । अर्ब्बुदविशेषे । मांसजनित आब् । लक्षणं—“अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् । प्रदुष्टमांसस्य नरस्य बाढमेतद्भवेन्मांसपरायणस्य । मांसार्ब्बुदं त्वेतदसाध्यमुक्तम् ।” सु.नि. ११अ. ।

**मांसावद(दा)रणम्** । क्ली । मांसभेदने । वा.उ.३७अ. ।

**मांसिका** । स्त्री । जटामांस्याम् । चि.क.क. ज्वरो.चि. ।

**मांसिनी** । स्त्री । जटामांस्याम् । रा.नि.व.१२ ।

**मांसी** । स्त्री । सुरामांस्याम् । च.द.यक्ष्म.चि. चन्दनादितैले । वाघ्यालके । বেড়েলা । र.मा. । जटामांस्याम् । रा.नि.व.१२ । सु.सू.३८अ. । च.द. ज्व.चि. अङ्गारकतैले । वा.सू. १५अ. एलादिः ।

मांसरोहिणीभेदे । रा.नि.व.१२। रुदन्त्याम् । काकोल्याम् । मे. ।

**मांसेष्टा** । स्त्री । वल्गुलायाम् । रा.नि.व.४ ।

**मांसोदकम्** । क्ली । मांसरसे ।

**मांसौदनम्** । क्ली । मांससिद्धौदने । মাংসের পোলাও । गुणाः—"मांसौदनं धातुवृद्धिकरं स्निग्धं गुरु स्मृतम् ।" वै.निघ. । च. ।

**मांस्याह्वया** । स्त्री । जटामांस्यां । सु.चि.२अ. ।

**माकन्दः** । पुं । आम्रवृक्षे । भा. ।

**माकन्दी** । स्त्री । स्वनामख्यातपत्रशाकवृक्षे । हिं मादानी, माडनी । मं मायिनी । कं मागिनी तत्पर्य्यायाः,—बहुमूली मादिनी गन्धमूलिका । गुणाः—कटु तिक्ता मधुरा किञ्चिद्वातला दीपनी रुच्या पथ्या वर्षासु न सिताधिका च । रा.नि. व.७ । आमलकीवृक्षे । मे. । पीतचन्दने । হরিচন্দন । श.मा. । [ र.मा. ।

**माकरा** । स्त्री । मरुवकवृक्षे । গন্ধশাকল গাছ ।

**माकुलिः** । पुं । कृष्णसर्पेण गोनस्यां वैपरीत्येन वा जाते सर्पे । सु.कल्प.४अ. ।

**मागधम्** । क्ली । पिप्पलीमूले । सौवर्चललवणे । वै.निघ. । पुं । स्थूलजीरके । प.मु. । जीरके । रा.नि.व.६ । शुक्लजीरके । मे. । [ व्या.चि. ।

**मागधिका** । स्त्री । पिप्पल्याम् । वै.निघ.वा.

**मागधिमूलम्** । क्ली । पिप्पलीमूले । म. बाहुशालगुडे द्रव्यम् ।

**मागधी** । स्त्री । पिप्पल्याम् । प.मु. । रा.नि.व. ६।२३ । भैष.मृतसञ्जीवन्यां । शर्करायां । जटा. । गुञ्जेलायां । यूथिकायां । শ্বেত যুঁই । रा.नि.व. १० । जीरके । रा.नि.व.२३ । शतपुष्पाविशेषे । वै.निघ. । शालिधान्यविशेषे । सा च कफवातला । अत्रि.१५अ. ।

**मागधीजटा** । स्त्री । पिप्पलीमूले । वै.निघ. ।

**मागधीशिफा** । स्त्री । पिप्पलीमूले । सन्नि-ज्व.चि.त्रिभुवनकीर्तिरसे ।

**मागधेया** । स्त्री । स्वर्णजीवन्त्याम् । वै.निघ. ।

**माघमा** । स्त्री । कर्कटे । वै.निघ. ।

**माघवती** / **माघोनी** } स्त्री । पूर्व्वदिशि । रा.नि.व.२१ ।

**माघ्यम्** । क्ली । कुन्दपुष्पे । कुँद फूल । र.मा. ।

**माङ्गल्यम्** । क्ली । स्वर्णे । कपित्थफले । दधनि । नारिकेले । जीवके । स्थलपद्मे । मसूरके । मधूके । रा.नि.व.२३ । पिप्पलीमूले । रीठाकरञ्जे । ऋषभके । हरिद्रायुग्मे । वै.निघ. ।

**माङ्गल्यः** । पुं । बिल्ववृक्षे । र.मा. ।

**माङ्गल्यकाया** । स्त्री । दूर्व्वायाम् । हरिद्रायाम् । ऋद्धौ । माषपर्ण्याम् । गोरोचनायाम् । हरीतक्याम् । वै.निघ. ।

**माङ्गल्यकुसुमा** । स्त्री । शङ्खपुष्प्याम् । वै.निघ. ।

**माङ्गल्यप्रवरा** । स्त्री । वचायाम् । वै.निघ. ।

**माङ्गल्या** । स्त्री । गोरोचनायाम् । शमीवृक्षे । जीवन्त्याम् । वै.निघ. ।

**माङ्गल्यागुरुः** । पुं । अगुरुभेदे । केदारदेशे प्रसिद्धः । गुणाः—शीतगुणः स सुगन्धियोगवाहः श्रेष्ठश्च । रा.नि.व.१२ । [ व.५ ।

**माङ्गल्यार्हा** । स्त्री । त्रायमाणायाम् । रा.नि.

**माचलः** । पुं । रोगे ।

**माचिका** । स्त्री । आम्रातकवृक्षे । मोइया इति पश्चिमदेशप्रसिद्धवृक्षे । तत्पर्य्यायाः,—प्रस्थिका अम्बष्ठा अम्बालिका अम्बिका मधुरविदला केशी सहस्रा बालमूलिका । गुणाः—"...अम्ला रसे पाके कषाया शीतला लघुः । पक्वातीसारपित्तास-कफकण्ठामयापहा ।" भा. । पाठायाम् । आक्-नादि । च.चि.८अ. । मक्षिकायाम् । त्रिका. ।

**माची** । स्त्री । काकमाचीक्षुपे । গুড়কাঁউলী । वै.निघ. ।

**माची(टी)कम्** । क्ली । देवदारुणि । रस. र.प्रद.चि.पुष्यानुगचूर्णे ।

**माचीपत्रम्** । क्ली । सुरपर्णनामपत्रशाके । रा.नि.व.१० ।

**माजलः** । पुं । चासनामकपक्षिविशेषे । श.च. ।

**माञ्जरिकः** । पुं । अपामार्गक्षुपे । रा.नि.व.४ ।

**माटाम्लकः** । पुं । तरम्बुजसदृशलताफलभेदे । "सेटुमाटाम्लकौ. समौ ॥"

**माटी** । स्त्री । पर्णदलशिरायाम् । পানের শির । वै.निघ. ।

**माठः** । पुं । सुनिषण्णकशाके । শুশুনি শাক । वै.निघ. ।

**माड़: (द्रुम:)** । पुं । स्वनाम्ना कोङ्कणदेश-प्रसिद्धे वृक्षविशेषे । बम्. भिल्लीमाड़ । मं माडु । कां बैनी । कोङ्कणे झिर्कतुंडु । तत्पर्य्याया:,—माड़द्रुम: दीर्घ: ध्वजवृक्ष: वितानक: मद्यद्रुम: । गुणा:—शिशिर: कषाय: रूक्ष: पित्तदाहकर: तृषाघ्न: मोहजनक: वातल: श्लेष्मल: श्रमघ्न । रा.नि.व.९ । नारिकेलवृक्षे । वै.निघ. ।

**माढ़ि: (ढ़ी)** । स्त्री । पत्राङ्कुरे । दन्तवेष्ट-भागे । अ.टी.भ. । पर्णशिरायाम् । हे.च. । दन्त-शिरायां । श.र. ।

**माण: (क:)** । पुं । (Arum Indicum.) स्वनामख्याते कन्दविशेषे । माणकचु । बम्. । हिं बम्. मानकन्द । तत्पर्य्याया:,—स्थूलपत्र: विस्तीर्णपर्ण: माण: वृहच्छद: छत्रपत्र: । गुणा:—"माणक: स्यान्मधुरक: कथ्यते तद्गुणा अथ । माणक: शोथहृच्छीत: पित्तरक्तहरो लघु: ।" भा.पू.१भ.शा.व. ।

**माणकघृतम्** । क्ली । शोथे घृतम् । "माणक-क्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्... ।" घृत ४ श. । क्वाथार्थं—माण: १२८० श. जलं ६४ श. शे. १६ श. माणकल्क: १ श. । भा ।

**माणतुण्डिक:** । पु । जलचरपक्षिविशेषे । च.सू.२७व. ।

**माणमण्ड:** । पु । माणकचूर्णसाधिते मण्डभेदे । "पुराणं माणकं पिष्टा द्विगुणीकृततण्डुलम् । साधितं क्षीरतोयाभ्यामभ्यस्येत् पायसन्तु तत् ॥ हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि । सिद्धो भिषग्भिराख्यात: प्रयोगोऽयं निरत्यय: ॥" भैष. ।

**माणवक:** । पुं । षोडशवर्षीयबालके । रा.नि.व. १८ । द्वीपान्तरवच्चर्ज्जूरिकायाम् । वै.निघ. । मनुष्ये । हारभेदे । विका. । कुत्सितपुरुषे । मे. । वटौ । हे.च. । शोणके । च.सू.१५अ. ।

**माणिका** । स्त्री । पलाष्टकमाने । प.प्र.१ख. । श.मा. ।

**माणिक्यम्** । क्ली । स्वनामख्यातरक्तवर्णरत्न विशेषे । माणिक् । तत्पर्य्याया:,—शोणरत्नं रत्नराट् रविरत्नकं तरणिरत्नं शृङ्गारी रङ्गमाणिक्यं तरुणं रत्ननायकं रागयुक् पद्मराग: रत्नं शोणोपल: सौगन्धिकं लोहितकं कुरुविन्दं कुरुविन्द: लक्ष्मीपुष्प: अरुणोपल: । गुणा:—मधुरं स्निग्धं वातपित्तघ्नं रसायनञ्च । रा.नि.व.१३ । "गर्ग्याः दग्धेन माणिक्यं जयन्त्या मौक्तिकन्तथा । विद्रुमं क्षारवर्गेण ताक्ष्यं गोदुग्धतस्तथा । पद्मरागन्तु सन्धानैः कुलत्थक्वाथ-संयुतैः । तण्डुलीयरसेनैव नीलं नीलीरसेन च । रोचनाभिश्च गोमेदं वैदूर्य्यं त्रिफलाजलैः । स्वेदयेद् दोलिकायन्त्रे जयन्त्याः स्वरसेन च । मणिमुक्ताप्रवालादि यामैकं शोधितं भवेत् । चूर्णोदके तथा तैले काञ्जिके यामपादकम् । दोलायन्त्रेण मतिमान् स्वेदयेत्ताम्लकं परम् । अनेन शुद्धिमायाति सुव्यं गुरु वचो यथा ॥" इति शोधनमारणे । सा.को. । तद्देश्यानभेदान्नामभेदो यथा—"सिंहलन्तु भवेद्रक्तं पद्मरागमनुत्तमं । पीतं कालपुरोद्भूतं कुरुविन्दमिति स्मृतं । अशोकपल्लवच्छायमन्धं सौगन्धिकं विदुः । तुम्बुरं च्छायया नीलं नीलगन्धि प्रकीर्त्तितं ॥ उत्तमं सिंहलोद्भूत निकृष्टं तुम्बुरोद्भवं । मध्यमं मध्यमं ज्ञेयं माणिक्यं चैतभेदतः ॥" [ भा. ।

**माणिक्यकदली** । स्त्री । कदलीविशेषे ।

**माणिक्या** । स्त्री । ज्येष्ठ्याम् । टिकटिकि ।

**माणिबन्ध(मन्थ)म्** । क्ली । सैन्धवलवणे । अ. टी.स्वा. । रा.नि.व.६ । वै.निघ.२भ.अभिन्यासज्व. चि. । सामुद्रलवणे । वै.निघ. ।

**माण्डविक:** । पुं । सद्वेगजमध्यमाश्वे । "कैक-नाकारदेहस्तु भवेन्माण्डविको हय: ।" ज.द.६अ. ।

**माण्डव्य:** । पुं । पीतमण्डूके । वै.निघ. ।

**माण्डूकम्** । क्ली । वङ्गधातौ । रा.नि.व.१३ । अहिफेने । भैष.अभयनृसिंहरसे ।

**माण्डूकी** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**मातङ्ग:** । पु । अश्वत्थवृक्षे । अ.टी. । हस्तिनि । अम. । उदुम्बरवृक्षे । वै.निघ. ।

**मातङ्गकृष्णा** । स्त्री । गजपिप्पल्याम् । वै. निघ.२भ वा.व्या.पक्षवध.चि. ।

**मातङ्गपिप्पली** । स्त्री । गजपिप्पल्याम् ।

**मातङ्गमकर:** । पुं । महामत्स्यविशेषे । हस्तिनक्र । रा.नि.व १९ ।

**मातर:** । पुं । क्रमौ । वै.निघ. ।

**माता** । स्त्री । जनन्याम् । अम. । आखुकर्णी-लतायां । मूषाकर्णी लता । इन्द्रवारुणीलतायाम् । ब्राह्मणशाटी । रा.नि.व.२ । जटामांस्याम् । रा.

नि.व १२। महाश्रावणिकायाम्। रा.नि.व ५। घृतकुमार्य्याम्। वै.निघ.। गवि। मे.।

**माताङ्गा**। स्त्री। नागबलायाम्। वै.निघ.।

**मातुलः (कः)**। पुं। धुस्तूरक्षुपे। धुतुरा गाछ। मदनवृक्षे। कलायविशेषे। मे.। रा.नि.व.१०। त्रिका.।

**मातुलद्रुमः**। पुं। धुस्तूरवृक्षे। शाल्मलीवृक्षे। शिमुल गाछ। वै.निघ.।

**मातुलपुत्रकः**। पुं। धुस्तूरफले। श्वेत धुतुरार फल। अम.।

**मातुलपुष्पम्**। क्ली। धुस्तूरपुष्पे। वै.निघ.।

**मातुलानी**। स्त्री। प्रियङ्गुलतायाम्। श.च.। शणबीजे। हे.च.। भङ्गायाम्। सिद्धि। कलाये। मटर। मे.।

**मातुलाहिः**। पुं। सर्पविशेषे। मालुया साप, केउटिया साप। अम.।

**मातुली**। स्त्री। शणबीजे। भङ्गायां। श.च.।

**मातुलुङ्गः (कः)**। पुं। (Citrus medica.) छोलङ्गवृक्षे। टाबा नेबुर गाछ। हि बीजौरा। मं माहुलिङ्ग। कं मादला। तै मादीफलपुचेट्टु। उत्. कलंबा। तत्पर्य्यायाः,—फलपूरः फलपूरकः बीजपूरः बीजपूर्णः रुचकः स्वफलः लुङ्गः पूरः पूरकः अम्लकेशरः छोलङ्गः। प.मु। सु.सू.२१ अ.। च.द.ज्व.चि.। "अरुचौ मातुलुङ्गस्य केशरम्।" च.सू.४ अ.। गुणा.—"स्यान्मातुलुङ्गः कफवातहन्ता हन्ता कृमीणां जठरामयघ्नः। स दूषितरक्तविकारपित्तसन्दीपनः शूलविकारहारी।" तत्फलगुणाः—"श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनं। दीपनं लघु रुच्यञ्च मातुलुङ्गमुदाहृतम्॥" अम्लकटूष्णं श्वासकासघ्नं पाचकं कण्ठशोधनं दीपनं लघु हृद्यं रुचिकृच्च। तच्च फलं बालं वातपित्तकफरक्तकरम्। मध्यं फलं तादृशमेव। पक्वं फलं वर्णकरं हृद्यं पुष्टिकरं बलकरं शूलहरम् अजीर्णनाशनं विबन्ध-वात-कफ-श्वासाग्निमान्द्यहरं कासारोचकशोफघ्नञ्च। त्वक् तिक्ता दुर्जरा कृमिकफवातघ्नी च। तत्करहं स्वादु शीतं गुरु स्निग्धं वातपित्तहरञ्च। तन्मध्यमुष्णं शूलपित्तहर-मरोचकघ्नञ्च। तत्केसरं दीपनं लघु संग्राहि गुल्मार्शोघ्नञ्च। तद्वृक्षकेसरं पित्तमारुतघ्नं हृद्यं वर्णकरं रुच्यं रक्तमांसबलदञ्च। स्वरसः अरुचौ श्वासकासयोश्च हितः। तथा शूले अजीर्णे मन्दाग्नौ वातकफे च हितः। तत्काष्ठः कफकृत् दुर्जरश्च। तत्पुष्पं तिक्तम्। बीजं गन्धघ्नम्। अवि.१७ अ.। तत्केसरं वातघ्नम् उदररोगघ्नं दीप्यमम्लञ्च। बीजम् तिक्तं कफार्शःशोथहरञ्च। रा.नि.व.११। तन्मांसं बृंहणं शीतलं गुरु वातपित्तजिच्च। केसरः लघुः संग्राही शूलगुल्मोदरघ्नश्च। च.द.पि.ज्व.चि.कण्ठतालुशोषप्रलेपे। "केसर मातुलुङ्गस्य।" च.द.वातश्लेष्मज्व.चि.। "मातुलुङ्गफल-केशरीष्टतः।" बीजम् उष्णं कृमिश्लेष्मवातघ्नं गर्भदं गुरु च। पुष्पं वातलं ग्राहि लघु रक्तपित्तहरं शूलाजीर्णविबन्धाग्निमान्द्ये हितम्। तद्रसः अरुचि-श्वासकासेषु हितः अतिमधुरः हृद्यश्च। मद.व.६।

**मातुलुङ्गशिफा**। स्त्री। मातुलुङ्गमूले। छोलङ्ग लेबुर मूल। च.द.कफज्व.चि.। "मातुलुङ्गशिफाविश्व...।"

**मातुलुङ्गा (ङ्गिका,ङ्गी)**। स्त्री। जम्बीर-भेदे। शरबती लेबू। हिं शर्बती। रा.नि.व.११। भा.म.३भ.मू.घा.चि.। सि.यो.विष चि-प्रमीलिकाद्यञ्जने।

**मातृकः**। पुं। ऋषभके। प.मु.। स्त्री (का)। ऋषभके। आटरूपके। वै.निघ.।

**मातृकाकुन्दः**। पुं। शिशोर्गुदजव्रणविशेषे। वा.उ.२ अ.। See गुदकुन्द.।

**मातृकावहः**। पुं। पर्दकीटे। पेदो पोका। "मातृकावहकीटजः।" प्रयोगः। च.द.ग.ग.चि.।

**मातृनन्दनः (न्दी(इन्))**। पु। महाकरञ्जे। वै.निघ। गुच्छकरञ्जवृक्षे। रा.नि.व.९।

**मातृनिन्दकः**। पु। प्रतुदजातीयपक्षिणि। सु.सू.४६अ.।

**मातृमण्डलम्**। क्ली। नेत्रयोर्मध्यभागे। तत्तु आसन्नमरणो न पश्यति। स्मृतिः।

**मातृवाहकः**। पुं। कीटभेदे। पादगुड़ा वा पेदो पोका।

**मातृवाहिनी**। स्त्री। वल्गुलापक्षिणि। रा.नि.व.१९।

**मातृसिंही**। स्त्री। वासकवृक्षे। श.र.।

**मात्रा**। स्त्री। अनपायिपरिमाणे। च.सू.१अ.। भोजनादिपरिमाणे। कालपरिमाणे। अम.। द्रव्यविशेषे मात्रामाह पुष्कलावतः—"आर्द्रस्याष्ट-

पला मात्रा कुड़वस्य प्रमाणतः। मधुतैलघृतादीन् शुष्कद्रव्ये चतुष्पलम् ॥" विश्वामित्रः—"मुद्ग-मसूर-वाह्लीकविफलादिद्रव्यमानकैः। कुमाण्डादि फलिन्यानां कुड़वश्चाष्टभिः पलैः ॥" "सर्पिः-क्षौद्र-जल-क्षीर-तैल-क्षीराम्लयादिषु। अष्टौ पलानि कुड़वो नारिकेले च शस्यते ॥" मा.की.। तथाच भेदः। "गुडशालमठगव्यीनां मांसकुमाण्डयोरपि। गुड़स्या गुग्गुलोर्यं च मध्वः षोड़शभिः पलैः ॥" भोजः—"यद्यपि गुटिकायाय कर्त्तव्या गुल्मरोगिणाम्। क्षीरहिङ्गुजमोदाम्लवेतसैस्ता न केवलाः॥ क्रोष्टु-शोषादिरोगेषु वटायुर्दिङ्गुणो मतः। प्रमेहादिषु रोगेषु मात्रातोऽर्द्धः प्रशस्यते ॥"

**मादकः।** पुं। दधिफेने। आफिम्। प.मु.। हरिणभेदे। वै.निघ.। दात्यूहपक्षिणि। श.मा.। स्त्री (का)। भङ्गायाम्। सिद्धि, भाङ्। वै.निघ.।

**मादनम्।** क्ली। लवङ्गे। रा.नि.व.२६। पु। मदनवृक्षे। त्रि। मदजनके।

**मादनी।** स्त्री। माकन्याम्। रा.नि.व.७। विजयायाम्। सिद्धि। भा.।

**मादिनी।** स्त्री। गञ्जायाम्। सिद्धि। वै.निघ.।

**माद्री।** स्त्री। कृष्णातिविषायाम्। काल आतईच। रा.नि.व.६। धा.षि. ८।१२८.। वा.उ.२८.।

**माधवः।** पुं। कृष्णमुद्गे। प.मु.। रा.नि.व.१६। वैशाखमासे। त्रिका.। मधूकवृक्षे। वसन्तकाले। नीरकवृक्षे। क्ली। मधुकभेदे। वै.निघ.। च.द. मात्रा.चि.।

**माधवकः।** पुं। मधूकमद्ये। मौलेर मद।

**माधवकरः।** पु। रुग्विनिश्चयग्रन्थकारे। रसकौमुदीकारे च।

**माधवद्रुमः।** पुं। आम्रवृक्षे। रा.नि.व.११।

**माधवप्रियम्।** क्ली। पीतचन्दने। हरिचन्दन। रा.नि.व.१२। [भ.।

**माधविका।** स्त्री। माधवीलतायाम्। च.टी.

**माधवी।** स्त्री। माधवीलतायां। रा.नि.व.१०। शताह्वाक्षुपे। रा.नि.व.४। वासन्तीपुष्पवृक्षे। रा.नि.व.१०।२३। शतपर्व्वे। रा.नि.व.२३। मधु शर्करायाम्। रा.नि.व.१८।२३। तुलसीवृक्षे। वाराहीकन्दे। दुग्धफेनिकायाम्, दुग्धपापड़ी। माध्वीसुरायाम्। वै.निघ.। मद्ये। त्रिका.।

**माधवीमूलम्।** क्ली। माधवीलतामूले। रस.र.स्तनरो.चि.। "चोलेन माधवीमूलं पीतं स्त्रीमध्यकार्य्यकृत्।"

**माधवीलता।** स्त्री। स्वनामख्यातलतायाम्। माधवी फुलेर गाछ। गुलचिन्द, माधवी, चन्द्र-मोचे, इति महाराष्ट्रकर्णाटदेशयोः प्रसिद्धा। तैं माधवलीगे, पव्वुलगुरिविन्द। तत्पर्य्यायाः—अतिमुक्तः अतिमुक्तकः पुण्ड्रकः वासन्तीलता माधवीलता चन्द्रवल्ली सुगन्धा भ्रमरोत्सवा भद्रप्रिया भद्रलता भूमिमण्डपभूषणा वसन्तदूती लतामाधवी। गुणाः—कटुका तिक्ता कषाया मदगन्धयुता पित्तकासव्रणघ्नी दाहशोषघ्नी च। रा.नि.व.१०। अपिच—"माधवी स्यात्तु वासन्ती पुण्ड्रकी मुण्डकोऽपि च। अतिमुक्तो विमुक्तश्च कामुको भ्रमरोत्सवः॥ माधवी मधुरा शीता लघ्वी दोषत्रयघ्नी च॥" भा.।

**माधवेष्टा।** स्त्री। वाराहीनामकमहाकन्दशाके। वै.निघ.।

**माधवोचितम्।** क्ली। कक्कोले। कांकोल फल। रा.नि.व.१२।

**माधवोद्भवः।** पुं। राजादनीवृक्षे। क्षीरणी गाछ। रा.नि.व.११।

**माधुतैलिकः।** पुं। तन्नामकवस्तिविधौ। सु.चि.३८.।

**माधुरम्।** क्ली। मल्लिकापुष्पे। त्रिका.।

**माधुरी।** स्त्री। अजमोदायाम्। रा.नि.व.६। द्राक्षासवे। मधुरतायाम्। वै.निघ.।

**माधूकसारः।** पुं। मधूकवृक्षसारे। मउल-गाछ। भज्ञा-बा.म.१५८.शिरोविरेचने।

**माधूकी।** स्त्री। मधूकपुष्पजातमद्ये। "मधूक-पुष्पजाता या माधूकी सा निगद्यते।" गुणाः—माधूकी मादिनी बल्या पुष्टिकृत् कामवर्द्धिनी।

**माध्वकम्।** क्ली। माध्वीके। वै.निघ.।

**माध्वाम्रः।** पुं। बहुरसालाम्रवृक्षे। शान आमेर गाछ। रा.नि.व.११।

**माध्वी।** स्त्री। मधुखर्ज्जूरीवृक्षे। रा.नि.व.११। मधुरकण्टकमत्स्ये। श.र.। पुष्परसादिमधुकृते मद्ये। "पुष्पद्रवादिमधुसारमया तु माध्वी।" गुणाः—मधुरा हृद्या वातपित्तघ्न नात्युष्णा पाण्डु-

कामलागुल्मार्शोमेहघ्नी च। रा.नि.व.१४। पुष्परसे। मधुशर्करायाम्। वै.निघ.। मद्ये। विका.।

**माध्वीकम्।** क्ली। मध्वासवे। च.द.शाल्मचि.। मधूकपुष्पकृतमद्ये। अम.। मद्ये। रा.नि.व.१४। द्राक्षाकृतमद्ये। দ্রাক্ষামদ্য, পোর্ট। गुणाः—"माध्वीकं शीतलाम्लं मधुरमपि तथा संकषायोष्णकञ्च हन्यात् पित्तामयार्शःश्वसनमपि तथा चातिसारं प्रमेहान्। शूलानाहोपमर्द्दं जरयति सकलं दीपयत्यग्निमान्द्यम् तथाहाताभवातं वमनमपि तथा हन्ति सर्व्वांश्च रोगान्॥" अत्रि.। १९अ.। पुं। निष्पावे। শিম্। प.मु.। विका.।

**माध्वीकफलः।** पुं। मधुनारिकेलवृक्षे। रा.नि.व.११।

**माध्वीका।** स्त्री। श्वेतनिष्पावे। শ্বেত শিম্। रा.नि.व.१६।

**माध्वीमधुरा।** स्त्री। मधुखर्ज्जूरिकायाम्। পিণ্ডীখেজুর। रा.नि.व.११।

**माध्वीशर्करा।** स्त्री। मधुशर्करायाम्। মধুর চিনি। ता अष्टविधा मधूनामष्टविधत्वात्। गुणा अपि तत्तन्मधुतुल्या भवन्ति। रा.नि.व १४।

**माध्वीसिता।** स्त्री। मधुशर्करायाम्। মধুর চিনি। रा.नि.व.१४।

**मानम्।** क्ली। परिमाणे। পরিমাণ, ওজন। "नानाविचितमाचार्य्यै भेषजानां प्रकल्पनम्। मेनिरे यत्नतो मानमुच्यते पारिभाषिकम्॥" तच्च द्विविधं कालिङ्गमागधभेदेन। तयोर्द्वितीयं श्रेष्ठम्। "कालिङ्गान्मागधं श्रेष्ठम्।" इति। तद्यथा,—त्रसरेणुस्तु विज्ञेय स्त्रिंशता परमाणुभिः। त्रसरेणोस्तु पर्य्यायनाम्ना वंशी निगद्यते॥ षड्वंशीभिर्मरीचिः स्यात् षण्मरीच्यस्तु सर्षपः। षट्सर्षपैर्यवस्त्वेको गुञ्जैका च यवैस्त्रिभिः। गुञ्जाभिर्दशभिः प्रोक्तो माषको ब्रह्मणा पुरा॥ हेमश्च माषकश्चैव पर्य्यायस्तस्य कीर्त्तितः॥ माषस्तु पञ्चभिः षड्भिस्तथा सप्तभिरष्टभिः। दशभिर्द्वादशभिश्च रक्तिभिः षड्विधो मतः॥ चरकस्य तु माषस्तु दशगुञ्जाभिरेव च। चरकस्य तु चार्द्धेन सुश्रुतस्य तु माषकः॥ माषैश्चतुर्भिः शाणः स्याद्धरणं तन्निगद्यते। टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते॥ क्षुद्रको वटकश्चैव द्रंक्षणः स निगद्यते। कोलद्वयञ्च कर्षः स्यात् स प्रोक्तः पाणिमाणिकः॥ अक्षः पिचुः पाणितलं किञ्चित् पाणिश्च तिन्दुकं। विड़ालपदकञ्चैव तथा षोड़शिका मता॥ करमध्यो हंसपदं सुवर्णं कवड़ग्रहः। उड़ुम्बरञ्च पर्य्यायैः कर्ष एव निगद्यते॥ स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा। शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रञ्चतुर्थिका॥ प्रकुञ्चः षोड़शी बिल्वं पलमेवात्र कीर्त्त्यते॥ पलाभ्यां प्रसृतिः ज्ञेया प्रसृतञ्च निगद्यते। प्रसृतिभ्यामञ्जलिः स्यात् कुड़वोऽर्द्धशरावकः॥ अष्टमानञ्च स ज्ञेयः कुड़वाभ्याञ्च माणिका। शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः॥ शरावाभ्यां भवेत् प्रस्थश्चतुःप्रस्थैस्तथाढ़कम्। भाजनं कंसपात्रे च चतुःषष्टिपलञ्च तत्॥ चतुर्भिराढ़कैर्द्रोणः कलसो नल्वणोऽर्म्मणः। उन्मानञ्च घटो राशिर्द्रोणपर्य्याय संज्ञितः॥ द्रोणाभ्यां सूर्पकुम्भे च चतुःषष्टिशरावकः। सूर्पाभ्याञ्च भवेद् द्रोणी वाही गोणी च सा स्मृता॥ द्रोणचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः। चतुःसहस्रपलिका षण्णवत्यधिका च सा॥ पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः॥ "तुलापलशतंज्ञेया सर्व्वत्रैष विनिश्चयः। माषटङ्काक्षबिल्वानि कुड़वः प्रस्थ आढ़कः। राशिर्द्रोणी खारिरिति यथोत्तरचतुर्गुणाः। गुञ्जादिमानमारभ्य यावन् स्यात् कुड़वस्थितिः। द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम्। प्रस्थादिमानमारभ्य द्विगुणन्तु द्रवार्द्रयोः। मानं तथा तुलायाश्च द्विगुणं न क्वचित् स्मृतम्॥" प.प्र.१ख.।

**मानकम्।** क्ली। शरावे। ১ সের। वै.निघ.। ज्व.चि.चन्दनाद्यतैले। पुं। माणके। মাণকচু। र.मा.। मालाकन्दे। वै.निघ.।

**मानकच्चारः।** पु। माणकदण्डपत्रक्षारे। মাণডাঁটার ক্ষার। भैष.।

**मानतः।** पुं। पर्पटके। ক্ষেৎপাবড়া। वै.निघ.।

**मानद्रुमः।** पुं। शाल्मलीवृक्षे। वा.सू.१५अ. प्रियङ्ग्वादिव.। "मानद्रुमो मोचरसः।"

**मानधानिका।** स्त्री। त्रपुष्याम्। শশা, কাঁকুড়। श.मा.।

**मानभाण्डम्।** क्ली। परिमाणभाण्डे। মাপের-ভাঁড়। च.सू.१५अ.।

**मानम्लताफलः।** पुं। पटोलवृक्षे। वै.निघ.।

**मानवः।** पुं। मनुष्ये। अम.।

**मानवकोत्तसः।** पुं। शिशौ। रा.नि.व.१८।

**रक्तगुञ्जा ।** स्त्री । रक्तवर्णगुञ्जायाम् । See गुञ्जा ।

**रक्तगुल्मः ।** पुं । आर्त्तवजन्यगुल्मे । निदान लक्षणे यथा—"नवप्रसूताहितभोजना या या चामगर्भं विसृजेदृतौ वा । वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहं । पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणञ्चाप्यपरं निबोध । यः स्पन्दते पिण्डितएव नाङ्गैः चिरात्सशूलः समगर्भलिङ्गः । स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥ भा. ।

**रक्तगैरिकम् ।** क्ली । स्वर्णगैरिके । वै.निघ. ।

**रक्तग्रन्थिः ।** पुं । रक्तलज्जालौ । लाल लज्जावती । रक्तजन्यग्रन्थिरोगे । लक्षणं—"सवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात् ।" सु. नि.११अ. । मूत्रग्रन्थि नाम मूत्राघातविशेषे । "रक्तं वातकफाद्दुष्टं वस्तिद्वारे सुदारुणम् ॥ ग्रन्थिं कुर्यात् स कृच्छ्रेण सृजेन्मूत्रं सदाहतम् । अश्मरीसमशूलन्तं रक्तग्रन्थिं प्रचक्षते ॥" मा. नि.टी. ।

**रक्तग्रीवः ।** पुं । कपोते । पायरा । वै.निघ. ।

**रक्तघ्नः ।** पुं । रोहितकवृक्षे । रोड़ा, ग्रग्रना गाछ । जटा. । स्त्री (घ्नी) । ग्रन्थिदूर्वायाम् । गाँटिआ दूर्वा । श.च. ।

**रक्तचन्दनम् ।** क्ली । (Pterocarpus santalinus.) Red sandal wood. स्वनामख्यातसुगन्धिकाष्ठे । रक्तचन्दन । दा. हिं लालचन्दन । तें एर्रगन्धपुचेट्टु । ता. सेन्शाण्डनम् । फा. सण्डले सुर्ख । आ. सण्डले अहमर् । तत्पर्य्यायाः,—तिलपर्णं पत्राङ्गं रञ्जनं कुचन्दनं कुसोदं रक्ताङ्गं ताम्रवृक्ष. ताम्रसारं ताम्रसारकं चन्दनं लोहितं ताम्राभं लोहितचन्दनं रक्तसारं रक्ताङ्गं क्षुद्रचन्दनं तिलपर्णिका पत्तङ्गं पत्राङ्गं रक्तबीजं । तत्त्रिधा—"आक्षणमुत्तमं नूनं रक्तश्वेदञ्च मध्यमम् । आरक्तमधमं विद्धि रक्तचन्दनकं त्रिधा ॥" भैष. । गुणाः—शीतलं तिक्तं कफपित्तकासज्वरभ्रान्तिक्रमिवमितृष्णाहरम् । रा.नि.व.१२ । एतच्चन्दनं कषायपानयोः प्रयोज्यं । तथा कषायलेपयोश्च ग्राह्यम् । वा.सू.१५अ.गुड़ूच्यादिः । "धानकारक्तचन्दनम् ।"

**रक्तचित्रकः ।** पुं । (Plumbago rosea or Coccinea. Syn. P. Rosea.) रक्तवर्णदण्डपत्रचित्रकक्षुपे । रक्तचिता । मं रक्तचित्रक । क केंपिनचित्रमूल । तें एर्रचित्र । ता. शिवप्पुचित्तिर । तत्पर्य्यायाः,—उषर्बुधः कालः व्यालः कालमूलः अतिदीप्यः मार्ज्जारः वह्निः दाहकः पाचकः चित्राङ्गः महाङ्गः । गुणाः—स्थौल्यकरः गव्यः कुष्ठघ्नः रसनियामकः लोहवेधकः रसायनः चित्रकान्तराद्गुणाढ्यश्च । रा.नि.व.६ ।

**रक्तचिल्लिका ।** स्त्री । मधुरवास्तुके । मिठा बेतो । वै.निघ. ।

**रक्तचूर्ण(क)म् ।** क्ली । सिन्दूरे । लोहितचूर्णमात्रे । पुं । कम्पिल्लके । कमलागुड़ि । रा.नि. व.१३ ।

**रक्तजक्रिमिः ।** पुं । रक्तजन्यक्रिमिरोगे । लक्षणं—"रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणवः । अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः । केशादा रोमविध्वंसा रोमद्वीपा उडुम्बराः । षट् ते कुष्ठैककर्म्माणः सहसौरसमातरः ॥" मा.नि. ।

**रक्तजन्तुकः ।** पुं । भूनागे । शीष । रा.नि.व. १३ । लोहितप्राणिमात्रे ।

**रक्तजिह्वः ।** पुं । सिंहे । श.मा. ।

**रक्तझावुकः ।** पुं । (Tamarix dioica.) स्वनामख्यातवृक्षे । लाल झाउ । हिं लालझाउ । श.चि. ।

**रक्तझिण्टी ।** स्त्री । रक्तपुष्पझिण्टीक्षुपे । तत्पर्य्यायाः,—कुरुवकः शोणझिण्टिका शोणझिण्टी । अम. । See रक्तकुरण्टकः ।

**रक्ततरम् ।** क्ली । स्वर्णगैरिके । वै.निघ. ।

**रक्ततुण्डः (कः) ।** पुं । सारसपक्षिणि । शुकपक्षिणि । रा.नि.व.१९ । (कः) भूनागे । रा. नि.व.१३ ।

**रक्ततृणम् ।** क्ली । तृणविशेषे । वै.निघ. । स्त्री (णा) । गोमूत्रिकातृणे । रा.नि.व.८ ।

**रक्तत्रिवृत् ।** स्त्री । रक्तमूलत्रिवृति । लाल तेउड़ी । मं लोहिड़ी तियर । कं केंपिनेय तियड़े । तत्पर्य्यायाः,—कालिन्दी त्रिपुटा ताम्रपुष्पिका कुलवर्णा मसूरी अमृता काकनासिका । गुणाः—तिक्ता कटूष्णा रेचनी ग्रहणी-मलविष्टम्भहरी च । रा.नि.व.६ ।

**रक्तदला ।** स्त्री । चिविल्लिकायां । नलिकायाम् ।

प्रयनमपराघंणम् जर्द्दगे रेचनं प्रधीगे च प्रमनं प्रशस्तम्। पुं। हारीतपक्षिणि। भा.।

**रक्तपित्तहा।** स्त्री। ग्रन्थिदूर्व्वायाम्। গেঁটে দূর্ব্বা। श.च.।

**रक्तपित्तान्तकरसः।** पुं। रक्तपित्ताधिकारे रस.। पाठः—"मृताभ्रं मृतलौहञ्च माक्षिकं रससाधकं। गन्धकञ्च भवेत्तुल्यं यष्टिद्राक्षामृताद्रवैः। दिनैकं मर्द्दयेत् खल्वे सिताक्षौद्रसमन्वितम्॥" माता माषमात्र। र.सा.सं.।

**रक्तपौटिकादर्शनम्।** क्ली। रक्तजविकारे। निदा.।

**रक्तपीतफला।** स्त्री। मधुरविम्बिकायाम्। वै.निघ.।

**रक्तपुनर्नवा।** स्त्री। स्वनामख्यातपत्रशाकक्षुपे। গাদাপুনো বা রক্তঘেঁটুলি। কে কেঁপিন বেতড়াকলু। तत्पर्य्यायाः,—क्रूरा मण्डलपत्त्रिका रक्तकाण्डा वर्षकेतुः लोहिता रक्तपत्त्रिका वैशाखी रक्तवर्षाभूः शोफघ्नी रक्तपुष्पिका विकस्वरा विषघ्नी प्राहृष्येण्या सारिणी वर्षाभवः। गुणाः—तिक्ता सारणी शोथघ्नी रक्तप्रदरघ्नी पाण्डुपित्तघ्नी च। रा.नि.व.५।

**रक्तपुष्पः।** पुं। रक्तकाञ्चने। লাল বক ফুলের গাছ। र.मा.। रक्तकरवीरवृक्षे। जटा.। रोहितकवृक्षे। श.मा.। दाडिमवृक्षे। प.मु.। रक्तकाञ्चनवृक्षे। बन्धूकवृक्षे। पुन्नागवृक्षे। रा.नि.व.१०। पर्पटके। शाल्मलीवृक्षे। पलाशवृक्षे। पारिभद्रवृक्षे। जवावृक्षे। रक्तार्के। वै.निघ.।

**रक्तपुष्पकः।** पुं। पलाशवृक्षे। रोहितकवृक्षे। मन्दारवृक्षे। जटा.। पर्पटके। रा.नि.व.५। शाल्मलीवृक्षे। रक्तार्कवृक्षे। रा.नि.व.८।

**रक्तपुष्पा।** स्त्री। शाल्मलीवृक्षे। जटा.। कनककदलीवृक्षे। চাঁপাকলা গাছ। प.मु.। नागदमन्याम्। নাগদনা। रा.नि.व.५।

**रक्तपुष्पिका।** स्त्री। भूपाटल्याम्। रक्तपुनर्नवायाम्। रा.नि.व.५। लज्जालुकायाम्। श.च.। पाटलीवृक्षे। পারুল গাছ। रा.नि.व.१०। मञ्जिष्ठायाम्। लाङ्गलिकायाम्। रक्तगन्धपुष्पम्। शाल्मलीवृक्षे। वै.निघ.।

**रक्तपुष्पी।** स्त्री। धातकीवृक्षे। र.मा.। पाटलीवृक्षे। जटा.। जवापुष्पवृक्षे। रा.नि.व.१०। आवर्त्तकीलतायाम्। रा.नि.व.३। नागदमन्याम्। रक्तार्के। रक्तपुनर्नवायाम्। वै.निघ.। कोङ्कणदेशीयपाटलीपुष्पवृक्षे। उष्ट्रकाण्डीपुष्पवृक्षे। रा.नि.व.१०।

**रक्तपूरकम्।** क्ली। वृक्षाम्ले। তেঁতুল। रा.नि.व.६।

**रक्तपूर्व्वकः।** पुं। रक्तापामार्गे। वै.निघ.।

**रक्तपोस्तः।** पुं। (Papaver Rhoeas.) Red poppy. रक्तखसखसवृक्षे। লাল পোস্ত। हिं लालपोस्ता। तै एर्रगसगसालचेट्टु। ता. शिगप्पु पोस्तकाचेड़ि। कोषान्तरम्।

**रक्तप्रतिश्यायः।** पुं। दुष्टरक्तजप्रतिश्यायरोगे। लक्षणम्—"रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्त्तते। ताम्राक्षश्च भवेज्जन्तुः उरोघातप्रपीड़ितः। दुर्गन्धोच्छ्वासवदनो गन्धानपि न वेत्ति सः॥" मा.नि.।

**रक्तप्रवृत्तिः।** पु। पित्तजरोगे। भा.।

**रक्तप्रसवः।** पुं। रक्तकरवीरे। मुचुकुन्दवृक्षे। মুচ্কুন্দ গাছ। रक्ताम्लाने। রক্ত ঝাঁটি। रा.नि.व.१०।

**रक्तफलः।** पुं। वटवृक्षे। रा.नि.व.११। शाल्मलीवृक्षे। रा.नि.व.८। रक्तापामार्गे। स्त्री (ला)। बिम्बीलतायाम्। তেলাকুচা। प.मु.। स्वर्णवल्ल्याम्। শোণালু। रा.नि.व.९। वार्त्ताकुवृक्षे। वटवृक्षे। वै.निघ.।

**रक्तफेनजः।** पुं। फुस्फुसे, वामपार्श्वस्थक्लोम्नि। हे.च.। [ सु.कल्प.८म.।

**रक्तबभ्रुः।** पुं। प्राणघाति-महाविषिकविशेषे।

**रक्तबाल(लु)कम् (का)।** क्ली, स्त्री। सिन्दूरे। हारा.। त्रिका.।

**रक्तबिन्दुः।** पु। रक्तापामार्गे। रा.नि.व.४।

**रक्तबिन्दुच्छदा।** स्त्री। पुत्रदात्र्याम्। शुक्लकण्टकार्य्याम्। वै.निघ.।

**रक्तबीजः।** पु। दाड़िमवृक्षे। रा.नि.व.११। राठाकरञ्जे। রিঠা। रक्तशीशमवृक्षे। আসন গাছ। रक्तकुलत्थे। वै.निघ.।

**रक्तबीजका।** स्त्री। तरटीवृक्षे। তরুই গাছ। रा.नि.व.८।

**रक्तभस्म।** क्ली। रससिन्दूरादिकरणे। एतत्साधनप्रणाली र.सा.संग्रहे द्रष्टव्या।

**रक्तमञ्जर:** । पुं । वेतसलतायाम् । त्रिका. । निम्बवृक्षे । वै.निघ. ।

**रक्तमञ्जरी** । स्त्री । रक्तकरवीरे । वै.निघ. ।

**रक्तमण्डल:** । पुं । मण्डलिसर्पविशेषे । सु.कल्प. ४ष. ।

**रक्तमण्डलिका** । स्त्री । रक्तलज्जालुकायाम् । लाल लज्जावती । वै.निघ. ।

**रक्तमण्डूक:** । पुं । रक्तवर्णमण्डूकजातीयकीटे । तैर्दष्टस्य दंशकण्डूर्भवति पीतफेनागमश्च वक्त्रात् । सु.कल्प.८ष. ।

**रक्तमत्स्य:** । पुं । रक्तवर्णमत्स्यविशेषे । लाल माछ । तल्लक्षणगुणा:—"यो रक्ताङ्गो नातिदीर्घो न चाल्पो नातिस्थूलो रक्तमत्स्य: स प्रोक्त: । शीतो रुच्य: पुष्टिकृद्दीपनोऽसौ नाम्नं धत्ते किञ्च दोषत्रयस्य ॥" रा.नि.व.१७ ।

**रक्तमरिचम्** । क्ली । मरिचभेदे । लालमरिच । हिं लालमरिच । वै.निघ. ।

**रक्तमातृका** । स्त्री । रसधातौ । वै.निघ. ।

**रक्तमाद्री** । स्त्री । स्त्रीणां बाधकरोगविशेषे ।

**रक्तमिलातक:** । पुं । रक्ताम्लान-पुष्पवृक्षे । रक्तझाँटी । रा.नि.व.१० ।

**रक्तमुख:** । पुं । रोहितमत्स्ये । षष्टिकधान्ये । वै.निघ. ।

**रक्तमूत्रता** । स्त्री । रक्तप्रस्रावरोगे । निदा. ।

**रक्तमूर्द्धा (न्)** । पुं । सारसपक्षिणि । वै.निघ. ।

**रक्तमूलक:** । पुं । देवसर्षपक्षुपे । रा.नि.व.९ ।

**रक्तमूला (ली)** । स्त्री । लज्जालुकालतायाम् । रा.नि.व.५ ।

**रक्तमृत्** । स्त्री । गैरिके । गिरिमाटी । वै.निघ. ।

**रक्तमेह:** । पुं । रक्तस्राविप्रमेहरोगे । लक्षणं—"विस्रमुष्णं सलवणं रक्ताभं रक्तमेहिन: ।" भा. ।

**रक्तमोक्षणम्** । क्ली । जलौकावचारणे । जोंक धरान । शोणितबाहुल्यात् बहुविधरोगजनकत्वाच्च स्रावणस्यातीव प्रयोजनं भवति प्रयोजने च सञ्जाते जलौकालाबुकाभिरुपायै: शिरामोक्षैश्च तत्स्रावणं क्रियते । परन्तु कृशातिव्यवायिक्लीबादीनां न शिरामोक्ष: कार्य:, जलौकावचारणन्तु शस्तम् । विषदुष्टं वातादिदुष्टं वा शोणितं जलौकालाबुभि: प्रशस्तम् । भा. ।

**रक्तयष्टि: (ष्टी)** । स्त्री । लज्जालुकायाम् । मञ्जिष्ठायाम् । प.मु. ।

**रक्तयष्टिका** । स्त्री । मञ्जिष्ठायाम् । रा.नि.व.६ ।

**रक्तयावनाल:** । पुं । तुवरयावनाले । लाल जनार । रा.नि.व.१६ ।

**रक्तयोनि:** । पुं । योनिव्यापद्विशेषे । लक्षणम् —"रक्तयोन्याख्यासृगतिस्रुते ।" भा.उ.३३अ. ।

**रक्तरङ्गा** । स्त्री । मेंदीतिख्याते वृक्षे । वै.निघ. ।

**रक्तरज:** । क्ली । सिन्दूरे । वै.निघ. ।

**रक्तरस:** । पुं । रक्तासनवृक्षे । वै.निघ. ।

**रक्तरसा** । स्त्री । रास्नायाम् । वै.निघ. ।

**रक्तरसोन:** । पुं । लोहितरसोने । लाल रशुन । तै लोहितवेल्लुल्लि । कं केंपिनबेल्लुल्लि । म्हसकी । गाजर । तत्पर्यायाः,—महाकन्द: पृथुपत्र: स्थूलकन्द: यवनेष्ट: । गुणा:—मधुर: कटु: बलकर: । पत्रं तिक्तं । अस्थि सलवणञ्च । रा.नि.व.७ । पत्र मधुरं क्षारं नालो मधुरपिच्छल: कषाय इति । मद.व.७ ।

**रक्तराजालुकम्** । क्ली । रक्तवर्णालुकभेदे । एतत् किञ्चिदुष्णम् आग्नेयं वातकफहरञ्च । द्रव्यगुण: ।

**रक्तराजि: (जी)** । स्त्री । सर्पपिकानामवाच्य-कीटविशेषे । सु.कल्प.८ष. ।

**रक्तरेणु:** । पुं । सिन्दूरे । भा. । पलाशकलिकायां । मे. । पुन्नागवृक्षे । रा.नि.व.१० ।

**रक्तरेणुका** । स्त्री । पलाशकलिकायाम् । पलाशकुँड़ि । श.मा. ।

**रक्तरैवतक:** । पुं । द्वीपान्तरखर्जूरीवृक्षे । रा.नि.व.११ ।

**रक्तरोहितक:** । पं । (Rheum wightii.) रक्तरोहिड़ा । हिं रक्तरोहिडा ।

**रक्तलशुन:** । पुं । रक्तरसोने । लाल रशुन । रा.नि.व.७ ।

**रक्तला** । स्त्री । काकादन्यां । कूँच गाछ । मूर्वालतायाम् । रा.नि.व.३ ।

**रक्तलोचन:** । पुं । कपोते । हे.च. । भा. ।

**रक्तलोध्र:** । पुं । रक्तवर्णलोध्रवृक्षे ।

**रक्तवटी** । स्त्री । मसूरिकायां । वसन्त । त्रिका. ।

**रक्तावरटी।** स्त्री । मसूरिकायाम् । वसन्त । जटा. ।

**रक्तावर्गः।** पुं । दाड़िमकिंशुकलाक्षाहरिद्रा-दारुहरिद्राकुसुम्भपुष्पमञ्जिष्ठाबन्धूकेषु । "दाड़िमं किंशुकं लाक्षा बन्धूकञ्च निशाद्वयम् । कुसुम्भपुष्पं मञ्जिष्ठा इत्येष रक्तवर्गकः ॥" रा.नि.व.२२ ।

**रक्तावर्णः।** पुं । इन्द्रगोपकीटे । नाल आषाढ़े पोका । रा.नि.व.१९ । गोमेदमणौ । प्रवाले । कम्पिल्लके । वै.निघ. ।

**रक्तावर्त्तकः।** पुं । विष्किरपक्षिविशेषे । लाल बटेर । च.सू.२७अ. ।

**रक्तावर्त्मा।** पुं । कुक्कुटे । वै.निघ. ।

**रक्तावर्द्धनः।** पुं । वार्त्ताकौ । श.च. ।

**रक्तावर्षाभूः।** स्त्री । रक्तपुनर्नवायाम् । गांदा-पूर्णा । रा नि.व.५ ।

**रक्तावल्ली।** स्त्री । पीतपुष्पदण्डोत्पल्यां । र.मा. । मञ्जिष्ठायां । नलुकायाम् । वै.निघ. ।

**रक्तावातः।** पुं । वातरक्तनामरोगविशेषे । यो रोगः रक्तवस्त्रप्रवालधारणादुत्पद्यते । निष्कृतिश्च यथा—पद्मरागसहित सवस्त्र महिषीदानाद्भवति । "रक्तवस्त्रप्रवालानां हारी स्याद्रक्तवातवान् । सवस्त्रां महिषीं दद्यात् पद्मरागसमन्विताम् ॥" कर्म-विपाकः । नारिकेलमूलं छागीदुग्धेन पीतं वातरक्तं नश्यति । पुराणम् । See वातरक्तः ।

**रक्तावारिजम्।** क्ली । कोकनदे । रक्तपद्म । रा.नि.व.१० ।

**रक्तावास्तुकः।** पुं । शोणवास्तुकशाके । लाल बेतो शाक । वै.निघ. ।

**रक्ताविकारः।** पुं । रक्तजरोगे । निदा. ।

**रक्ताविद्रधिः।** पुं । रक्तजन्यविद्रधौ । लक्षणं —"कृष्णस्फोटावृतः श्यावः तीव्रदाहरुजाकरः । पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥" मा.नि. ।

**रक्ताविद्रुमः।** पुं । प्रवाले ।

**रक्तावृन्तकः।** पु । पुनर्नवायाम् । वै.निघ. ।

**रक्तावृन्ता।** स्त्री । शेफालिकावृक्षे । शिउलि गाछ । प.म. ।

**रक्ताशमनम्।** क्ली । कम्पिल्लके । कमलाउंड़ि । वै.निघ. ।

**रक्ताशालिः।** पुं, स्त्री । ( Oriza sativa. ) रक्तधान्ये । लालधानि मिहि चाउल । प.मु. । वें एरंनिवर्नैगलधान्यमु । तत्पर्य्यायाः —ताम्रशालिः शोणशालिः लोहितः । गुणाः—सुमधुरः लघुः स्निग्धः बलकरः रुचिकृद्दीपनः मुखशोषहरः पथ्यश्च । सर्व्वरोगघ्नः वृष्यः पित्तदाहवातरक्तघ्नश्च । रा.नि.व.१६ । त्रिदोषघ्नः चक्षुष्यः शुक्रलः मूत्रलः तृष्णाघ्नः बल्यः स्वर्य्यः हृद्यश्च । राज. । त्रिदोषघ्नी चक्षुष्या मूत्ररोगहा । चवि.१५अ. । चा.सू.६अ. । "रक्तो महान् सकलमः ।" च.द.ज्व.चि. । "पेयां वा रक्तशालीनां पार्श्वबस्तिशिरोरुजि ।" तन्मण्ड-गुणाः—रक्तशाल्युत्थं मण्डं मधुरं ग्राहि शीतलं । प्रमेहानश्मरीं हन्ति बालकं पित्तज्वरम् ॥" चवि. १२अ. ।

**रक्ताशालुकः (का)।** पुं, स्त्री । रक्तकमल-कन्दे । रक्तपद्मेर गेंड़ । वै.निघ. ।

**रक्ताशाल्मलिः।** पुं । रक्तपुष्पशाल्मलिवृक्षे । रक्तशिमुल । वै.निघ. ।

**रक्ताशासनम्।** क्ली । सिन्दूरे । हारा. ।

**रक्ताशिग्रुः।** पुं । रक्तशोभाञ्जनवृक्षे । लाल सजिना गाछ । मं रक्तसेगुया । कं केंपिनेयनुग्गि । तत्पर्य्यायाः,—क्षणजीरकः गर्भपातकः रक्तकः मधुरः बहलच्छदः सुगन्धः केशरी सिंहः मृगारिः । गुणाः—महावीर्य्यः मधुरः सारकः रसायनः शोफाध्मानश्वासघ्नः पित्तश्लेष्मघ्नश्च । रा.नि.व.७ ।

**रक्ताशिम्बी।** स्त्री । शिम्बीभेदे । लाल शिम् ।

**रक्ताशीर्षकः।** पुं । लगणखोल्याम् । प.मु. । सारसपक्षिणि । च.सू.२७अ. ।

**रक्ताशृङ्गिकम्।** क्ली । विषे । रा.नि.व.६ ।

**रक्ताशेखरः।** पुं । पुन्नागवृक्षे । र.मा. ।

**रक्ताशोखण्डकम्।** क्ली । रक्तचन्दने । वै.निघ.२भ.वा.व्या.चि.महाराम्रादौ ।

**रक्ताश्वेतः।** पुं । सदर्पमहाविषवृश्चिकभेदे । सु.कल्प ८अ. ।

**रक्ताष्ठीविसन्निपातः।** पुं । स्वनामख्यात-सन्निपातविशेषे । तस्य लक्षणं—"रक्तष्ठीवी ज्वर-वमितृषामोहशूलातिसारहिक्काध्मानभ्रमणदवथुश्वास-सज्ञाप्रणाशः । श्यामा रक्ताधिकतररसा मण्ड-लोत्थानरूपा रक्ताष्ठीवो निगदित इह प्राणहन्ता प्रसिद्धः ॥" निदा. ।

**रक्तसंभ्रम्** । क्ली । कुङ्कुमे । त्रिका. ।

**रक्तसङ्कोचपिशुनम्** । क्ली । कुङ्कुमे । त्रिका. ।

**रक्तसंवरणम्** । क्ली । कृष्णाञ्जने । वै.निघ. ।

**रक्तसन्दंशिका** । स्त्री । जलौकायाम् । जोँक । रा.नि.व १९ ।

**रक्तसन्ध्यकम्** । क्ली । रक्तकह्लारे । रक्तकह्लार अम. । रक्तोत्पले । वै.निघ. ।

**रक्तसरोरुहम्** । क्ली । रक्तपद्मे । अम. ।

**रक्तसर्षपः** । पुं । (Brassica nigra.) रक्तवर्णसर्षपे । राइ वा रक्तसरिषा । हि लालि राइ, माकुइाराइ । ं महुरी । कं मासिराइ । ते अवली । ता. कडघी । तत्पर्य्यायाः,—राजी आसुरी रक्तिका रक्तसर्षपः तीक्ष्णगन्धा मधुरिका क्षवः क्षवकः क्षुतकः । गुणाः—कटुः तिक्तः उष्णः वातघ्नः श्लेष्मगुल्मघ्नः दाहपित्तकरः कफगुल्मक्रिमिव्रणघ्नश्च । रा.नि.व.१६ । तत्तैलगुणाः,—तीक्ष्णं शिशिरं केश्यं कण्डूघ्नं लघुदीपनाग्नि वातादिदोषनाशकञ्च । पत्रगुणाः,—कटु स्वादु उष्णं अग्निदीपनं क्रिमिवातकफकण्ठामयहरञ्च ।

**रक्तसहा (ह्वः)** । स्त्री, पुं । रक्तम्लानपुष्पवृक्षे । रक्तपुष्पझाँटी गाछ । रा.नि.व.१० ।

**रक्तसारम्** । क्ली । रक्तचन्दने । प.मु. । रा.नि.व.१२ । रस.र.च द.मेह.चि.न्यग्रोधादिपञ्चके । पत्तङ्गचन्दने । वक्रमकाष्ठे । प.मु. । पुं । अम्लवेतसे । रा.नि.व.६ । रक्तखदिरवृक्षे । रा.नि.व.८ । सु.चि.९अ. । रक्ताशनवृक्षे । रा.नि व.९ । रक्तशिंशपायाम् । वाराहीकन्दे । वै.निघ. ।

**रक्तसूः** । स्त्री । शरीरस्थरसधातौ । रसधातु रा.नि.व.१८ ।

**रक्तसौगन्धिकम्** । क्ली । रक्तकह्लारपुष्पे । जटा. ।

**रक्तस्थज्वरः** । पुं । रक्तगतज्वरविशेषे । लक्षणं—"रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ । प्रलापः पिडका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥" मा.नि. ।

**रक्तस्रावः** । पुं । अम्लवेतसे । जटा. । नेत्रसन्धिगतरोगे । शिटा. । अस्य रक्तजन्यनेत्ररोगलक्षणं यथा—"रक्ताभिष्यन्दिनोऽपस्य नेत्रं भवति लोहितं । सर्व्वं तिमिरमह्नं वा श्यावदग्धादिपीडितम् । रक्तस्रावोऽथवा यस्य वाजिनो लोचनाद्भवेत् । रक्तस्रावाभिधानन्तु नेत्ररोगं तमादिशेत् ॥" ज.द ३०अ. ।

**रक्तस्रुतिः** । स्त्री । रक्तस्रावे । व्याक. ।

**रक्तहरः** । पुं । भल्लातके । भेला । वै.निघ. । त्रि । रक्तहरणकर्त्तरि ।

**रक्ता** । स्त्री । गुञ्जायाम् । कुँच । रा.नि.व.३ । सु.चि.३०अ.,सु.कल्प.५अ. । लाक्षायां । मञ्जिष्ठायां । रा.नि व.६।२३ । शिम्बीभेदे । प.मु । उष्ट्रकाण्डीनामद्रव्यवृक्षे । रा.नि.व.१० । मुषलीकन्दे । वचायाम् । वै.निघ. । रक्तवर्णयवपथ्याम् । लाल केन्नूरे । सु.कल्प.८अ. । कन्दकाण्डमूलविशेषे । कर्णशिरागते । वा.उ.१अ. ।

**रक्ताका(ङ्क)रः** । पुं, क्ली । प्रवालद्रुमे । पलाश गाछ । रा.नि.व.१३ ।

**रक्ताक्तम्** । क्ली । रक्तचन्दने । जटा. । [ निघ. ।

**रक्ताख्यातः (कः)** । पुं । रक्तापामार्गे । वै.

**रक्ताङ्गम्** । क्ली । रक्तचन्दने । प.म. । कुङ्कुमे । मे. । पुं । कम्पिल्लके । कमलागुँडि । प.मु. । प्रवालतरौ । रा.नि.व १३ । मत्कुणे । छारपोका । रा.नि व १९ ।

**रक्ताङ्गी** । स्त्री । कटुकायां । कट्की । रा.नि.व ६ । मञ्जिष्ठायाम् । भा. । जीवन्त्याम् । मे. । मल्लकायाम् । वै.निघ. ।

**रक्ताञ्जना** । स्त्री । रक्ताञ्जनिकायाम् । रक्ताञ्जनिका । च.द चारतैले ।

**रक्ताढकी** । स्त्री । रक्तपुष्पाढक्याम् । लाल अड्हर । गुणाः—रुच्या वन्या पित्ततापादिहरी च । रा.नि.व १६ ।

**रक्ताण्डः** । पुं । अण्डस्य अण्डरोगभेदे । ज.द. ५०अ । See अण्डस्कन्दः ।

**रक्तातिसारः** । पुं । सरक्तातिसाररोगे । तस्य सम्प्राप्तिः—"पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नाति पैत्तिके । तदापजायते ऽभीक्ष्णं रक्तातीसार उल्बणः ॥" मा.नि. ।

**रक्ताधारः** । पुं । चर्म्मणि । रा.नि.व.१८ ।

**रक्तापराजिता** । स्त्री । रक्तपुष्पापराजितायाम् ।

**रक्तापहम् (हा)** । क्ली, स्त्री । बोलनामगन्धद्रव्ये । शुनथाग्रापि । रा.नि.व.६ ।

**रक्तापामार्गः** । पुं । रक्तापामार्गवृक्षे । लाल आपाङ् । हि लालचिरचिरा । मं रक्तआघाड़ा । क यडाआघाड़ा । तैं कैम्पिगुत्तरणि । तत्पर्य्यायाः,—शिरोहतफलः क्षुद्रापामार्गः आघट्टकः दुर्ग्रभिनिका रक्तबिट् कल्यपविका । गुणाः—शीतः कटुः कफवातघ्नः व्रणकण्डूविषघ्नः संग्राही वान्तिघ्नश्च । रा.नि.व.४ । वातविष्टम्भी कफघ्नः शीतलः । भा.पू.१भ. ।

**रक्ताज(क)म्** । क्ली । रक्ताश्मनि । वै.निघ. ।

**रक्ताभः (भा)** । पुं, स्त्री । रक्तजपायाम् । लाल जवा । इन्द्रगोपकीटे । वै.निघ. ।

**रक्ताभिष्यन्दः** । पुं । सर्व्वगतनेत्ररोगभेदे । यथा—"रक्ताश्रुराजी दूषीका-गात्रमण्डलदर्शनम् । रक्तस्यन्देन नयनं सपित्तस्यन्दलक्षणम् ॥" वा.उ. १५भ. ।

**रक्ताभ्रम्** । क्ली । रक्तवर्णाभ्रके । लाल अभ्र । रा.नि.व.१३ ।

**रक्ताम्भोजम्** । क्ली । कोकनदे । रक्तकमल । रा.नि.व.१० ।

**रक्ताम्नः** । पुं । कोशाम्रवृक्षे । जलपाई । रा.नि.व.११ ।

**रक्ताम्लातकः** | **रक्ताम्लानः** } पुं । रक्तझिण्टीक्षुपे । लाल-झाँटी फूलेर गाछ । हिं लाल-कटसरैया । मं वाघझाड़ । क वण्दगिड्ड । तत्पर्य्यायाः,—रक्तप्रसवः रक्तसहः रागप्रसवः रामालिङ्गनकामकः अपरिम्लानः कुरवकः वधूत्सवप्रसवः सुभगः भ्रमरानन्दः । गुणाः—उष्णः कटुः वातामयशोफघ्नः ज्वरघ्नः आध्मानशूलकास-श्वासघ्नः वर्ण्यश्च । रा.नि.व.१० ।

**रक्तारिः** । पुं । महाराष्ट्रीक्षुपे । प.मु. ।

**रक्तार्कः** । पुं । अर्कपार्श्ववृक्षे । लाल आकन्द गाछ । तत्पर्य्यायाः,—विशोरः एकाष्ठीला रूपिका आदित्यपुष्पिका दिव्यपुष्पिका । गुणाः—"अर्कद्वय-शस्त्रवातकुष्ठकण्डूविषव्रणान् । निहन्ति प्लीहगुल्मार्शो यकृच्छ्लेष्मोदरक्रमीन् ॥" मद व.१ । रा.नि.व.१० ।

**रक्तार्त्तिः** । स्त्री । शोणितामये । रा.नि.व.२० ।

**रक्तार्म्म (न्)** । क्ली । नेत्ररोगभेदे । लक्षणं यथा—"पद्माभं मृदु रक्तार्म्म यन्मांसं चीयते सिते ।" मा.नि. ।

**रक्तार्व्वुदः** । पुं । शुकरोगे । रक्तजन्यार्व्वुदरोगे । See अर्व्वुदः ।

**रक्तार्शः** । क्ली । रक्तजन्यगदजरोगे । लक्षणं—"तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसाम् । कट्यूरुगुदशूलञ्च दौर्व्बल्यं यदि चाधिकम् । तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् । शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलम् । यदार्शसां घनञ्चासृक् तन्तुमत्पाण्डु पिच्छिलम् । गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम् । श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥" मा नि. ।

**रक्ता(लता)** । स्त्री । मञ्जिष्ठायां । सु.कल्प.५भ ।

**रक्तालुः** । पुं । (Dioscorea sativa.) Common Yam. रक्तपिण्डालुके । लाल पिण्डु आलू । हिं रतालु, सुथनी, रक्तालु । ता. यामसोल । तत्पर्य्यायाः,—रक्तकन्दः रक्तपिण्डकः रक्तपिण्डालुः लोहितः लोहितालुः । गुणाः—शीतलः मधुरः अस्रः श्रमपित्त-दाहघ्नः हृद्यः बलपुष्टिकरः गुरुश्च । रा.नि.व ७ । शालिधान्य-विशेषे । प.मु. । [ २भ. ।

**रक्तावसेचनम्** । क्ली । रक्तमोचने । च.चि.

**रक्ताश्वमारपुष्पम्** । क्ली । रक्तकरवीरपुष्पे, रक्तकरवी फूल । सि.यो विषमज्वरे । "रक्ताश्वमारपुष्पञ्च" [ क्लने शतके ।

**रक्ताश्वारिः** । पुं । रक्तकरवीरवृक्षे । रावण-

**रक्तास्रावः** । पुं । रक्तजनेत्रसन्धिरोगे । लक्षणं यथा—"रक्तास्रावः शोणितोत्थः सरक्तं कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम् ।" सु.उ.२भ. ।

**रक्ताक्षः** । पुं । महिषे । पारावते । चकोरे । मे. । सारसपक्षिणि । रा.नि.व.१९ । रोहितमत्स्ये ।

**रक्ताक्षी** । स्त्री । गुग्गुली । वै.निघ.२भ.अम्ला.चि. ।

**रक्तिः** । पुं । अष्टसर्षपमाने । च.कल्प १२भ. ।

**रक्तिका** । स्त्री । गुञ्जायाम । कूँच । र.मा. । रा.नि.व २ । राजिकायाम् । रा.नि.व.१६ ।

**रक्तेक्षणः** । पुं । कपोते । पायरा ।

**रक्तेक्षुः** । पुं । रक्तदण्डेक्षौ । काजला आक् । तत्पर्य्यायाः,—मूलापत्रः शोणः उत्कटः मधुरः स्थूलमूलः लोहितः लोहितेक्षुः । गुणाः—पाके मधुरः शीतलः मृदुः पित्तदाहहरः हृद्यः तेजोबलवर्द्धनश्च । रा.नि.व.१४ ।

**रक्तेक्षुशर्करा।** स्त्री। रक्तेक्षुजातशर्करायाम्। गुणाः—पित्तघ्नी। रा.नि.व.१४।

**रक्तैरण्डः।** पुं। रक्तवर्णैरण्डवृक्षे। লাল ভেরেণ্ডা। तत्पर्य्यायाः,—व्याघ्रः व्याघ्रदल हस्तिकर्णः रुबुः उरुबुकः नागकर्णः चञ्चु उत्तान-पत्रकः करपर्णः पाचन स्निग्धः रक्तकः चिरवीर्य्यः रुक्तैरण्डः। अयं प्रायेण श्वेतवद्गुणः। विशेषस्तु शोषघ्नः लघुः अरोचकघ्नः कफश्वासघ्नः ज्वरघ्नः रक्तपाण्डुभ्रान्तिनाशनश्च। रा.नि.व.८। "रक्तो-रुबुकस्तुवरो रसे कटुर्लघुः स्मृतः। तिक्तो वातकफश्वासकासकृम्यश्मघ्नश्च। रक्तदोषपाण्डु-रुजाभ्रान्त्यरोचकनाशनः। प्रायस्तन्ये गुणाश्चास्य श्वेतवच्च समीरिताः॥" वै.निघ.।

**रक्तैर्वारुः।** पुं। इन्द्रवारुणीलतायाम्। रा.नि.व.३।

**रक्तोच्चटा।** स्त्री। श्वेतगुञ्जायाम्। भा.।

**रक्तोत्पलम्।** क्ली। मधुरक्तपद्मे। कोकनदे। प.मु.। रा.नि.व.१०। सु.सू.३८अ। गैरिके। पुं, स्त्री (ला)। शाल्मलीवृक्षे। रा.नि.व.८।

**रक्तोदरः।** पुं। रोहितमत्स्ये। महाविष-मध्य-विष-वृश्चिकविशेषे। "जन्मैतेषां सर्पकोथात् प्रदिष्टं देहेभ्यो वा घातितानां विषेण। एभिर्दष्टे सर्पवेग-प्रवृत्तिः स्फोटोत्पत्तिर्भ्रान्तिदाहौ ज्वरश्च॥ खेभ्यः कृष्णं शोणितञ्चापि तीव्रं तस्मात् प्राणैस्त्यज्यते शीघ्रमेव॥" सु.कल्प.८अ.।

**रक्तोपलम्।** क्ली। गिरिमृत्तिकायाम्। तारा.।

**रक्तौदनम्।** क्ली। रक्तशाल्यादिभक्ते। अलक्तक रञ्जितभक्ते। च.द.बाल.चि.।

**रघुनाथः।** पुं। वैद्यविलासनामग्रन्थकारे।

**रङ्कुः।** पुं। मत्स्यरङ्के। वै.निघ.। शबलपृष्ठ-हरिणविशेषे। रा.नि.व.१९।

**रङ्गम्।** क्ली। वङ्गधातौ। রাঙ্। प.मु.। रा.नि.व.१३। पुं। टङ्कणे। সোহাগা। रा.नि.व.६। खदिरसारे। रा.नि.व.८।

**रङ्गकम्।** क्ली। रक्ते।

**रङ्गकाष्ठम्।** क्ली। पत्तङ्गे। वक्कमकाष्ठे। रा.नि.व.१२।

**रङ्गजम्।** क्ली। सिन्दूरे। र.मा.।

**रङ्गदः।** पुं। खदिरसारे। रा.नि.व.८। टङ्कण-क्षारे। रा.नि.व.६।

**रङ्गदलिका।** स्त्री। नागवल्लीलतायाम्। वै.निघ.। [भा.।

**रङ्गदा।** स्त्री। स्फटिकायाम्। ফট্‌কিরি।

**रङ्गदायकम्।** क्ली। कङ्कुष्ठे। रा.नि.व.१३।

**रङ्गदृढा।** स्त्री। स्फटिकायाम्। रा.नि.व.१३।

**रङ्गपत्री।** स्त्री। नीलीवृक्षे। নীল গাছ। रा.नि.व.४।

**रङ्गपुष्पी।** स्त्री। नीलीवृक्षे। रा.नि.व.४। जवावृक्षे। वै.निघ.।

**रङ्गबीजम्।** क्ली। रूप्ये। विका.।

**रङ्गमाणिक्यम्।** क्ली। माणिक्यरत्ने। रा.नि.व.१३।

**रङ्गमाता (तृका)।** स्त्री। लाक्षायाम्। লাহা। रा.नि.व.६ २३। विका.।

**रङ्गलता।** स्त्री। ( Helicteres Isora. ) आवर्त्तकीलतायाम्। আৎমোড়া। हि मरोर फली मेन्दु, कपासी। तें गुवादर्‌र। बम्. मेरादशिं केवान्। तत्पर्य्यायाः,—कल्याणी हेमपत्री रेचनी स्वर्णपत्रिका। गुणाः—अग्निमान्द्य-यकृत्प्लीहोदर-बद्धगुदाजीर्णविषमज्वर-पाण्डुकामला शूलघ्नी। केचित्।

**रङ्गलासिनी।** स्त्री। शेफालिकावृक्षे। শিউলি ফুলের গাছ। श.च.।

**रङ्गवीजम्।** क्ली। रौप्ये।

**रङ्गसङ्गटम्।** क्ली। यशदे। দস্তা। भा.।

**रङ्गक्षारः।** पुं। टङ्कणक्षारे। সোহাগার খই। वै.निघ.।

**रङ्गा।** स्त्री। जवावृक्ष। জবা গাছ। वै.निघ.।

**रङ्गाङ्गा।** स्त्री। फटिकारिकायाम्। ফট্‌কিরি। रा.नि.व.१३।

**रङ्गारिः।** पुं। करवीरवृक्षे। করবী গাছ। र.मा.।

**रङ्गिणी।** स्त्री। शतमूल्याम्। जटा.। कैवर्त्ति-कायाम् কেওটমুতা। रा.नि.व.६। हरिद्रा-याम्। वै.निघ.।

**रङ्गिष्ठालुकम्।** क्ली। स्वनामख्याते आलौ। রাঙা আলু। विका.।

**रजः।** पुं। पर्पटके। ক্ষেৎপাপড়া। भा.म.१

भ.चित्तभ्रम.ज्व.चि. । "पथ्यारेवतरामसेनकरजः ।" भा.म.१भ.ज्वरे कास.चि. । "कलिङ्गद्रुफल रजः ।" वै.निघ.दुर्जलज्व.चि.ग्रामोदयरसं । क्ली । स्त्रीकुसुमे । अ.र. ।

**रजः (स्)** । पुं, क्ली । स्त्रीपुष्पे । ऋमरदत्तः । अ.र. । "पाचिताः पित्ततापेन रसाद्या धातवः क्रमात् । शुक्रत्वं यान्ति मासेन तथा स्त्रीणां रजो भवेत् ॥" शार्ङ्ग.६अ. । रूपणे । उद्रेके । कालुष्ये । मतिभ्रमे । "रजोगुणसमुद्रेकः कालुष्यं मतिविभ्रमः ।" रा.नि.व.२१ । परागे । मे. ।

**रजःशयः** । पुं । कुक्कुरे । श.मा. ।

**रजःसारम्** । क्ली । कर्पूरे । नकुल.१२अ. ।

**रजःसारथिः** । पु । वायौ ।

**रजतम्** । क्ली । रौप्ये । अम. । स्वर्णे । वि.ज्व.चि.ज्वरकुञ्जरपारीन्द्ररसे । हस्तिदन्ते । ह.च. । शुक्लवर्णे । रक्तवर्णे । रक्ते ।

**रजतप्रभः** । पुं । सोमलतायाम् । সোমলতা । सु चि.२९अ. ।

**रजतोपमम्** । क्ली । रौप्यमाक्षिके । वै.निघ. ।

**रजनकः** । पुं । कम्पिल्लके । কমলাগুঁড়ি । वा.सू.१५अ.श्यामादिः । "शिखरिरजनकाञ्चिन्नरुहाः करञ्जाः ।" [ अ. टी. ।

**रजानः** । स्त्री । वास्तुके । रात्रौ । हरिद्रायाम् ।

**रजनिपुष्पम्** । क्ली । हरिद्रापुष्पे । হলুদফুল । रस.र.नागार्ज्जुनचूर्णे ।

**रजनी** । स्त्री । हरिद्रायाम् । रा.नि.व.६ । सि.यो.पाण्डु.चि. । सु.सू.३८अ.वल्लीपञ्चके । यतुकालतायाम् । रा.नि.व.३ । नीलिन्याम् । नील । मे. । दारुहरिद्रायाम् । वास्तुके । वै.निघ. । रात्राम् । अम. ।

**रजनीगन्धा** । स्त्री । (Polianthes tuberosa.) Tuberose. स्वनामख्यातपुष्पवृक्षे । রজনীগন্ধ । हिं गुलशब्बु । भूरिम. ।

**रजनीजलम्** । क्ली । नीहारे । हारा. ।

**रजनीद्वयम्** । क्ली । हरिद्राद्वये, हरिद्रादारुद्वयोः । च.द.विषमज्वरे ।

**रजनीपुष्पः** । पुं । पूतिकरञ्जे । रा.नि.व.९ ।

**रजनीहासा** । स्त्री । शेफालिकापुष्पवृक्षे । श.र. ।

**रजसानुः** । पुं । मनसि, हृदये । उणा.

**रजस्वर्णः** । पुं । पीतधुस्तूरके । वै.निघ. ।

**रजस्वलः** । पुं । महिषे । त्रिका. । पारदे । वै.निघ. । स्त्री ला । जातरजस्कायाम् स्त्रियि । रा.नि.व.१८ । तत्स्वरूपं यथा—"द्वादशाद्वत्सरादूर्द्धमापञ्चाशत्समाः स्त्रियः । मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत् । आर्त्तवस्रावदिवसादृतुः षोड़शरात्रयः । गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः ॥" रजःस्वलाकृत्यं— "आर्त्तवस्रावदिवसादहिंसाब्रह्मचारिणी । शयीत दर्भशय्यायां पश्येदपि पतिं न च ॥" इत्यादि । भ. । ऋतुस्नानानन्तरमादौ पतिमेव पश्येत् ।

**रज्जुः** । पु । केशवेण्याम् । दामनि । দড়ি । मांसरज्ज्वाम् । "पृष्ठवंशस्योभयत्र महत्यो मांसरज्जवः । चतस्रो मांसपेशीनां बन्धने तत्प्रयोजनम् ॥" भा. ।

**रञ्जकः** । पु । कम्पिल्लके । কমলাগুঁড়ি । रा.नि.व.१३ । भल्लातकवृक्षे । वै.निघ. । तन्नामकजठराग्नौ । तस्य स्थानं यकृत्प्लीह्नोर्मध्यम् । स एवाहाररसं रञ्जयति । सु.सू.२१अ. । क्ली । हिङ्गुले, हिङ्गुलविशेषे । रा.नि.व.१३ । स्त्री (का) । नखरञ्जिन्याम् । মেহেদি গাছ । वै.निघ. ।

**रञ्जनम्** । क्ली । रक्तचन्दनभेदे । বকম কাঠ । र.मा. । रक्तचन्दने । मद.व.१ । हिङ्गुले । रा.नि.व.१३ । स्वर्णे । जातीफले । वै.निघ. । पारदरञ्जनद्रव्ये । तारकर्मण्यस्य न तथा प्रयोगो दृश्यते । "केवलं निर्म्मलं ताम्रं वापितं रञ्जनेन तु । कुरुते त्रिगुणं जीर्णे लाक्षारससन्निभं रसम् ॥" रस.चि.३अ. । पुं । मुञ्जतृणे । मूज । रा.नि.व.८ । काम्पिल्लके । কমলাগুঁড়ি । वै.निघ. ।

**रञ्जनकः** । पं । कट्फलवृक्षे । रा नि.व.९ ।

**रञ्जनकेशी** । स्त्री । नीलीवृक्षे । वै.निघ. ।

**रञ्जनगणः** । पुं । रञ्जनद्रव्यवर्गे । "चतुर्विधा हरिद्रा स्यात् पत्तङ्गं रक्तचन्दनं । नीलीकुसुम्भमञ्जिष्ठालाक्षामद्दर्द्दिकिंशुकम् ॥" रा.नि.व.९ ।

**रञ्जनद्रुः (मः)** । पु । अङ्कुलवृक्षे । আচ্-ফুলের গাছ । श.चि. । धूनवृक्षे । वै.निघ. ।

**रञ्ज(ञ्जि)नी** । स्त्री । गुण्डारोचनिकायाम् । श.च. । नागवल्लीलतायाम् । वै.निघ. । नील्याम् । रा.नि.व.४ । जन्तुकालतायाम् । रा.नि.व.३ ।

मञ्जिष्ठायाम्। शेफालिकायाम्। मे। हरिद्रायाम्। रा.नि.व.६। पर्पट्याम्। रा.नि व.१३।

**रञ्जनीपुष्पः**। पुं। पूतिकरञ्जे। नाटाकरञ्ज। रा.नि व.९।

**रणः**। पु। दुम्बामेषे। दुम्बा। वै.निघ.।

**रणघण्टासमाकृतिः**। पुं। महाशणे। वै.निघ।

**रणपक्षी** (इन्)। पुं। रणगृध्रे। श्येन पाखी। वै.निघ.।

**रणप्रियम्**। क्ली। उशीरे। रा.नि.व.१२। पुं। श्येनपक्षिणि। रा.नि.व.१९।

**रणमुष्टिः**। पु। विषमुष्टिक्षुपे। कुचिला इति भाषा। रा नि.व.४।

**रणमूर्द्धजा**। स्त्री। कर्कटशृङ्ग्याम्। रा.नि. व.६।

**रणरणः**। पुं.। भ्रमरे। मशके। दंशे। त्रिका.। (कः) उत्कण्ठायाम्। हे.च.।

**रणालङ्करणः**। पुं। कङ्कपक्षिणि। काँक पाखी। रा.नि.व.१९।

**रण्डकः**। पुं। अफलवृक्षे। ठाँड़ा गाछ। श.च.।

**रण्डा**। स्त्री। मूषिककर्ण्याम्। अम.। म.वृहत् सोमनाथरसे।

**रतम्**। क्ली। मैथुने। अम.। गुह्ये। मे.।

**रतकीलः**। पुं। कुक्कुरे। हे.च.।

**रतज्वरः**। पुं। काके। त्रिका.।

**रतनारीचः**। पुं। कुक्कुरे। वै.निघ.।

**रतनिधिः**। पु। खञ्जनपक्षिणि। श.र.।

**रतव्रणः**। पुं। कुक्कुरे। त्रिका.। मे.।

**रतशायी** (इन्)। पु। कुक्कुरे। हे.च.।

**रताङ्घ्री**। स्त्री। कुम्भटिकायाम्। त्रिका.।

**रतान्दुकः**। पुं। कुक्कुरे। हे.च.।

**रतामर्द्दः**। पुं। कुक्कुरे। श.मा.।

**रतिः**। स्त्री। प्रीत्याम। सुरते। गुह्यदेशे। मे.।

**रतिकुहरम्**। क्ली। भगे। त्रिका.।

**रतिक्रिया**। स्त्री। मैथुने।

**रतिगृहम्**। क्ली। भगे। त्रिका.।

**रतिचर्य्या**। स्त्री। स्त्रीसेवायाम्। चा उ.४०अ.।

**रतिमन्दिरम्**। क्ली। योनौ। जटा.।

**रतिरथः**। पुं। नक्रे।

**रतिलक्षणम्**। क्ली। रतिक्रियायाम्।

**रतिवल्लभमोदकः**। पुं। वाजीकरणाधिकारे औषधम्। पाठः—"शक्राशनस्य बीजानि चूर्णितानि पलाष्टकं। कुड़वं हविषश्चैव खण्डप्रस्थं प्रगृह्य च। शतपुष्पीरसप्रस्थं प्रस्थं शक्राशनस्य च। गव्यमाजं पयः प्रस्थं दत्त्वा प्रस्थद्वयं पचेत्। धात्रीविजीरक मुस्तं त्वगेलापत्रकेशरं। आत्मगुप्ता चातिबला तालाङ्कुरकशेरुकं। शृङ्गाटकं त्रिकटुकं धन्याक चित्रक तथा। पथ्या द्राक्षा च काकोल्यौ खर्ज्जूरं सुरकं तथा। कटुका मधुकं कुष्ठ लवङ्गं सारसैन्धवं। यमानिका चाजमोदा जीवन्ती गजपिप्पली। प्रत्येक कर्षमेकञ्च चूर्णितानि शुभानि च। मधुनः कुड़वार्द्धञ्च पाकशेषे तथा क्षिपेत्। मृगाण्डजं सकर्पूरं यथालाभं विनिक्षिपेत्। रतिवल्लभनामायं सेव्यमानो रसायनः॥" सिद्धि-बीजचूर्ण ८ प. (मतान्तरे ५ प.) घृत ४ प. शर्करा २ श. शतावरीरसः गव्यदुग्धं छागदुग्धं प्र. ४ श.। प्रक्षेपः—आमलकी जीरकं कृष्णजीरकं मुस्ता त्वक् एला तेजपत्रं नागकेशरं कपिकच्छूबीजं (आलाकुशीर बीज) गोरक्षतण्डुला। (गोरक्ष-चाकुलिया) तालास्थिशस्यं कशेरुकं शृङ्गाटकं त्रिकटु धान्यक चित्रकं (मतान्तरे अभं वङ्गञ्च) हरीतकी द्राक्षा काकोली क्षीरकाकोली पिण्डखर्ज्जूरं कोकिलाक्षबीजं कटुकी यष्टिमधु कुष्ठ लवङ्गं सैन्धवं यमानी वनयमानी जीवन्ती गजपिप्पली प्र. २ तो. मधु २ प.। रस.र. भैष.।

**रतिसत्वरा**। स्त्री। पृक्कायाम्। पिड़िं शाक। श.च.।

**रतिसाधनम्**। क्ली। शिश्ने। वै.निघ.।

**रती**। स्त्री। रक्तगुञ्जायाम्। वै.निघ.।

**रताद्दहः**। पु। कोकिले। श.मा.।

**रत्नम्**। क्ली। हीरके। रा.नि.व,१३। मुक्तादौ। रत्नानि नव—रत्नं गारुत्मतं (पान्ना) पुष्परागः माणिक्य पद्मरागः इन्द्रनीलः मरकतः गोमेदः (वैदूर्य्यं) मौक्तिकं विद्रुमश्चेति विष्णुधर्म्मोत्तरे। तन्निरुक्तिः—"धनार्थिनो जनाः सर्व्वे रमन्तेऽस्मिन्नतीव यत्। ततो रत्नमिति प्रोक्तम्......॥"

भा.पू. १भ. रत्नव. रत्नसाधारणगुणाः—"रत्नानि मधितानि सुमधुराणि सराणि च। चक्षुष्याणि च शीतानि विषघ्नानि हृतानि च। मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च।" इति। माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगोः, माहेयस्य तु विद्रुमो निगदितः सौम्यस्य गारुत्मतम्। देवेज्यस्य च पुष्परागमसुराचार्य्यस्य वज्रं शनेः, नीलं निर्म्मलमन्ययोर्निगदिते गोमेदवैदूर्य्यके॥" भा.। तस्य धारणं प्रीतिवर्द्धनम्। सु.चि.२४अ.। "धन्यं माङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनं। हर्षणं काम्यमौजस्यं रत्नाभरणधारणम्॥" राज.३प.।

**रत्नकन्दलः।** पुं। प्रवाले। शब्दर.। अ.र.।

**रत्नगर्भपोट्टलिरसः।** पुं। यक्ष्माधिकारे रसः। पाठः—"रसं वज्रं हेम तारं नागं लौहञ्च ताम्रकम्। तुल्यांशं मरिचं देयं मुक्ताविद्रुममाक्षिकं। सर्वं तुल्यञ्च तुल्यांशं समाहं चित्रकद्रवैः (चार्द्रकद्रवैः) (शङ्खञ्च तुल्यतुल्यांशं भैष.)। मर्दयित्वा विचूर्ण्याथ तेन पूर्य्या वराटिकाः। टङ्कणं रविदुग्धेन मुखं लिप्त्वा निरोधयेत्। मृद्भाण्डे ता निरुध्याथ सम्यग्गजपुटे पचेत्। आदाय चूर्णयेत् सर्व्वं निर्गुण्ड्या सप्त भावयेत्। चार्द्रकस्य रसैः सप्त चित्रकस्य च विंशतिः (चित्रकस्यैकविंशतिः)। दत्त्वा भाव्यं ततश्चास्य देयं गुञ्जाचतुष्टयम्॥" र.सा.सं.। भैष.।

**रत्नगिरिरसः।** पुं। ज्वराधिकारे रसः। पाठः—"सूताभ्रस्वर्णताम्राणि गन्धकांशं तथैव च। लौहार्द्धं सवैक्रान्तं मर्दयेद्भृङ्गजैर्द्रवैः। पर्पटीरसवत् पाच्यं चूर्णितं भावयेत् पृथक्। शिग्रुवासकनिर्गुण्डी गुडूच्युत्थाग्निभद्रजैः। चाङ्गेरीजयन्तीभिर्मुनिब्राह्मीषु तिक्तकैः। कन्यायाश्च द्रवैर्भाव्यं विभिवारं पृथक् पृथक्। ततो लघुपुटे पाच्यं स्वाङ्गशीतं समुद्धरेत्। माषौ दद्यात् कषायाद्यैर्युक्ताश्चाभिनवज्वरे॥" पारद, अभ्र, स्वर्ण, ताम्र, गन्धक प्रत्येक समान; लौह अर्द्ध भाग; वैक्रान्त लौहेर अर्द्ध भाग; भीमराजरसे माड़िया पर्पटीवत् पाक करिबे। परे सजिनादिर रसे भावना दिया लघुपुटे पाक करिबे। रस.चि.।

**रत्नजातिः।** स्त्री। श्वेत-रक्त-नील-पीतवर्णैः ब्राह्मण-क्षत्रिय-वैश्य-शूद्रेषु।

**रत्ननायकः।** पुं। माणिक्ये। रा.नि.व.१२।

**रत्ननिधिः।** पुं। खञ्जनपक्षिणि। त्रिका.।

**रत्नमाला।** स्त्री। वैद्यकचिकित्साशास्त्रभेदे।

**रत्नमुख्यम्।** क्ली। हीरके। हे.च.।

**रत्नराट्।** पुं। माणिक्ये। रा.नि.व.१२।

**रत्नाङ्गः।** पुं। प्रवाले। रा.नि.व.१२।

**रत्नावली।** स्त्री। राधामाधवकृतद्रव्याभिधाने।

**रत्निः।** पुं, स्त्री। बद्धमुष्टिहस्ते। मुट्टिर हात। अम.।

**रत्यङ्गम्।** क्ली। योनौ। श.र.।

**रथः।** पुं। तिनिशवृक्षे। रा.नि.व.९। वेतसवृक्षे। अम.। काये। विश्वः। शकटे। गाड़ि। रथभ्रमणगुणाः—वातकोपनं शरीरदार्ढ्यकरं बल्यम् अग्निवर्द्धनञ्च। राज.।

**रथचरणः।** पुं। चक्रवाकपक्षिणि। श.र.।

**रथद्रुः।** पुं। तिनिशवृक्षे। वेतसवृक्षे। अम.।

**रथपर्य्यायः।** पुं। वेतसलतायाम्। श.च.। तिनिशवृक्षे। रा.नि.व.९।

**रथवृक्षः।** पुं। ऋद्धौ। वृद्धि ओषधि। वै.निघ.। तिनिशवृक्षे। अम.।

**रथाङ्गः।** पुं। चक्रवाकपक्षिणि। अम.।

**रथाङ्गाह्वयनामकः।** पुं। चक्रवाके। अम.।

**रथाङ्गी।** स्त्री। ऋद्धौ। रा.नि.व.५।

**रथाभ्रः।** पुं। वेतसवृक्षे। अम.।

**रथाभ्रपुष्पः।** पुं। वेतसवृक्षे। अम.।

**रथावर्त्ता।** स्त्री। स्थलपद्मिन्याम्। वै.निघ.।

**रथिकः (का)।** पुं, स्त्री। तिनिशवृक्षे। नादन गाछ। रा.नि.व.९।

**रथी (इन्)।** पुं। चक्रवाके। वै.निघ.।

**रथ्यः।** पुं। अश्वे। अम.।

**रदः (नः)।** पुं। दन्ते। रा.नि.व.१८।

**रदच्छदः।** पुं। ओष्ठे। रा.नि.व.१८।

**रदद्रुः।** पुं। अश्वशाखोटवृक्षे। आश्शेओड़ा।

**रदनच्छदः।** पुं। ओष्ठे। रा.नि.व.१८।

**रदनी (इन्)।** पुं। हस्तिनि। हला.।

**रदायुधः।** पुं। शूकरे।

**रदी (इन्)।** पुं। हस्तिनि।

**रदितम्।** क्ली। सर्पदष्टभेदे। सु.कल्प.४अ.।

**रन्तिदेवः।** पुं। कुक्कुरे। श.र.।

**रन्धनम्।** क्लो। पाककर्म्मणि। राँधा। व्याक.।

**रन्धित:।** त्रि। पाचिते। क्लो। कृतरन्धनद्रव्ये। राँधाव्यञ्जनम्। तस्य पात्रान्तरे स्थापनविधिः—भक्तं स्वपात्रे स्थाप्य न पात्रान्तरे, घृतं काष्ठमये पात्रे, मांसं तद्रसश्च ऊन राजतं श्वेतं काष्ठजे वा, फलादिशाकं काष्ठमृण्मयजे पक्वान्नं पिष्टकादि कांस्यजे काष्ठजे वा, शर्करां दुग्धं दारुजे वा। पानीयं पायसं तक्रं मृण्मय एव, काचजे स्फाटिके वा रागषाडवादीन् स्थापयेत् एवं सति तद्द्रव्यं रोगहरं भवेत्। पाकराज:।

**रन्ध्रम्।** क्लो। दूषणे। छिद्रे। अ.। शरीरे रन्ध्राणि नेत्रद्वयघ्राणश्रोत्राणां द्वे द्वे रन्ध्रे भवत:। तथा गुह्यमेढ्रपायूनामेकैकमिति नव। दशमञ्च मस्तके। स्त्रीणाञ्च त्रीणि स्तनगर्भमार्गेषु। स च चरकस्य उदरगह्वरे। श.क.२य.।

**रन्ध्रकाष्ठ:** (क:)। पं। ज्वालापर्व्वतकवृक्षे। रा.नि.व.८। [ व.८।

**रन्ध्रपत्र:।** पुं। नले। नल गाछ। रा.नि.

**रन्ध्रबभ्रु:।** पुं। उन्दुरौ। इँदुर। त्रिका.।

**रन्ध्रवंश:।** पुं। छिद्रवंशे। फोँकरा बाँश, बाँशिनी बाँश। तत्पर्य्याया:,—त्वक्सार: काचकाण्ड: मस्कर: वादनीय: शुषिराङ्ग:। गुणा:—कषाय: तिक्त: शीतल: गुल्मघ्न। रा.नि.व.८।

**रन्ध्री** (न्)। पुं। देवनले। वै.निघ.।

**रभस:।** पु वेगे। पौर्व्वापर्य्यविचारे। हर्षे:।

**रम:।** पु। रक्ताशोकवृक्षे। अ.।

**रमठम्।** क्लो। हिङ्गुनि। हिङ्। उपा.।

**रमठध्वनि:।** पु। हिङ्गुनि। हिङ्। श.च.। मैथुनं।

**रमणम्।** क्लो। पटोलमूले। मे.। जघने। ऐं.च.। जघने। श.र.। पु। गर्दभे। ऐं.च.। वृषणे। श.च.। महारिष्टवृक्षे। घोड़ानिम। कैटर्य्यनिम्बे। रा.नि.व.९।

**रमणा** (णी)। स्त्री। प्रियस्त्री। नार्य्याम्।

**रमति:।** पु। काके। श.र.।

**रमाप्रियम्।** क्लो। पद्मे। श.च.। पुं। दारुचीनी तिल्याति मिष्टत्वचि। वै.निघ.।

**रमावेष्ट:।** पुं। श्रीवासचन्दने। रा.नि.व.१२।

**रम्भा।** स्त्री। कदलीवृक्षे। कला गाछ। रा.नि.व.११।

**रम्य(क)म्।** क्लो। पटोलमूले। मे.। त्रिका.। सु.सू.१८अ.श्यामादि। प्रधानधान्ये। जटा.। पुं। स्वर्णचम्पकवृक्षे। चाँपा गाछ। मे.। बकवृक्षे। बकफुलेर गाछ। श.च.। त्रि। मनकरे। जटा।

**रम्यक:।** पुं। महानिम्बे। वै.निघ.।

**रम्यकचीर:।** पुं। महानिम्बे। घोड़ानिम्। रा.नि.व.९।

**रम्यपुष्प:।** पुं। शाल्मलीवृक्षे। शिमुल गाछ। रा.नि.व.८।

**रम्यफल:।** पुं। कारस्करवृक्षे। कुचिलागाछ। रा.नि.व.९।

**रम्या।** स्त्री। स्थलपद्मिन्याम्। रा.नि.व.५। रात्रौ। मे.। महेन्द्रवारुणीलतायाम्। माकाल। रा.नि.व.३। सुवर्चलाकन्दे। वै.निघ.।

**रम्यामलकी।** स्त्री। भूधात्र्याम्। भूँइ-आमला। रा.नि.व.५।

**रराटी।** स्त्री। ललाटे। पुराणम्।

**रलक:।** पं। कम्बले। अम.। ग्रथवृक्षे। मृगविशेषे। च.टी.रा.। पक्षणि। शुभृति:।

**रवणम्।** क्लो। कांस्ये। पुं। उष्ट्रे। ऐं.च.। कोकिले। उपा.।

**रवथ:।** पुं। कोकिले। उपा.।

**रवि:।** पु। अर्कवृक्षे। आकन्द गाछ। रा.नि.व.१०। ताम्रे। पद्मामृतरसे। अजीर्णचिनिर्व्वोदितरसे।

**रविकान्त:।** पुं। सूर्य्यकान्तमणौ। रा.नि.व.१३। सूर्य्यावर्त्तक्षुपे। हुड़हुड़िया। वै.निघ.।

**रविकीर्ण:।** पुं। अर्कवृक्षे। वै.निघ.।

**रविग्रह:।** पु। बालस्य ग्रहविशेषे। तदाक्रान्तलक्षणं यथा—"उद्वर्त्तिताक्ष: श्लिष्टश्च संग्रहीतहनुश्च य:। कम्पमानश्च यो बाल: स रविग्रहपीड़ित:॥" श.क.।

**रविजप्रिय:।** पु। नीलकान्तमणौ। वै.निघ.।

**रविजलम्।** क्लो। अर्कमूलरसे। आकन्देर रस। वै.संग्र.पद्मामृतरसे।

**रविदुग्धम्।** क्ली। अर्कक्षीरे। আকন্দের আঠা। र.सा.सं.त्रैलोक्यचिन्तामणिरसे।

**रविद्रुमः।** पुं। सदापुष्पवृक्षे। আকন্দ গাছ। रा.नि.व.२३।

**रविनाथः।** पुं। बन्धूकवृक्षे। বাঙ্গুলি গাছ। क्ली। पद्मे। श.च.।

**रविनामकम्।** क्ली। ताम्रे। তামা। वै.निघ.।

**रविपत्रः।** पुं। आदित्यपत्रक्षुपे। আকন্দ গাছ। रा.नि.व.४।

**रविप्रियम्।** पुं। रक्तकमले। ताम्रे। रा.नि.व.१०।१३। पुं। आदित्यपत्रे। আকন্দ গাছ। रक्तकरवीरे। रा.नि.व.४।१०। लकुचवृक्षे। श.मा.। नीलभृङ्गराजे। वै.निघ.।

**रविप्रिया (प्रोता)।** स्त्री। सूर्य्यावर्त्तक्षुपे। হুড়হুড়িয়া। र.मा.।

**रविभक्ता।** स्त्री। सूर्य्यावर्त्तक्षुपे। হুড়হুড়িয়া। र.सा.सं. रसमारणे।

**रविमूलम्।** क्ली। अर्कमूले। আকন্দমূল। र.सा.सं.ज्वरचूड़ामणौ।

**रविरत्न(क)म्।** क्ली। माणिक्ये। মাণিক। रा.नि.व.१३। [ १३।

**रविलोहम्।** क्ली। ताम्रे। তামা। रा.नि.व.

**रविवल्लभः।** पुं। भृङ्गराजवृक्षे। वै.निघ.।

**रविवल्ली।** स्त्री। आदित्यभक्तायां। হুড়হুড়িয়া। ब्राह्मीक्षुपे। वै.निघ.।

**रविसंज्ञकम्।** क्ली। ताम्रे। श.च.।

**रविसुन्दररसः।** पुं। सर्व्वज्वराधिकारे रसः। "द्विभागतालेन हतञ्च शाम्बं रसञ्च गन्धञ्च समानमात्रम्। विषञ्च सप्त द्विगुणञ्च ताम्रं त्रिसप्तवारञ्च खरातपे हि। विमर्द्य बिल्वस्य- रसेन चूर्णं गुञ्जैकदत्तं सितया समेतम्......॥" रस कौ.। (समीनसायु। विषं समञ्च द्विगुणञ्च ताम्रं) इति भा. पाठः।

**रविस्पर्शा।** स्त्री। ह्रस्वमेषशृङ्ग्याम्। ক্ষুদ্র মেড়াশিঙে। वै.निघ.।

**रवीन्दम्।** क्ली। पद्मे। धरणिः।

**रवीष्टः।** पुं। नागरङ्गवृक्षे। रा.नि.व.११। स्त्री (ष्टा)। आदित्यभक्तायाम्। হুড়হুড়িয়া। रा.नि.व.४।

**रशः।** पुं। वंशे। शहणी.चि.जातीफलावटी।

**रशना।** स्त्री। जिह्वायाम्। श.र.।

**रश्मीलः।** पुं। कर्म्मरङ्गवृक्षे। কামরাঙা গাছ। प.मु.।

**रश्मिः।** पुं। पक्ष्मणि। किरणे। मे.।

**रश्मिजातम्।** क्ली। रौप्ये। वै.निघ.।

**रश्मिपतिः।** पुं। आदित्यपत्रक्षुपे। रा.नि.व.४।

**रसम्।** क्ली। बोले। निशादल। रसाञ्जने। रा.नि.व.६। प.मु.। पुं। हिङ्गुले। र.मा.। पारदे। रा.नि.व.१३। शिलारसे। प.मु.। सिन्दूरे। इक्षुरसे। रोगे। वै.निघ.। विषे। रागे। गुणे। मांसद्रवे। अम.। जले। स्वादे। त्रिका.। शुक्रे। अम.। किराततिक्तके। द्राक्षायां। वै.निघ.। शरीरस्थसप्तधातुषु प्रथमधातौ। रसधातु। तत्पर्य्यायाः,—रसिका स्वेदमाता वपुः स्नवः चर्म्माम्भः चर्म्मसारः रक्तसारः अश्रमातृका आहारसम्भवः तेजःसम्भवः अग्निसम्भवः षड्रसासवः आत्रेयः असृक्करः धातुघन. मूलमहापरः धातुपः भोग्यसम्भवः। रा.नि.व.८। रसस्वरूपं—स आहारसारभूतः। "आहारस्य रसः सारः।" शाङ्ग.पू.६ष.। "सम्यक्पक्वस्य भुक्तस्य सारो निगदितो रसः।" गुणाः—सितः शीतः स्वादुः स्निग्धश्चलश्चेति। तत्कर्म्म—स धमनीर्गत्वा सर्व्वान् धातून् पुष्णाति। तदनु शीतस्निग्धपोषकत्वादिगुणैः शरीरं व्याप्नोति। तस्य स्थानम्—"सर्व्वदेहचरस्यापि स्थानं हृदयमेव च। रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्व्वान् धातून् विवर्द्धयेत् ॥" भा.। स्वरसे क्वाथे वा। दृषदि सम्भिन्नद्रवद्रव्ये। रा.नि.व.२०। सि.यो.ज्व.चि.। तत्साधनं यथा—"कुड़वं चूर्णितं द्रव्याङ्क्षिप्तञ्च द्विगुणे जले। अहोरात्रात् स्थितं तस्माद्भवेद्वा रस उत्तमः ॥ आदाय शुष्कं द्रव्यं वा स्वरसानामसम्भवे। जलेऽष्टगुणिते साध्यं पादशेषञ्च गृह्यते। निःशोषितचाग्निसिद्धं पलमात्रं रसम्पिबेत्। सितामधुगुड़क्षारान् जीरकं लवणन्तथा। घृतं तैलञ्च चूर्णादीन् कोलमात्रान् रसे क्षिपेत् ॥" शाङ्ग.१ष.। रसनेन्द्रियग्राह्यवस्तुनि, मधुरादौ। मिष्टादि रस। स च कालसहायभूमिवियदनिलानलसम्पर्केण परिणामान्तरं प्राप्य षट्प्रकारो भवति। ते च षड्रसाः

द्रव्यमाश्रित्य तिष्ठन्ति—"रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः। षट् द्रव्यमाश्रितास्ते च यथापूर्व्वं बलावहाः ॥" गुणाः—"तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्। कषायतिक्तमधुराः पित्तमन्ये तु कुर्व्वते ॥" भा.। तत्र पृथिव्यम्बुगुणभूयिष्ठो मधुरः, तोयाग्निगुणभूयिष्ठोऽम्लः, पृथिव्यग्निगुणभूयिष्ठो लवणः, वाय्वग्निगुणभूयिष्ठः कटुकः वाय्वाकाशगुणभूयिष्ठः तिक्तः, पृथिव्यनिलगुणभूयिष्ठः कषायः। सु.सू.४२अ.। रसभेदविकल्पाय त्रिषष्टिः। सु.उ.६३अ.। सप्तपञ्चाशदिति। च.द.द्रव्यगुणे शिवदासः। "मधुरः कषायस्तिक्ताम्लकश्च क्षारः कटुः षड्रसनामधेयम्। द्वयं द्वयं वातकफप्रकोपनं द्वयं तथा पित्तकरं वदन्ति ॥ क्षारः कषायः पवनप्रकोपी मधुरोऽपि तिक्तः कफकोपनश्च। कट्वम्लको पित्तविकारकारिणौ कट्वम्लकौ वातशमौ प्रदिष्टौ ॥ पित्तस्य नाशो मधुरः सतिक्तः कटुः कषायः शमनः कफस्य। अन्योन्यमेतच्छमनं वदन्ति परस्परं दोषविवृद्धिमन्तः ॥ मधुरकटुकावन्योन्यस्य प्रकर्षविधायिनौ, लवणविगुणोऽम्लकः प्रोक्तो विशेषरसानुगः। अविकृततया तिक्तैर्युक्तः कषायरसो लघुर्भवति सुतरां स्वादुः श्रेष्ठो गुणं करोति तथा। कटुतिक्तकषायाश्च कोपयन्ति समीरणं। कट्वम्ललवणाः पित्तं स्वाद्वम्ललवणाः कफम् ॥" अथ ये रसा यद्दोषविवर्द्धनास्तदाह—"समीरणे तु नो देयाः कटुतिक्तकषायकाः। पित्ते कट्वम्ललवणाः स्वाद्वम्ललवणाः कफे ॥" अथ ये रसा यद्दोषहराः—"स्वाद्वम्ललवणान् वाते तिक्तस्वादुकषायकान्। पित्ते कफे तिक्त-कटु-कषायान् योजयेद्रसान् ॥ मधुराम्लौ क्षारकटुकौ तिक्त-कषायकौ चेत्येतावन्योन्यरसविरोधिनौ भवेताम् ॥" अथ मधुररसवीर्य्यम्—"यः स्वादुः श्रमशोषहारिबलकृद्वीर्य्यप्रदः पुष्टिदः, प्रह्लादो रसेन करोति तदनु श्लेष्मप्रवृद्धिं ततः। पित्तानां दमनः श्रमोपशमनो हृद्यो मरायां हितः। शोषाणां चितपाण्डु-नेत्रजल-संदर्भो भवेन्माधुरः ॥" अथ तिक्तरसवीर्य्यं—"यस्तिक्तो मधुरात्मकोऽप्यतसमः कुष्ठादिदोषापहः, शान्तः सर्व्वरुजापहो भ्रमहरो पथ्यो न संक्लेदनः। जिह्वास्फोटकनाशनोऽपि भवति चापचतानां हितो, वक्त्रोल्लासकरः प्रक्लटकथितो निम्बादिकास्वादकृत् ॥'

कफाश्च कटुको दद्यात् महारोटकः ॥" अथाम्लवीर्य्यम्—"जिह्वास्फोटं जनयति तथा नेत्रनिर्मीलनञ्च, वोभत्सं वा जनयति सदा वातरोगापहारी। कण्डूकुष्ठव्रणजनकरो नो हितः शोषिणः स्यादम्लः प्रोक्तो मारुतशमनोऽसृक्प्रकोपं तनोति ॥" अथ कषायरसवीर्य्यम्—"जिह्वां कण्ठं ग्रसति नितरां वारकयातिसारे, श्लेष्मव्याधिप्रशमकरः श्वासकासापहर्त्ता। हिक्कागुल्मं हरति नितरां शोधनः स्याद्व्रणानां, प्रोक्तश्चार्थं समधिकगुणः श्रेष्ठकाषायनामा ॥" अथ क्षाररसवीर्य्यम्—"क्षारः क्लेदं जनयति मुखे स्वादुकृत्नो विदाही गुल्मश्लेष्मविकारहृद्रसमृदुकृच्छोषणश्च। पानाच्छ्वासजनयति पुनर्वह्निसम्पुष्टः स्यात्, श्रेष्ठः प्रोक्तो रसवरमहान् सर्व्वतो योग्यभूतः ॥" अपि.६८.।

**रसकः**। पुं। निष्क्वाथमांसे। इ.च.। क्लो। स्फटिकाख्यौ। खर्परिकाया। र.सा.सं. पञ्चनरसे। मांसरसे। च.द.गुल्म.चि.। खर्परीतुल्यके। वै.निघ. २अ.अर्दित-नवज्वराङ्कुशगारे। "खर्परीतुल्यकं तुल्यादन्यत्तत् रसक स्मृतम्। ये गुणास्तुल्यके प्रोक्तास्ते गुणा रसके स्मृताः ॥" भा.पू.१भ. उपरसव.।

**रसकर्पूरम्**। क्ली। (Percloride of mercury.) स्वनामख्यातधातौ। ब्रमुदर्पूर। पारदस्य श्वेतभस्मीकरणे। चन्द्रिकाकारः। एतत्साधनप्रकारो—"पिष्टं पांशुपटुं प्रगाढ़नमलं वज्राम्बुना नेकशः, सूतं धातुगतं खटोकवन्दितं तं संपुटे रोधयेत्। अन्तःस्थं लवणस्य तस्य च तले प्रज्वाल्य वह्निं दृढ़ं, घस्रं यावदथेन्दुकुन्दधवलं भस्मोपरिस्थं शनैः। तद्वक्षितयं स्ववङ्गसहितं प्रातः प्रयुक्तं भजेत् ॥" र.सा.सं.। गुणाः—फिरङ्गरोगघ्नं दीपनं पुष्टिकरं मन्त्रवीर्य्यकारकं कुष्ठघ्नं व्रणघ्नञ्च। द्रव्यगुणः। मतान्तरं यथा—शुद्धसूतं समं कुर्य्यात् प्रत्येकं गैरिकं सुधीः। इष्टिका खटिका तद्वत् स्फटिका सिन्धुजन्म च ॥ वल्मीकं क्षारलवणं भाण्डरञ्जकमृत्तिका। सर्व्वाण्येतानि संचूर्ण्य वाससा चापि शोधयेत् ॥ एभिश्चूर्णैर्युतं सूतं यावद्यामं विमर्द्दयेत्। तच्चूर्णसहितं सूतं स्थालीमध्ये परिक्षिपेत् ॥ तस्याः स्थाल्या मुखे स्थालीमप

तद्यन्त्रं रचेद्व यथादहर्निशं ॥ शनैरुद्घाटयेत् यन्त्रमूर्द्धस्थालीगतं रसं । कर्पूरवत् सुविमलं गृह्णीयात् गुणवत्तरं ॥ तदेव कुसुम चन्दन-कस्तुरी-कुङ्कुमैर्युतं खादन् । हरति फिरङ्ग व्याधिं सोपद्रवं सपदि । विदधाति वह्निदीप्तिं पुष्टिं वीर्य्यविपुलं। रमयति रमणीशतकं रसकर्पूरस्य सेवकः सततम् ॥"

**रसकल्पलता** । स्त्री । वैद्यकरसग्रन्थे ।

**रसका** । स्त्री । क्षुद्रकुष्ठभेदे । लक्षणम्— "कण्डूविता या पिड़का शरीरे संस्रावहीना रसकीच्यते सा ।" सु. ।

**रसकेशरम्** । क्ली । कर्पूरे । हारा. ।

**रसकेसरी** (इन्) । पुं । अरोचके रसः । पाठः —"रसगन्धौ समौ शुद्धौ दन्तीक्वाथेन मर्द्दयेत् । द्विगुणं वाणमितं रसपादं तथामृतम् । माषमात्रन्तु तत्सेव्यं नागरेण गुड़ेन वा ॥"......रस.कौ. ।

**रसक्रिया** । स्त्री । द्रव्यस्य घनीभूतसारकरणे । পাক দ্বারা দ্রব্যের সারকরণ । "क्वाथादीनां पुनः पाकात् घनभावे रसक्रिया । सात्रा रसक्रियायाश्च लिह्यात् पाणितलं बुधः ॥" सु.सू. ३६अ. । सु.चि.२१अ. ।

**रसखर्परः** । पुं । खर्परधातौ । (कासलक्ष्मी-विलासे) ।

**रसगतज्वरः** । पुं । रसधातुगज्वरे । लक्षणं —"गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ । रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ।" मा.नि. ।

**रसगन्धः (कः)** । पुं । गन्धके । रा.नि.व.१३ । गन्धरसे । बोलि । निका. । क्ली । रसाञ्जने । रा.नि.व.६ । [ सं. ।

**रसगन्धकसम्भूतम्** । क्ली । हिङ्गुले । र.सा.

**रसगर्भम्** । क्ली । रसाञ्जने । भा.म.४भ.नेत्ररो. चि. । हिङ्गुलविशेषे । रा.नि.व.१३ ।

**रसगुड़िका** । स्त्री । कासाधिकारे रसः । पाठः —"रसभागो भवेदेको गन्धको द्विगुणो भवेत् । त्रिभागा पिप्पली पथ्या चतुर्भागा विभीतका । पञ्चभागा त्वामला च षड्भागा समभागिका । भार्गी सर्व्वमिदं चूर्णं भाव्यं बव्वोलजद्रवैः । एकविंशतिवारञ्च मधुना गुड़िका कृता । विभीतक-प्रमाणेन प्रातरेकान्तु भक्षयेत् ॥" र.सा.सं. ।

**रसघा** । स्त्री । तिक्तगुञ्जाकरञ्जे ।

**रसघ्नः** । पुं । टङ्कणे । সোহাগা । रा.नि.व.६ ।

**रसचन्द्रिकावटी** । स्त्री । शिरोरोगे हिता । पाठः—"त्रैलोक्यविजयावीजं वीजमुन्मत्तकस्य च । कण्टकारीवीजकञ्च ऐन्द्रवं वीजमेव च । वीजञ्च वृद्धदारस्य समौ गन्धकपारदौ । आर्द्रकैर्वटिका कार्य्या कलायपरिमाणतः । एषा तोयानुपानेन प्रातः खाद्या हिताशिना... ..॥" र.सा.सं. ।

**रसचूड़ामणिः** । पुं । ज्वराधिकारे रसः । पाठः—"सूतभस्म विषं ताम्रं अयपाखं सगन्धकं । हेमतैलेन सम्मर्द्य ततो लघुपुटं दहेत् । भावयेत् कालकद्रावैरजामहिषमीनजैः । पित्तैः पृथक्सप्त-मितं विषधूमेन शोषयेत् । सप्तवारं त्रिवारं वा पश्चादार्द्रेण भावयेत् । रसचूड़ामणिः सिद्धः साक्षात् श्रीभैरवो महान् ॥" मात्रा १ र. । आर्द्रकनिम्बुरसाभ्यां सेव्यः । रस.चि. ।

**रसजः** । पुं । गुड़े । रा.नि.व.१४ । सुराकिट्टे । हे.च. । क्ली । रक्ते । श.च. । रसाञ्जने । वै.निघ. । संग्रहणी.चि.पाठाचू ।

**रसजातम्** । क्ली । रसाञ्जने । रा.नि.व.१३ ।

**रसज्ञा** । स्त्री । जिह्वायाम् । रा.नि.व.१८ ।

**रसज्येष्ठः** । पुं । मधुररसे । हे.च. ।

**रसतालकम्** । क्ली । रसगन्धतालादिकृत-यन्त्र-पक्वौषधभेदे । यथा,—"रसो गन्धस्तालकञ्च रक्तागस्त्रीसमागतं, सम्मर्द्य सिकतायन्त्रे पचेद्व यामचतुष्टयम् ॥ पीताभं जायते पाकाद्व रसतालक-संज्ञितम् । ज्वरघ्नं दीपनं वह्नेर्वीर्य्यस्तम्भनमुत्तमं ॥ हन्त्यष्टादश कुष्ठानि द्विविधं वातशोणितं । बल्य-मायुष्करं मेध्यं परमेतद्व रसायनम् ॥" भै. ।

**रसतालेश्वरः** । पुं । कुष्ठाधिकारे रसः । र. सा.स. ।

**रसतेजः (स्)** । क्ली । रक्ते । हे.च. ।

**रसदा** । स्त्री । श्वेतनिर्गुण्ड्याम् । শ্বেত নিশিন্দা । वै.निघ. ।

**रसदालिका** । स्त्री । पुण्ड्रकेक्षौ । পুঁড়ী আখ্ । करङ्कशालिनामेक्षौ । रा.नि.व.१४ ।

**रसद्रावी (इन्)** । पु । मधुरजम्बीरे । মিঠেনেবু । रा.नि.व.११ ।

**रसधातुः** । पुं । पारदे । रा.नि.व.१३ ।

**रामकः** । पुं । जलापामार्गे । वै.निघ. ।

**रामकन्दः** । पुं । ग्रमीवर्षे । प.मु. ।

**रामकर्पूरकः** । पुं । कर्पूरे । गन्धतृण, রামকর্পূর । अ.र. ।

**रामकाण्डः** । पुं । रामशरे । रा.नि.व.८ ।

**रामकोशा(षा)तकी** । स्त्री । महाशुक्ल-कोशातक्याम् । वै.निघ. ।

**रामगुवाकः** । पुं । रामपूगवृक्षे । রাম সুপারি ।

**रामचन्द्रः** । पुं । रसप्रदीपकारे । रसेन्द्र-चिन्तामणिकारे ।

**रामच्छर्द्दनकः** । पुं । मदनवृक्षे । भा. ।

**रामजननी** । स्त्री । रेणुकायाम् ।

**रामठम्** । क्ली । हिङ्गुनि । हिং । र.मा. । रा. नि.व.६ । मदनफले । च.द.वमनाधिकारे । पुं । अङ्कोटवृक्षे । र.मा. । जलापामार्गे । वै.निघ. ।

**रामठी** । स्त्री । नाडीहिङ्गौ । रा.नि.व.६ ।

**रामणः** । पुं । पर्व्वतनिम्बवृक्षे, कैटर्य्यनिम्बे । तिन्दुकवृक्षे । रा.नि.व.९ ।

**रामतरुणी** । स्त्री । तरुणीपुष्पवृक्षे । সেউতী ফুলের গাছ । रा.नि.व.१० ।

**रामदूतिका (ती)** । स्त्री । नागदन्त्याम् । নাগদনা । र.मा. । नागपुष्प्याम् । भा. । तुलसी-विशेषे । तत्पर्य्यायाः,—पर्व्वपुष्पी विशल्या नागदन्तिका कालजी फणिभक्षा मूषपर्णी भरण्यापा । श.च. ।

**रामपूगः** । पुं । गुवाकवृक्षविशेषे । तत्पर्य्यायाः, कामीनः मूनिपूगः सुवेरटः । त्रिका. ।

**रामभद्रा** । स्त्री । गाम्भारीवृक्षे । वै.निघ. ।

**रामलवणम्** । क्ली । शाकम्भरिलवणे । শাকম্ভর-লবণ । र.मा. ।

**रामवल्लभम्** । क्ली । त्वचि । গুড়ত্বক । रा.नि.व.६ ।

**रामवाणः** । पुं । रामशरे । रा.नि.व.८ ।

**रामवाणरसः** । पुं । अजीर्णाधिकारे रसः । पाठः—"पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितं । जातिकाफलमथार्द्धभागिकं तिन्तिडी-फलरसेन मर्द्दितं । गापमाषमनुपानयोगतः सद्य एव जठराग्निदीपनः ॥" পারা, বিষ, লবঙ্গ, গন্ধক প্রত্যেক ১ তো. মরিচ ২ তো. জায়ফল ॥০ তো. কাঁচা তেঁতুলের রসে ভাবনা । বটী মাষমাত্রা । र.सा.सं. । रस-चि.भा. ।

**रामशरः** । पुं । स्वनामख्यातशरतृणे, मुञ्ज-भेदे । रामशरु, सरगोल इति मालवदेशे प्रसिद्धः । রামশর । हिं रामशर, शरपत । तत्पर्य्यायाः,—रामकाण्डः रामेषुः अपर्व्वदण्डः दीर्घः नृपप्रियः । भा. । गुणाः—रसे अम्लकषायः पित्तजित् वात-कफघ्नश्च । एतन्मूलं द्रूपदुग्धं रुचिदञ्च । रा.नि.व.८ ।

**रामशीतला** । स्त्री । आरामशीतलायाम् । পত্রশাকবিশেষ । रा.नि.व.१० ।

**रामशे (से) नः (कः)** । पुं । भूनिम्बे । চিরেতা । रा.नि.व.९ । भा.म.१भ.चित्तभ्रमज्व.चि. ।

**रामा** । स्त्री । मृतकन्यायाम् । ঘৃতকুমারী । रा.नि.व.६ । हिङ्गुनि । मे. । हिङ्गुलि । अ.र. । अशोकवृक्षे । जातलायां । तमालपत्रे । वाय-माणायाम् । रा.नि.व.२३ । गोरोचनायां । रा.नि. व१२ । पालायाम् । गैरिके । अ.च. । श्वेत-कण्टकार्य्याम् । रा.नि.व.४ । आरामशीतलायां । रा.नि.व.१० ।

**रामाटरूषः** । पुं । वासाभेदे । রাম বাসক । भैष.ज्व.चि दार्व्वादौ ।

**रामाप्रियः** । पुं । त्वचि, दारचीनीति प्रसिद्धे वल्कले । वै.निघ. ।

**रामालिङ्गनकामः** । पुं । रक्ताम्लानपुष्पवृक्षे । রক্তঝাঁটী । रा.नि.व.१० ।

**रामावक्षोजोपमः** । पुं । चक्रवाके । रा. नि.व.९ ।

**रामावामाङ्घ्रिघातकः** । पुं । अशोकवृक्षे । रा.नि.व.१० ।

**रामेषुः** । पुं । रामशरे । रा.नि.व.८ ।

**रामोदुम्बरिकाफलम्** । क्ली । अञ्जीरफले । वै.निघ. ।

**रायणम्** । क्ली । पीडायाम् । श.र. ।

**रालः** । पुं । ( Mimosa rubicaulis. ) सर्ज्जतरौ । ধূনার গাছ । हिं खिलि । तै सर्जरसमु, सर्ज्ज । पञ्जा. राल धर्षु । रा.नि. व.९ । सर्ज्जरसे । ধূনা । तत्पर्य्यायाः,—सालः सालनिर्य्यासः सालरसः ललनः देवेष्टः सौसलः

बहुरूप: सर्जनिर्य्यास: सर्ज्जरस: सुरभी: यक्षधूप: सुरधूप: अग्निवल्लभ: कल: कललल: कललज: कलकलोद्भव:। गुणा:—शीतल: स्निग्ध: कषाय: तिक्त: संग्राही वातपित्तघ्न: स्फोटकण्डुतिव्रणघ्नश्च। पानलेपनगुणौ—शीतल: प्रदरघ्नश्च। रा.नि.व. १२। अपिच—"राली ग्राही हिमस्तिक्त: कषायो ग्राहको हरेत्। दोषास्रस्वेदवीसर्पज्वरव्रणविपादिका:। ग्रहभग्नाग्निदग्धांश्च शूलातिसारनाशन:॥" भा.।

**रालकार्य्य:**। पुं। शालवृक्षे। रा.नि.व.९।

**रालतैलम्**। क्ली। सालवृक्षभव-तैले। गर्ज्जन तैल। गुणा:—तैलं सर्ज्जरसोद्भूतं विस्फोटव्रणनाशनम्। कुष्ठपामाकृमिहरं वातश्लेष्मामयापहम्।"

**रालनिर्य्यास:**। पुं। सालवृक्षे।

**रालिका**। स्त्री। धूनके। धूना। वै.निघ. २भ.अ.सा.पथ्यादय्ये।

**रावण:**। पुं। वृक्षविशेषे। वम्. टेंभुरणी। वै. निघ.। अर्कप्रकाशनामवैद्यकग्रन्थकारे।

**राशि:**। पुं। द्रोणपरिमिते माने। प.प्र.१ख.। धान्यादिस्तूपे। स्तूपे। दूर्ग। मात्रायाम्। च.वि.१अ.।

**राषभी**। स्त्री। कपिकच्छ्वाम्। आलकुशी। वै.निघ.। गर्द्दभ्याम्। श.र.।

**राष्ट्रकम्**। क्ली। वैदूर्य्यमणौ। प.मु.।

**राष्ट्रिका**। स्त्री। कण्टकार्य्याम्। प.मु.। बृहत्यां। रा.नि.व.४। र.मा.।

**राष्ट्री**। स्त्री। महाराष्ट्रीलतायाम्। काँचड़ा। प.मु.। रा.नि.व.२३।

**रास:**। पुं। शृङ्खलके। गादी। क्रीड़ायाम्। विका.।

**रासना**। स्त्री। रास्नायां। वै.निघ.कास.चि. त्रिकटुकादिचूर्णे।

**रासभ:**। पुं। गर्द्दभे। गाधा। अम.। (भी) स्त्री। गर्द्दभस्त्रियां। श.र.। [च.।

**रासभवन्दिनी**। स्त्री। मल्लिकापुष्पवृक्षे। श.

**रास्ना**। स्त्री। (Vanda Roxburghii. Syn. Cymbidium tessaloides.) स्वनामख्याततरुजौषधौ केदारदेशे प्रसिद्धे। रास्ना। हिं रास्ना। ते किरम्बिचक्क। अमरदामर। तत्पर्य्याया:,—श्रीणगन्धिका सर्पगन्धा पत्ररूपा सुगन्धमूला सुगन्धा सुरसा गन्धनाकुली नकुलेष्टा नाकुली भुजङ्गाक्षी छत्राकी सुवहा श्रेयसी रसना रसा रसाढ्या रम्या रास्निका अतिरसा युक्तरसा रक्तरसा। सा त्रिधा—"रास्ना तु त्रिविधा प्रोक्ता मूलपत्रतृणैस्तथा। श्रेष्ठौ मूलदलौ श्रेष्ठौ तृणरास्ना च मध्यमा॥" रा.नि.व.६। सु.सू.३०अ. अर्कादि:। वा.सू.१५अ.निदर्शी अर्कादि:। "भार्गी रास्ना हृद्धिकाली प्रकीर्य्या।" च.द.ज्व.चि.। "रास्ना वृषादनी दारु।" श्वेतकण्टकार्य्याम्। रा.नि.व.४।

**रास्नागुग्गुलु:**। पुं। वातव्याधौ औषधम्। पाठ:..."रास्नायास्तु पलश्चैकं कर्षान् पञ्च च गुग्गुलो:। सर्पिषा वटकं कृत्वा खादेज्जन्ति च गृध्रसीम्॥" रस.र.। अन्य: कर्णरोगे—"रास्ना-घृतैरण्ड-सुराह्व-विश्वं तुल्यं पुरेणाथ विमर्द्य खादेत्।" भा.।

**रास्नातैलम्**। क्ली। वातव्याधौ तैलम्। पाठ:—"रास्नाशिरीषयष्ट्याह्वशुण्ठीसहचरामृता:। श्योणाकदारुसम्पाका ह्यगन्धात्रिकण्टका:। एषां दशपलान् भागान् कषायमुपकल्पयेत्। ततस्तेन कषायेण सर्व्वगन्धैश्च कार्षिकै:। दध्यारनाल-माषाम्बुमूलकेक्षुरसै: शुभै:। पृथक् प्रस्थोन्मितै: सार्द्धं तैलप्रस्थं विपाचयेत्।" च.चि.२८अ.।

**रास्नादशमूलम्**। क्ली। वातव्याध्यादौ कषाये। पाठा:—"दशमूलामृतैरण्ड-रास्ना नागर-दारुभि:। क्वाथो रुवुकतैलेन सामं हन्त्यनिलं गुरुम्।" रस.र.।

**रास्नादि:**। पुं। रास्नावृषादनीदेवदारुसर-लैलवालुकक्वाथकषाये। स क्षौद्रशर्करायुक्तो वातज्वरे हित:। चद.ज्व.चि.। "रास्नावृषादनीदारुसरलं सैलवालुकम्। कषाय: शर्कराक्षौद्रयुक्तो वात-ज्वरापह:।" प्रयोगा.वात.ज्व.चि.। वृषादनी वन्दाक: (वान्दड़ा)।

**रास्नादिलौहम्**। क्ली। राजयक्ष्माधिकारे, श्वासकासे च लौहम्। पाठ:—"रास्नाश्वगन्धाकर्पूर-भेकपर्णीशिलाह्वयै:। त्रिकत्रयसमायुक्तैर्लौहं यक्ष्मान्तकं मतम्॥" र.सा.सं.। (रास्नातालीशकर्पूर इति रसको.पाठभेद:।)

**रास्नाद्यं (घृतं तैलञ्च)**। क्ली। वातघ्नौषधम्।

पाठः—"रास्नाश्वगन्धाकपिकच्छुभूमिकुष्माण्डगोकण्टकशालपर्णी। छिन्नायवैरण्डबलाश्मतालामुनर्नवानां विधिनोद्धृतानाम्॥ प्रत्येकशः पञ्चपलं गृहीत्वा पचेद्घटेऽपां घृतपादशेषे। शतावरीरसं पूतं दत्त्वात्र पलषोड़शं। घृतप्रस्थं विपक्तव्यं तैलमेरण्डमेव वा। दत्त्वाष्टवर्गकल्कञ्च गुग्गुलोर्वा पलाष्टकं। सिद्धं घृतञ्च तैलं वा दद्यात् वातगदातुरे......।" रस.र.।

**रास्नापञ्चकः।** पुं। कुष्ठरोगाधिकारे कषायः। पाठः—"रास्नां गुड़ूचीमेरण्डं देवदारु महौषधम्। पिबेत् सर्व्वाङ्गके वाते सामे सन्ध्यस्थिमज्जगे।" अत्र मेदार्थमेरण्डतैलं प्रक्षिपन्ति हृद्याः। रस.र.।

**रास्नासप्तकम्।** क्ली। ऊरुस्तम्भाधिकारे पाचनम्। पाठः..."रास्नामृतारग्वध-देवदारु-त्रिकण्टकैरण्डपुनर्नवानां। क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली॥" रस.र.।

**रास्निका।** स्त्री। रास्नायाम्। भा.। षड़्बिन्दुतैले। "रास्निकासैन्धवञ्च।"

**राहुच्छत्रम्।** क्ली। आर्द्रके। आदा। रा.नि.व.६।

**राहुरत्नम्।** क्ली। गोमेदके रत्ने। रा.नि.व.१३।

**राहूच्छिष्टः।** पुं। लशुने। रसुन। विका.।

**राहूत्सृष्टः।** पुं। रसोने। धारा.।

**रिक्थम्।** क्ली। पर्कटीफले। अम.।

**रिक्षः।** पुं। रोहीतकवृक्षे। रोहड़ा। वै.निघ.। निशाचर-हिंस्रपशुविशेषे।

**रिक्षभोजनम्।** क्ली। मांसे। राक्षसप्रिये। वा.उ.।

**रिक्षसी।** स्त्री। चण्डायां। चोरनामगन्धद्रव्ये। रं.। मुरामांस्याम्। रस.र.प्रमेह.चि.। दंष्ट्रायाम्। वै.प.।

**रिक्षसीकन्दः।** पुं। चण्डालकन्दे। वै.निघ.।

**रिक्षा (क्ष्या)।** स्त्री। लाक्षायाम्। गा। अम.।

**रिङ्(ङ्ग)णम्।** क्ली। स्खलने। अम.।

**रिङ्ग(ङ्गि)णी।** स्त्री। मुद्गपर्णीलतायाम्। मुगानी। रा.नि.व.३। वैद्यकंटकार्याम्। ভেরেণ্ডা। कण्टकार्य्याम्। वै.निघ.बाल.चि.बालादिकषाये।

**रिठा (करञ्जः)।** स्त्री, पुं। रीठाकरञ्जे। रीठा गाछ। कां रिठा। गुर्ज्ज.अरिठा। वै.निघ.।

**रिपुः।** पुं। चोरनामगन्धद्रव्ये। চোরপুষ্পী। रा.नि.व.१२। क्रोधादौ। शारीररिपुषट्के।

**रिपुघातिनी।** स्त्री। गुञ्जाविशेषे। हिं कुचाइ। "कुचिका बहुनिस्तीर्णा कुचिका रिपुघातिनी।" श.च.।

**रिवुः।** पु। रक्तैरण्डे। वै.निघ।

**रिमेदः।** पुं। अरिमेदे। खदिरविशेष। रा.नि.व ८।

**रिरी।** स्त्री। पित्तले। वै.प.। [ श.र.।

**रिश्यः (ष्यः)।** पु। हरिणविशेषे। त्रिका.।

**रिष्टः।** पुं। रीठाकरञ्जे। रिठा। रक्तशिग्रुवृक्षे। सं.। श्वेतरसोने। रा.नि.व.७।

**रिष्टकः।** पुं। रक्तशिग्रुवृक्षे। श.र। अवि.२ष.।

**रिक्षा।** स्त्री। लिक्षायां। यूकाण्डे। নিকি, উকুনের ছানা। वै.श.।

**रीठा (करञ्जः)।** स्त्री, पुं। (Sapindus mukorossi or S. Trifoliatus. Syn.S. Setergens or S. Emerginta.) The soapnut tree. स्वनामख्यातोऽरिष्टनामककरञ्जवृक्षे। बड़ रिठा। हिं रीठा। तें रीठाकरञ्जमनैषट्ट। कुकुड़्कायलु अम्. रिथा। मा. पोशान कोदृ। तत्पर्य्यायाः,—गर्भपातनः गुच्छकः गुच्छपुष्पकः गुच्छफलः रीठा अरिष्टः मङ्गल्यः कुम्भबीजः प्रकीर्य्यो सोमवल्कः फेनिलः। गुणाः—तिक्त उष्णः कटुः स्निग्धः वातघ्नः कफघ्नः कुष्ठकण्डूघ्नः विषविस्फोटघ्नश्च। See अरिष्टकः।

**रीढ़कः।** पु। पृष्ठास्थनि। পীঠের ডাঁড়া, মেরুদণ্ড। वै.प.।

**रीतिः (ती)।** स्त्री। पित्तले। रा.नि.व.१३। लोहकिट्टे। मण्डूर। मे.। दग्धस्वर्णादिमले। धरणिः। [ १३।

**रीतिक(ज)म्।** क्ली। पुष्पाञ्जने। रा.नि.व.

**रीतिका।** स्त्री। पित्तले। पुष्पाञ्जने। श.च.।

**रीति(का)कुसुम(पुष्प)म्।** क्ली। पुष्पाञ्जने। रा.नि.व.१०।

**रीतिहेतुः।** पुं। वशदे। मत्ता। भा.।

**रुक्।** स्त्री। कुष्ठौषधी। कुड़। मे.। भा.म.१भ.

**रुण्डी** । स्त्री । कुन्दुरी । कुँदरुकि । रा.नि.व.८।

**रुदथः** । पुं । कुक्कुरे । उणा. ।

**रुदन्तिका (न्ती)** । स्त्री । स्वनामख्यातमहा-क्षुपे । रुदन्तीति उत्कलादौ प्रसिद्धा । सं कं चलुगाछ, रुदन्ती । तत्पर्य्यायाः,—स्रवत्तोया सञ्जीवनी अमृतस्रवा रोमाञ्चिका महामांसी चणपत्री सुधास्रावी । लक्षणं—"चणपत्रसमं पत्रं क्षुपश्चैव तथाविधः । शैशिरे जलबिन्दूनास्रवन्तीति रुदन्तिका ॥" गुणाः—कटुतिक्तोष्णा श्वासघ्नी कृमिघ्नी रक्तपित्तघ्नी मेहघ्नी जराव्याधिहरत्वात् रसायनी च । रा.नि.व.५ ।

**रुद्धगुदः** । पुं । निरुद्धगुदनामक्षुद्ररोगभेदे । लक्षणम्—"वेगसन्धारणाद्वायुरपानोऽपानसंश्रयम् । अणूकरोति बाह्यान्तर्मार्गमस्य ततः शकृत् । कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः ।" वा. उ.३१थ. ।

**रुद्रः** । पुं । महादेवे । आदित्यपत्रवृक्षे । आकन्द गाछ । रा.नि.व.४ ।

**रुद्रकः** । पुं । महारुद्रपक्षे । वै.निघ. ।

**रुद्रजः** । पुं । पारदे । रा.नि.व.१३ ।

**रुद्रजटा** । स्त्री । लताविशेषे, ईश्वरीलतायाम् । जटाधारी । जटामण्डा । तत्पर्य्यायाः,—रुद्रलता रुद्रा रुद्राणी रौद्री सौम्या सुगन्धपत्रा सुगन्धा सुवहा सुवचा सुरभिः घना ईश्वरीलता शिवाह्वा पत्रवल्ली महाजटा जटा जटावल्ली जटारुद्रा नेत्रपुष्करा । भा.म.१भ.सन्ततादिज्व.चि.माहेश्वर-धूपे । "रुद्रजटा गोशृङ्गं ।" गुणाः—कटुरसा श्वासकासहृद्रोगहरो भूतविद्रावणी रक्षोनिवर्हणी च । रा.नि.व.३ । मधुरिकायाम् । मौरी । श.टी.भ. ।

**रुद्रदारुः** । पुं । लेखदेवदारौ । मलेक्री देवदारु । वै.निघ. ।

**रुद्रनिर्माल्यम्** । क्ली । शिवनिर्माल्ये, पुष्पादौ । भा.म.१भ.सन्ततादि.ज्व.चि.माहेश्वरधूपे । "वंश-त्वक् रुद्रनिर्माल्यम् ।"

**रुद्रपत्नी** । स्त्री । अतसीक्षुपे । मसिना गाछ । र.मा. ।

**रुद्रपर्पटी** । स्त्री । कासाधिकारे औषधम् । पाठः—"शुद्धसूतं द्विधा गन्धं द्रवैः पुनः पुनः पचेत् । वातारिरार्द्रकं भृङ्गी काकमाची त्रिकण्टिका । द्विशैकं मर्दयेत् खल्ले पाचयेत् पर्पटी यथा । द्वयोः पादं मृतं ताम्रं दत्त्वा मृद्वग्निना पचेत् । रक्तवर्णं भवेद् यावत् तावद्धार्यं प्रयालयेत् । प्रक्षिपेत् कदलीपत्रेऽथवा स्निग्धपुटे पुनः । आच्छाद्य तेन योगेन ततश्चोर्द्धे गोमयं । इदं विचूर्णयेत् पश्चात् चूर्णपादं विषं क्षिपेत्......॥" भावा २र. । रस. र. । पाठोऽयं न लगति ।

**रुद्रप्रियः** । पुं । वकुलवृक्षे । रा.नि.व.८ । रावणकृते चण्डमशतके । स्त्री (या) । हरीतक्याम् । श र ।

**रुद्रभट्टः** । पुं । वैद्यजीवनग्रन्थकारे । सन्निपात-कलिकाकारे । [ चि. ।

**रुद्रमाख्यः** । पुं । बिल्ववृक्षे । वै.निघ.२भ.श्व.

**रुद्ररेताः (तस्)** । पुं । पारदे । वै.निघ. ।

**रुद्रलता** । स्त्री । रुद्रजटायाम् । जटाधारी । रा.नि.व.३ । मुक्तावर्षि । मुक्ताझुरि वा वर्षी ।

**रुद्रा** । स्त्री । रुद्रजटायाम् । जटाधारी । रा.नि.व.३ । नलिकानामगन्धद्रव्ये । रा.नि.व.१२ ।

**रुद्राणी** । स्त्री । रुद्रजटायाम् । रा.नि.व ३ ।

**रुद्राक्षः** । पुं । स्वनामख्यातवृक्षे । रुद्राक्ष गाछ । तत्पर्य्यायाः,...रुद्राक्ष्यः तृणमेरुः अमरः पुष्पचामरः । क्ली । तत्फले । तत्पर्य्यायाः,... शिवाक्षं सर्वाक्षं नीलकण्ठाक्षं हराक्षं भूतनाशनं पावनं शिवप्रियं । गुणाः...अम्लमुष्णं वातघ्नं कफनाशनं शिरोवेदनाशमनं रुच्यं भूतग्रहविषनाश-नश्च । रा.नि.व.११ ।

**रुधिरम्** । क्ली । कुङ्कुमे । रा.नि.व.१२ । च.सू. ४थ. । रक्तधातौ । ब्रक्त । रा.नि.व.१८ । रस. को.भय.वातरक्तचि.द्वादशायसे । गैरिके । गिरि-माटी । रा.नि.व.१३ ।

**रुधिरच्चरा** । स्त्री । लोहितक्षरानाम योनि-व्यापदि ।

**रुधिराख्यम्** । क्ली । इन्द्रनीलतुल्यमणिभेदे । पुराणम् ।

**रुधिराशयः** । पुं । यकृति । प्लीह्नि च ।

**रुपिका** । स्त्री । आदित्यपुष्पिकायां । आकन्द र.मा. । अरुणार्कक्षुपे । रक्त आकन्द । प.मु. । श्वेतार्के । भैष.नाडीव्रणचि. । सु.चि.१७थ. ।

**रुमा** । स्त्री । सम्भारलवणसमुद्रे । मे. ।

**रेचनः** । पुं । स्थूलारग्वधवृक्षे । বড় শোণালু গাছ । रा.नि.व.९ । तन्नामकधूमपानभेदे । भा. । त्रि । विरेचकद्रव्ये । क्ली । मलभेदने । र.मा. ।

**रेचनकः** । पुं । कम्पिल्लके । रा.नि.व.१३ ।

**रेचना (नी)** । स्त्री । कम्पिल्लके । কমলাগুঁড়ি । श.र. । रा.नि.व.१३ । कालाञ्जन्याम् । रा.नि.व.४ । दन्तिवृक्षे । रा.नि.व.६ । शुक्लत्रिवृति । শ্বেত তেউড়ী । मे. । तिलकपुष्पे । वै.निघ. । स्वर्णपत्रिकायाम् । সোণামুখী ।

**रेचनीयः** । त्रि । विरेचके ।

**रेची** । स्त्री । कम्पिल्लके । रा.नि.व.१३ । अङ्कोठवृक्षे । আঁকোড় গাছ । रा.नि.व.९ ।

**रेणुः (कः)** । पुं । पर्पटके । ক্ষেৎপাপড়া । रा.नि.व.५ । भा.मध्य.खं.चि.द्राक्षासवे । पांशौ । धूलौ । रेणुकायाम् । রেণুক গাছ । रा.नि.व.६ । सु.चि.३०अ. । च.सू.क. १स्नवक.२प. । तन्त्रान्तरे—"रेणुको मुद्गतुल्यो यो भद्रः स अग्नरा यतो । स्थूलो नरिचसङ्काशः गन्धकर्मणि गर्हितः । भानूपदेशसम्भूतः महत्वात्तिशोभनः । मिश्रितो मध्यमः प्रोक्तो जाङ्गलस्त्वधमो मतः ॥" भैष. ।

**रेणुकम्** । क्ली । तन्नामकफलविषभेदे । सु.कल्प.२अ. । रेणुकबीजे । च.द.यक्ष्म.चि.चन्दनादितैले ।

**रेणुकादम्बकः** । पुं । धूलीकदम्बे । रा.नि.व.९ ।

**रेणुका** । स्त्री । (Hyduocarpus wightianum. or Piper aurantiacum. Syn. H. Inebrians.) मरिचाकृतिसुगन्धद्रव्ये । রেণুক । प.मु. । हिं सम्भालुकाबीज । बम्ब. वेणुकबीज, कोन्ती । ता. येडी । तत्पर्य्यायाः, द्विजा हरेणुः हरेणुका क्षान्ता कौन्ती कपिला भस्मगन्धिका अभोटा कृतान्ता वरसुकरी वरमुख्ता यरा खरनादिनी नन्दिनी महिला राजपुत्री हिमा रेणुः पाण्डवी पाण्डुपत्री सुरर्णिका शिशिरा शान्ता हया हन्ता हैमगन्धिनी धर्मिणी कपिलोमा हैमवती । गुणाः—कटुः शीता कण्डूतिघ्नी तृष्णादाहविषघ्नी मुखबलकरी च । रा.नि.व.६ । अपिच—"रेणुका कटुका पाके तिक्तानुष्णा कटुर्लघुः । पित्तला दीपनी मेध्या पाचनी गर्भपातिनी ॥ बलास वात-श्रेष्म-तृट्-कण्डू-विषदाहनुत् ॥ भा. ।

**रेणुरूषितः** । पुं । गर्दभे । त्रिका. ।

**रेणुवासः** । पुं । भ्रमरे । त्रिका. । [ श.र. ।

**रेणुसारः (कः)** । पुं । कर्पूरे । त्रिका. ।

**रेतः** । क्ली । पारदे । मे. । शुक्रधातौ । रा.नि.व.१८ । जले ।

**रेतजा** । स्त्री । बालुकायाम् । বালি । भा. ।

**रेतनम्** । क्ली । शुक्रे । श.च. ।

**रेतोदोषः** । पुं । शुक्रदोषे ।

**रेत्यम्** । क्ली । पित्तले । भ.टी.नीलकण्ठः ।

**रेत्रम्** । क्ली । शुक्रे । पारदे । मे. । पियूषे । पटवासचूर्णे । আবীর ।

**रेवटम्** । क्ली । दक्षिणावर्त्तशङ्खे । शिग्रुतैले । कदलीफले । अजयपालः । पुं । शूकरे । वातुले । विषवैद्ये । अजयपालः । रामपुरी । त्रिका. । वंशे । বাঁশ ।

**रेवतः** । पुं । जम्बीरवृक्षे । জামীর । शटा. । आरग्वधवृक्षे । श.र. । (कः) द्वीपान्तरखर्जूरे । रा.नि.व.११ ।

**रेवतिका (ती)** । स्त्री । वटपत्रपाषाणभेदे । বড় পাথরকুচি । वै.निघ. । रावण. ९म शतके । बालरोगभेदे । लक्षणंयथा—"रक्ताक्षो हरितमलोऽतिपाण्डुदेहः श्यावो वा ज्वरमुखपाकवेदनार्त्तः रेवत्या व्यथिततनुश्च कर्णनाशं मृद्नाति ध्रुवमभिपीड़ितः कुमारः ॥" सु.उ.२७अ. । तन्नामनक्षत्रे । मे. ।

**रेवतीभवः** । पुं । शनैश्चरग्रहे । हे.च. ।

**रेवा** । स्त्री । नीलीवृक्षे ।

**रैवतः** । पुं । सोमलताभेदे । सु.चि.२९अ. । See सोम । आरग्वधवृक्षे । मे. । क्ली । द्वीपान्तरखर्ज्जूरिकायाम् । रा.नि.व.११ ।

**रैवतकः** । पुं । पारेवतवृक्षे ।

**रोकम्** । क्ली । छिद्रे । अम. ।

**रोगः** । पु । अलक्तके । আলতা । रा.नि.व.६ । कुष्ठौषधे । কুড় । मे. । व्याधौ । रा.नि.व.२० । तत्पर्य्यायाः,—रुक् रुजा उपघातः उपतापः व्याधिः गदः अमः आमः आमयः अपाटवः आतङ्कः मयः भङ्गः अर्त्तिः तमोविकारः ग्लानिः क्षयः अनार्ज्जवः मृत्युभृत्यः मान्द्यं आलस्यं विकरः विकारः विकृतिः दोषिकः शरीरजः । "रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।"

**रोगकाष्ठम्।** क्लो। पद्माङ्गचन्दने। वकम काठ। रा.नि.व.१२।

**रोगघ्न(ह्न)म्।** क्लो। औषधे। श.च.। त्रि। रोगहरे।

**रोगज्ञः।** पुं। वैद्ये। रा.नि.व.२०।

**रोगपतिः।** पुं। ज्वरे। वै.निघ.।

**रोगप्रे(श्रे)ष्ठः।** पुं। ज्वरे। रा.नि.व.२०।

**रोगभूः।** स्त्री। शरीरे। श.च.।

**रोगमार्गः।** पुं। शाखादिरोगवर्त्मनि। स त्रिविध शाखाः, मर्म्मास्थिसन्धयः, कोष्ठाश्चेति। तत्र शाखा रक्तादिधातवस्त्वक् च बाह्यरोगमार्गाः। मर्म्मास्थिसन्धिस्थानानि मध्यमरोगमार्गाः। कोष्ठा आभ्यन्तररोगमार्गाः। च.सू.११ष.।

**रोगमुरारिः।** पुं। नवज्वरे रसः। पाठः—"रसबलिफणिलौहव्योषताम्राणि तुल्यान्यथ रसदलभागो नाग एव प्रदिष्टः। भवति गदमुरारिश्चास्य गुञ्जार्द्धवारा...... ॥" पारा, गन्धक, विष, लौह, त्रिकटु, तामा प्रत्येक समभाग; सीस अर्द्धभाग। वटी २ रत्ति। अनुपान आदार रस। रस.कौ.।

**रोगराजः (ट्)।** पुं। राजयक्ष्मणि। यक्ष्मा रोग। रा.नि.व.२०।

**रोगलक्षणम्।** क्लो। रोगव्यञ्जकचिह्ने। रा. नि.व २०।

**रोगविज्ञानम्।** क्लो। येन येन रोगाणाम्। ज्ञानं भवति। तच्च त्रिविधं—"दर्शनस्पर्शनप्रश्नैर्व्याधिज्ञान त्रिधा मतम्। दर्शनान्मूत्रजिह्वाद्यैः स्पर्शनान्नाड़िकादिभिः। प्रश्नै दूतादिवचनादिति त्रेधा समुच्यते॥" भैष.।

**रोगविनिश्चयः।** पुं। माधवकृते रुग्विनिश्चायकग्रन्थे।

**रोगशान्तकः।** पुं। चिकित्सके। श.च.।

**रोगशिला।** स्त्री। मनःशिलायाम्। मनछाल। रा.नि.व.१३।

**रोगशिल्पी (इन्)।** पुं। स्वर्णलीवृक्षे। शोणालुगाछ। जटा.।

**रोगहम्।** क्लो। औषधे।

**रोगहरद्रव्यम्।** क्लो। मधुरादिरोगनाशकद्रव्ये। रोगनाशकद्रव्य। धन्वन्तरिः।

**रोगहारी (इन्)।** पुं। वैद्ये। र.नि.व.२०।

**रोगहेतुः।** पुं। रोगनिदाने। रा.नि.व.२०।

**रोगाधीशः।** पुं। राजयक्ष्मणि। रा.नि.व.२०।

**रोगासनः।** पुं। ज्वरे। वै.निघ.।

**रोगाह्वयम्।** क्लो। कुष्ठौषधे। कूड़। वै.निघ.।

**रोगितरुः।** पुं। अशोकवृक्षे। रा.नि.व.१०।

**रोगिवल्लभम्।** क्लो। औषधप्रलेपादौ। श.च.।

**रोगी (इन्)।** त्रि। रोगयुक्ते। अम। रोगिपरीक्षा—"दर्शनस्पर्शनप्रश्नैः परीक्षेदथ रोगिणम्। आतुरादि दृशा स्पर्शाच्छीतादेः प्रश्नतोऽपरम॥" भा.। नेत्र-जिह्वा-मूत्रादि परीक्षाः स्वस्वशब्दे मृग्याः।

**रोगोदकम्।** क्लो। मलिनदुर्गन्धादियुक्ते रोगजनकजले। See जलम्।

**रोग्यम्।** क्लो। रोगहिते। रोगयोग्ये। अपथ्ये। श.च.।

**रोचकः।** पुं। राजपलाण्डौ। छोट पेयाज। रा.नि.व.७। मातुलुङ्गवृक्षे। क्षुधायाम्। हे.च.। कदल्याम्। श.र.। ग्रन्थिपर्णविशेषे। भटेउर इति नेपाले। भा.। त्रिक। रुचिकारद्रव्ये।

**रोचकद्वयम्।** क्लो। लवणद्वये, विट्सैन्धवे। वै.निघ.ज्व.चि.चन्दनबलातैले।

**रोचनः।** पुं। पलाण्डौ। श्वेतशिग्रौ। श्वेत सजिना। रा.नि.व.७। करञ्जवृक्षे। करञ्ज गाछ। अङ्कोलवृक्षे। आकोड़ गाछ। रा.नि.व ९। दाड़िमवृक्षे। रा.नि.व.११।२३। निम्बवृक्षे। जम्बीरवृक्षे। मातुलुङ्गे। रा.नि.व.२३। व्यञ्जने। रा.नि.व.२०। कूटशाल्मलीवृक्षे। अम.। आरग्वधवृक्षे। शोन्दाल गाछ। रा.नि.व.११। स्त्री। गोरोचनायाम्। मा.। वंशरोचनायाम्। सु.चि. कदर.चि.। कृष्णशाल्मलीवृक्षे। रक्तकह्लारे। मे.।

**रोचनकः।** पुं। जम्बीरवृक्षे। रा.नि.व.११।

**रोचनफलः।** पुं। मातुलुङ्गवृक्षे। बीजपूरे। रा.नि.व.११। स्त्री (ला)। चिर्भटिकायाम्। फूटी। रा.नि.व.७।

**रोचनिका।** स्त्री। वंशलोचनायाम्। रा.नि. व.६। गुण्डारोचन्याम्। कमलागुंड़ि। हारा.।

**रोचनी।** स्त्री। दन्तिवृक्षे। रा.नि.व.६। आमलकीवृक्षे। रा.नि.व.११। गोरोचनायाम्।

रा·नि.व.१२ । श्वेतविवृति । गण्डारोचन्याम् । अम. । मनःशिलायाम् । हे·च· । चुक्रायाम् । চুকাপালং । भा·पू·१भ·शा.व· ।

**रोची** । स्त्री । पत्रशाकविशेषे, हिलमोचिकायाम् । हिञ्चे । श.र. ।

**रोटिका** । स्त्री । गधूममाषादिकृतपिष्टकविशेषे । रुटी । तत्साधनविधिः—"शुष्कगोधूमचूर्णं न किञ्चित्पुष्टाञ्च पोलिका । तप्तके खेदयेत्कृत्वा भूयोऽङ्गारेऽपि तां पचेत् । सिद्धेषा रोटिका प्रोक्ता गुणानस्याः प्रचक्महे ॥ रोटिका बलकृद्रुच्या वृंहणी धातुवर्द्धनी । वातघ्नी कफकृद्गुर्व्वी दीप्ताग्नीनां प्रपूजिता ॥" भा. ।

**रोदनम्** । क्ली । बालरोगे । क्रन्दने । मे. ।

**रोदनिका (नी)** । स्त्री । यासरूपे । দুরালভা । रा नि व ५ । अम· ।

**रोदिका** । स्त्री । लज्जालुकायाम् । লজ্জাবতী । कोषान्तरम् ।

**रोदिनी** । स्त्री । रक्तदुरालभायाम् । वै·निघ. ।

**रोधनम्** । क्ली । वायुजन्यव्रणवेदनायाम् । सु·सू·२२अ· ।

**रोधिनी** । स्त्री । लज्जायो । লজ্জাবতী । वै.निघ. ।

**रोध्र(क)म्** । क्ली । लोध्रकाष्ठे । লোধকাষ্ঠ । वा·सू.१५अ· अम्बष्ठादिव· । "रोध्रं धातकि-बिल्वपेशि" । पुं । लोध्रवृक्षे । লোধ গাছ । प.मु. । वा·सू·१५अ.रोध्रादिः । "रोध्रशावरकरोध्रपलाशाः ।"

**रोध्रपुष्पः (कः)** । पुं । तन्नामकशालिधान्यभेदे । गुणाः शालिवत् । सु·सू.४६अ. । मण्डलिसर्पविशेषे । सु·कल्प·४अ. । मधूकवृक्षे । মউল গাছ । रा·नि·व·११ । [६ ।

**रोध्रपुष्पिणी** । स्त्री । धातकीवृक्षे । रा.नि·व·

**रोध्रयुग्मम्** । क्ली । लोध्रद्वयी । एकः शावरः, अन्यः पट्टिकारोध्रश्च । वा·सू·१५अ· । "न्यग्रोधपिप्पलसदाफलरोध्रयुग्मम् ।"

**रोध्रशूकः** । पुं । रोध्रपुष्पाख्यशूकशाली । वा·सू·६अ· ।

**रोध्रादिगणः** । पुं । रोध्रशावरकरोध्रपलाशजिङ्गिणीसरलकट्फलयुक्ता कुत्सिताम्बः-कदली-गतशोकैलवालुपरिपेलवमोचाख्य । गुणाः—मेदःकफहरः योनिदोषहरः स्तम्भी वर्ण्यः विषघ्नश्च । वा.सू·१५अ· ।

**रोपः** । पुं । रोपणे । मे । क्ली । छिद्रे । हे·च. ।

**रोपणः** । पुं । पारदे । भूधामनवृक्षे । वै·निघ. । घृतादिपूरणे । अञ्जनभेदे । भा. ।

**रोपणचूर्णम्** । क्ली । नेत्ररोपणाञ्जनविशेषे । यथा—'शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा । गृह्णीयात् तज्जलं सर्व्वं त्यजेच्चूर्णमधोगतम् । शुष्कं तच्च जलं सर्व्वं पर्पटीसन्निभं भवेत् । विचूर्ण्य भावयेत् सम्यक् त्रिवेलं त्रिफलारसैः । कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत् ॥" भा· ।

**रोपणाञ्जनम्** । क्ली । कषायस्नेहसंयुक्ताञ्जने । तोड़. । तिक्तद्रव्यैरञ्जने । च·द.अञ्जनाधिकारे ।

**रोपणीवर्त्तिः** । पुं । कुसुमाभिधनेत्राञ्जनवर्त्तिभेदे । यथा—"अशीतितिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः । जातीपुष्पाणि पञ्चाशन्मरिचानि च षोड़श । सूक्ष्मं पिष्ट्वाम्बुना वर्त्तिः कृता कुसुमिकाभिधा । तिमिरार्ज्जुनशुक्राणां नाशिनी ..... ॥" भा· नेत्ररो. ।

**रोप्यशालिः** । पुं । छिन्ने पुनरुप्ते शाली । রোওয়াধান । गुणौ—रुच्यः मलवद्धकारकश्च । रा.नि·व·१६ ।

**रोप्यातिरोप्यः** । पुं । रोप्यशाली । রোওয়া শালি ধান । गुणाः—लघुः आशुपाकः अदाही दोषघ्न. बल्यः मूत्रवर्द्धनश्च । राज. ।

**रोमम्** । क्ली । पत्रे । তেজপত্র । मद·व.३ । जले । श च. ।

**रोमः (कः)** । पुं । महानिम्बे । पै.निघ. ।

**रोम (न्)** । क्ली । तमालपत्रे । তেজপত্র । मद·व·३ । लोम्नि । রোঁওয়া । रा·नि·व·१८ । तत्पर्य्यायाः,—लोम अङ्गजं त्वग्जं चर्मजं तनुरुट् तनुरुहं तनूरुहं । तच्च गर्भस्य षष्ठे मासि सञ्जायते ।

**रोमकम्** । क्ली । शाम्भरलवणे । रुमावतीनदीजातलवणे इति । र.सा.सं टीका । শম্বরলবণ । हिं शाकम्भरि । गुणाः—तीक्ष्णम् अत्युष्णं कटुतिक्तं दीपनं दाहशोषकरं ग्राहि पित्तकोपनञ्च । रा.नि. व.६ । कान्तलौहभेदे । रा.नि व.१३ ।

**रोमकन्दः** । पुं । पिण्डालौ । रक्तालौ । মৌ আলু । रा·नि·व·७ ।

**रोमकर्णः** । पुं । शशके । वै.निघ. ।

**रोमकाख्यम्** । क्ली । शाम्भरलवणे, मृत्तिकालवणे । कान्तलौहे । वै.निघ. ।

**रोमकूपः** । पुं । रोमविवरे ।

**रोमकेशरम्** । क्ली । चामरे । त्रिका. ।

**रोमगुच्छ(क)म्** । क्ली । चामरे । हे.च. । जटा. ।

**रोमतच्चरी** । स्त्री । अरोमस्त्रियाम् । रस.र. क्षुद्ररो.चि. ।

**रोमद्वीपः** । पुं । कृमौ । वै.निघ. । रक्तजनितसूक्ष्मक्रिमिभेदे । "केशादा रोमविध्वंसा रोमद्वीपा उडुम्बराः । षट् ते कुष्ठैककर्म्माणः सहसौरसमातरः ॥" मा.नि. ।

**रोमन्थः** । पुं । पशूनां चर्व्वितचर्व्वणे । जाओर-काटा । अम. । [ निघ. ।

**रोमफला** । स्त्री । डिण्डिशे । ट्याड़श । वै.

**रोमभूमिः** । स्त्री । चर्म्मणि । रा.नि.व.१८ ।

**रोमलता** । स्त्री । रोमराज्याम् । श.च. ।

**रोम(क)लवणम्** । क्ली । शाम्भरलवणे । सौवर्च्चललवणे । र.मा. ।

**रोमवल्ली** । स्त्री । कपिकच्छ्वाम् । आलाकुशी । रा.नि.व.३ ।

**रोमविकारः** । पुं । रोमाञ्च । हला. ।

**रोमशम्** । क्ली । पत्रे । तेजपत्र । मद.व.२ । पुं । पिण्डालुनामकन्दशाके । रा.नि.व.७ । मेषे । भेड़ा । श.च. । कोङ्कणदेशप्रसिद्धे कुम्भीवृक्षे । रा.नि.व.९ । मन्दविषवृश्चिकभेदे । सु.कल्प.८अ. । शूकरे । रा.नि.व.१९ ।

**रोमशफला** । स्त्री । देवताड़वृक्षे । देयाताड़ा ।

**रोमशफलः** । पुं । डिण्डिशवृक्षे । ट्याड़श । भा.पू.१भ.शा.व. । [ निघ. ।

**रोमशमूलिका** । स्त्री । हरिद्रायाम् । वै.

**रोमशा** । स्त्री । कोङ्कणे कुपहोति ख्याते दग्धानामवृक्षे । रा.नि.व.९ । कर्कटिकायाम् । काँकुड़ । त्रिका. । अलगर्द्दनामसविषजलौकाभेदे । अलगर्द्दजोंक । सु.सू.१३अ. । मांसरोहिण्याम् । वै.निघ. ।

**रोमशातनम्** । क्ली । रोम्णाम् उद्धंसने । वै. निघ. । तदौषधं स्नुहीक्षीरेण भल्लातकचर्णः । सु.चि.१अ. । [ भा. ।

**रोमशुकम्** । क्ली । स्थौणेयके । गेंटेला ।

**रोमहरणम्** । क्ली । हरिताले । र.सा.सं. ।

**रोमहर्षः (कः)** । पुं । रोमाञ्चे । मा.नि. । "रोमहर्षोऽरुचिस्तमः ।" विभीतकवृक्षे । वै.निघ. ।

**रोमहर्षणम्** । क्ली । रोमाञ्चे । अम. । पुं । विभीतकवृक्षे । मे. ।

**रोमाख्यम्** । क्ली । शाम्भरलवणे । वै.निघ. ।

**रोमाञ्चः** । पुं । रोमहर्षे । अम. ।

**रोमाञ्चिका** । स्त्री । रुदन्तीनाममहाक्षुपे । रा.नि.व.५ ।

**रोमान्ती** । स्त्री । क्षुद्रमसुरिकारोगभेदे । हाम । "रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः । कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्व्विकाः ॥" मा.नि. । भैष.मसूरि.चि. ।

**रोमाली** । स्त्री । रोमराजिकायाम् । वयःसन्धौ । श.मा. ।

**रोमालुः** । पुं । पिण्डालौ । रा.नि.व.७ । कपिकच्छौ । आलाकुशी । रा.नि.व.३ ।

**रोमालुविटपी (इन्)** । पुं । कोङ्कणदेशप्रसिद्धकुम्भीवृक्षे । रा.नि.व.९ ।

**रोमावर्त्तः** । पुं । तन्नामकमर्म्मस्थाने शिरासन्धिसन्निपातरूपे । सु.शा.६अ. ।

**रोमावली** । स्त्री । नाभेरूर्द्ध्वं रोमराज्याम् । हे.च. ।

**रोमाश्रयफला** । स्त्री । झिञ्झिरीटाक्षुपे । रा.नि.व.४ ।

**रोमेश्वरः** । पुं । वैद्यामृतग्रन्थकारे ।

**रोलः** । पुं । आर्द्रशुण्ठ्यां । फलविशेषे, पानीयामलके । श.च. । तालीशपत्रे । कश्चित् ।

**रोलम्बः** । पुं । भ्रमरे । त्रिका. ।

**रोषणः** । पुं । परूषकवृक्षे । फलसा गाछ । पारदे । निकषोपले । मे. । ऊषरभूमौ । हे.च. ।

**रोषिणी** । स्त्री । लज्जालुकायाम् । लज्जावती लता । वै.निघ. ।

**रोहः** । पुं । अङ्कुरे । हे.च. । [ व्याक. ।

**रोहणम्** । क्ली । शुक्रे । रा.नि.व.१८ । जन्मनि ।

बृंहणश्चैव विष्टम्भी दुर्जरो घनः। ज्वरिणां विषमाग्नीनामतीसारे न दीयते ॥" अत्रि.२अ.। इति वनरोहितगुणाः।

**रोहिता**। स्त्री। मञ्जिष्ठायाम्। वै.निघ.।

**रोहितेयः**। पुं। रोहितकवृक्षे। रत्नकोषः।

**रोहिष(स)म्**। क्ली। (Andropogon schoenanthus. Syn. A. Martini) The geranium grass. गन्धतृणे, कत्तृणे। रामकर्पूर। हिं अगियाघास, मिरचियागन्ध, रसघास। वम्. रोहिषे। उत्. पाल खरि। तत्पर्य्यायाः,—कत्तृणं रोहिषं देवजग्धं सौगन्धिकं तथा। भूतिकं ध्याम पौरञ्च श्यामकं धूपगन्धिकम् ॥ गुणाः—रोहिषं तुवरं तिक्तं कटुपाकं व्यपोहति। हृत्कण्ठव्याधिपित्तास्रशूलकासकफज्वरान् ॥ भा.। रा.नि.व.८। सि.यो., च.द.अ भा.चि.पञ्चगव्यघृते। भा.ज्व.चि.। "रक्तरोहिषधन्वयवासकयासाः।" पुं। रोहितकमृगे। रक्तचित्रके। ज.द.।

**रोही** (इन्)। पुं। रोहितकवृक्षे। (रोहा, ब्रह्मना गाछ। र.मा.। सु.चि.२०अ.। महाकरञ्जे। वै.निघ.। अश्वत्थवृक्षे। वटवृक्षे। मे.।

**रोहीतकलौहम्**। क्ली। प्लीहाधिकारे लौहम्। पाठः—"रोहीतकसमायुक्तं त्रिकत्रययुतन्त्वयः। प्लीहानं हन्ति...... ॥" र.सा.सं.।

**रौद्रः**। पुं। आतपे। मे.। तत्पर्य्यायाः,—घर्म्मः प्रकाशः द्योतः आतपः। गुणाः,—आतपः स्वेदमूर्च्छानपित्ततृष्णाक्लमभ्रमान्। दाहवैवर्ण्यतां कुर्य्यात् ॥ भा.। हेमन्तर्त्तौ। हे.प।

**रौद्ररसः**। पु। अर्ब्बुदाधिकारे रसः। पाठः—"शुद्धसूतं समं गन्धं मर्द्यं यामचतुष्टयं। नागवल्लीरसैर्युक्तं मेघनादपुनर्नवैः। गोमूत्रपिप्पलीयुक्तं मर्द्यं सद्य पुटेल्लघु। रौद्रः...॥" १ र. लिहेत्। र.सा.सं.।

**रौद्री**। स्त्री। रुद्रजटालतायाम्। रा.नि.व.३।

**रौप्यम्**। क्ली। रजतधातौ। रूपा। हिं चांदि। गुणाः—"रौप्यं शीतं कषायाम्लं स्वादुपाकरसं सरं। वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित्। प्रमेहादिकरोगांश्च नाशयत्यचिराद् ध्रुवम्। सारं शरीरस्य करोति तापं विड्घनं यच्छति शुक्रनाशम्। वीर्य्यं बलं हन्ति तनोश्च पुष्टिं महागदान् पोषयति ह्यशुद्धम् ॥" "गुरु स्निग्धं मृदु श्वेतं दाहे छेदे घनक्षमं। वर्णाढ्यं चन्द्रवत् स्वच्छं रौप्यं नवगुणं शुभम्। कठिनं कृत्रिमं रूक्षं रक्तं पीतदलं लघु। दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम् ॥" भा.पू.१म.धा.व.। भस्म यथा—"हिङ्गुलकत्थलिमूलनिर्मितकज्जलसममर्द्दपिष्टं रूप्यदलं। सिकतायन्त्रे वा गजपुटाद्भस्म भवति गाढाग्नौ। द्विभागगन्धकैकभागरसाभ्यां कज्जलिकां कृत्वा जम्बीरादिरसैस्तप्यपत्रं त्रिधा गजपुटे पचेत् ॥" सा.कौ.। शोधनञ्चास्य स्वर्णवत्। तथा—"नागेन टङ्कणेनैव द्रावितं शुद्धिमिच्छति। रजतं दोषनिर्मुक्तं किं वा क्षाराम्लपाचितम् ॥" येन केनचिदम्लरसेनैकभागेन हरितालं प्रहरं सम्मर्द्य त्रिभागरौप्यपत्राणि विलिप्य मूषापुटे निरुध्य त्रिंशत्करीषैः चतुर्द्दश पुटानि देयानि। भा.। रौप्यधातुमले।

**रौप्यमलम्**। क्ली। रौप्यमाक्षिके। वै.निघ.। २भ.पाण्डु.चि.त्रिफलादिलिहे।

**रौप्यमाक्षिकम्**। क्ली। स्वनामख्यातोपधातौ। (रोपामाक्षिक। See तारमाक्षिकम्।

**रौम(क)म्**। क्ली। रौमकलवणे, शाम्भरलवणे। अ.टी.रमा.।

**रौमलवणम्**। क्ली। शाम्भरलवणे। र.मा.।

**रौहिट्**। पुं। रोहिषमृगे। अ.टी.भ.।

**रौहिणः**। पुं। रक्तचन्दने। चन्दनवृक्षे। त्रिका.।

**रौहिणेयम्**। क्ली। मरकतमणौ। रा.नि.व.१३।

**रौहिष(षेय)म्**। क्ली। कत्तृणे, रोहिषतृणे। पु। रोहितमत्स्ये। मृगविशेषे। अम.। स्त्री (षी)। दूर्व्वायाम्। मृग्याम्। उणा.।

**रौही** (इन्)। पुं। रोहितकवृक्षे।

**रौक्षम्**। क्ली। रूक्षतायाम्। सु.।

**रौक्ष्यम्**। क्ली। वायुगुणभूयिष्ठत्वे, स्नेहराहित्ये। रूक्षता। सु.।